SARASVATĪBHAVANA-STUDIES

[ Vol. 37 ]

# VYĀKARAṆE NĀGEŚABHAṬṬAKṚTIṢU TANTRASYA PRABHĀVAḤ

BY

**DR. RĀJANĀTHA TRIPĀHṬĪ**

**Lecturer in Āgama Department**

**Sampurnanand Sanskrit University**

**Varanasi**

VARANASI

1988

सरस्वतीभवन-अध्ययनमाला

[ ३७ ]

# व्याकरणे नागेशभट्टकृतिषु तन्त्रस्य प्रभावः

लेखकः सम्पादकश्च

**डॉ० राजनाथत्रिपाठी**

प्राध्यापकः,

आगमविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

**वाराणस्याम्**

२०४५ तमे वैक्रमाब्दे　　१९१० तमे शकाब्दे　　१९८८ तमे ख्रैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

▫

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

▫

प्राप्तिस्थानम् :—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

▫

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्—५२.०० रूप्यकाणि

▫

मुद्रकः—
**विजय-प्रेस,**
सरसौली, वाराणसी ।

# शिवसङ्कल्पः

**"नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो, नमो वाचे, नमो वाचस्पतये, नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः"**

—तैत्तिरीयारण्यके 4.1.1

अस्मद्विश्वविद्यालयस्य सांख्ययोगतन्त्रागमविभागे शैवागमप्राध्यापकपदमधितिष्ठद्भिः डाक्टर-राजनाथत्रिपाठिमहोदयैर्विद्यावारिध्युपाधये स्वीकृतपूर्वः शोधप्रबन्धः सम्प्रति प्राकाश्यमुपैतीति नो मनसि जायते मुन्महती। तरुणा इमे ग्रन्थलेखका व्याकरणे आगमेषु च कृतसमानपरिश्रमा इत्यनयोरुभयोः शास्त्रयोः साम्यवैषम्यपरीक्षणकर्मणि नूनमलंकर्मीणा इति प्रतीमः। प्रबन्धेऽस्मिन्नाधुनिकेन शोधपथेन संचरमाणाः त्रिपाठिमहोदयाः स्वाध्यायफलं स्वीयमितरेभ्यः पाठकेभ्य उपजिहीर्षन्तीति नूनमिमेऽभिनन्दनीयोपक्रमाः। एतेषामुभयशास्त्रसन्तोलनपटीयसी प्रज्ञा ग्रन्थेऽस्मिन् परिस्फुरति तत्र तत्रेति स्वयमेवाध्यक्षीकुर्वन्तु सहृदयाः पाठकाः।

नेदमतिरोहितं पण्डितेभ्यो यदप्रतिमप्रतिभाभास्वरः श्रीमान्नागेशभट्टः शब्दशास्त्रे लब्धवर्णोऽपि, महाशाब्दिकत्वेन लब्धकीर्तिरपि शास्त्रान्तरगहनेष्वपि स्वच्छन्दं विजहारेति, पूर्वाचार्योदीरितानामेवार्थानां पिष्टपेषणमात्रेण न सन्तुतोषेति, "अन्धेनैव नीयमाना यथान्धाः" इति श्रुत्यापि जिहासितां गतानुगतिकतां न जातु पुरश्चकारेति, स्वोपज्ञेषु ग्रन्थेषु पदे पदे किमपि नूतनं मननपरिनिष्पन्न वस्तु यथायथमाविश्चकारेति च।

मूलतो वैयाकरणोऽप्यसौ सुमेधसामग्रणीः वेदान्तादिशास्त्रान्तरसिद्धान्तरहस्यानि न केवलमाचकलद्यथातथं, किन्तु तत्तच्छास्त्रसिद्धान्तान् क्वचित् क्वचित् तथा तथा परिश्चकार संचस्कार वा, यथा तच्छास्त्रपरिनिष्ठिता विद्वांसोऽपि नोत्सेहिरे परिष्कर्तुं संस्कर्तुं वा। नायमवसरोऽस्य विषयस्य प्रतानायेति दिङ्मात्रमिह निगद्यते।

अस्त्यद्वैतवेदान्तसिद्धान्तवर्त्मनि शाङ्करे मूलभूतं तत्त्वमविद्या नाम। सा चेयं भामतीप्रस्थानप्रवर्तकैः चुलुकीकृतसारस्वतसागरसारैः वाचस्पतिमिश्रैः द्वेधा प्रतिष्ठापिता—एका भावरूपा मूलाविद्या; द्वितीया चाग्रहणात्मिका भ्रमाध्यासादिशब्दपरिभाषिता कार्यरूपा, स्वयं भाष्यकारैरध्यासभाष्ये "तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते" इत्युपसंहृता च। अत एव भामत्या उपक्रममङ्गलपद्ये "अनिर्वाच्याविद्याद्वितयसचिवस्य" इत्यादौ प्रथममेव प्रतिज्ञातमविद्याद्वयं वाचस्पतिमिश्रैः। अत एव चैतत्पद्यव्याख्यायां कल्पतरौ—"एका ह्यविद्या अनादिभावरूपा देवताधिकरणे वक्ष्यते, अन्या पूर्वपूर्वभ्रमसंस्कारः, तदविद्याद्वितयम्"—इति, देवताधिकरणे च पुनः—"भ्रमात् संस्कारतश्चान्या मण्डूकमृदुदाहृतेः। भावरूपा माताऽविद्या स्फुटं

वाचस्पतेरिह ॥"— इति च कण्ठोक्तैः शब्दैर्भावरूपा अविद्या राद्धान्तिता । एवं स्थितेऽपि सर्वतन्त्रस्वतन्त्रवाचस्पतिमिश्रोपज्ञे भामतीप्रस्थाने, नागेशभट्टा महता परिकरबन्धेन भावरूपामविद्यामेनां खण्डयामासुः । भावरूपाविद्याप्रत्याख्यानपक्षोऽयं नागेशोपज्ञः आधुनिकेन विदुषा सुब्रह्मण्यशर्मणा **मूलाविद्यानिरास** इत्याख्येन ग्रन्थेन बहुधा पुरस्कृत्य प्रपञ्चितः, पश्चाच्चानेनैव लेखकेन स्वीकृतसंन्यासाश्रमेण सच्चिदानन्दसरस्वती-नाम्ना बहुभिर्ग्रन्थान्तरैः समर्थितश्चाभूत् । परस्तादपि अन्यैराधुनिकैर्विद्वद्भिः **मूलाविद्या भाष्यवार्तिकविरुद्धा, मूलाविद्या भाष्यवार्तिकसंमता** इत्यादिभिः ग्रन्थैः नागेशभट्टो-पक्रान्तोऽयं वादः मण्डनखण्डनविषयतामुपनीत इत्येतदपि कामं प्रमाणयति नागेश-भट्टस्य वादप्रतिभायाः सारवत्ताम् । एतद्ग्रन्थद्वयप्रकाशनाद् बहोः कालात् प्रागेवास्मद्-गुरुभिः सविस्तरं सयुक्तिकं सोपष्टम्भं च बहुप्रमाणोपन्यासपुरःसरं बहुधा प्रत्याख्यातः पक्षोऽयं पञ्चपादिकाविवरणस्य टीकाचतुष्टयसहितस्य मद्रपुरीतः १९५८ वर्षे प्रकाशितस्य बृहद्भूमिकायाम् । तदस्मिन् विषये विस्तराद् बिभ्यतोऽपि वयं विस्तरे पतिताः स्म इत्यलं प्रसक्तानुप्रसक्त्या ।

नागेशभट्टादीनां प्राचीनानां पण्डिततल्लजानामयमेवासीन्महानुत्कर्षो यदमी सर्वेऽपि बहुशास्त्रनिष्णाता अभूवन् । अत एव मूलतो वैयाकरणस्यापि सतः श्रीनागेश-भट्टस्य कृतिषु शास्त्रान्तरसिद्धान्ता अपि पदे पदे पदं लभन्ते । अत एवेदं नितरां स्थाने यद् व्याकरणे तन्त्रागमे च युगपद् आत्मानं व्यापारयन्तोऽस्य प्रबन्धस्य प्रणेतार-स्त्रिपाठिनो नागेशप्रणीतेषु व्याकरणग्रन्थेषु तन्त्रागमसिद्धान्तानां धारामन्तःप्रवहमाना-मन्वेष्टुं कृतपरिकराः सज्जन्ते प्रबन्धेऽस्मिन् ।

अस्य ग्रन्थस्यान्तःसारं त एव तुलयितुमलं भविष्यन्ति, ये शास्त्रद्वयेऽपि कृततीर्था भवेयुः । तादृशा विद्वांसो ग्रन्थमेनं परिशील्य परितोषमीषदेष्यन्तीति भृशमाशास्महे । ये चान्ये तरुणा जिज्ञासवो नागेशभट्टस्य शास्त्रान्तरवैदग्धीदिग्धां मननधोरणीं परिमातुं कामयन्ते तेऽप्येतद्ग्रन्थाभ्यासेन स्वेहितं साधयितुं प्रभविष्यन्तीति दृढं विश्वसिमः ।

ग्रन्थकर्तॄन् त्रिपाठिनः प्रकृत्य चेदमेवाशास्महे यदिमे स्वाध्यायप्रवचनपरायणा नूतनग्रन्थप्रणयनप्रसिता उत्तरोत्तरं समेधन्तामिति सर्वं शिवम् ।

**वाराणसी,**
**18. 7. 1989**
**गुरुपूर्णिमा**

**( वि० वेङ्कटाचलम् )**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

# शुभाशीर्वचांसि

अमरीकबरीभारभ्रमरीमुखरीकृतम् ।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥

वर्तते किल सूक्तिरेषा प्राचीना नवीना च **"यः लिखित पठति च स भवति विद्वान्"** इति । तत्र यथा श्रुते **"पाठक्रमादर्थक्रमो बलीयानिति"** न्यायेन पूर्वं यः पठति स भवति विद्वान् इति योजना विधेया । **"यः पठति लिखित स भवति विद्वान्"** इत्याकारे वाक्यविन्यासे तु न कोऽपि प्रयासो विधेयः । पदवाक्ययोरर्थ-ग्रहणानुकूलव्यापाररूपस्य पठनस्याक्षरारम्भभित्तिकस्य सम्पत्तौ सत्यामपि तस्य प्रामाण्यस्थापनं तावन्न भवति यावल्लेखसम्बद्धत्वं नोपैति । अतः पठनं लेखनञ्च द्वयमपि परमावश्यकम् । इयं तु सूक्तिः साधनावस्थायाः, स भवति विद्वान् इत्युक्तेः ।

किन्तु वैदुष्ये सम्पन्नेऽपि परार्थानुभवाय लेखनमावश्यकम्, अध्ययनावस्थायां स्वार्थानुभवायाध्ययनेन सह लेखनं विहितम् । ज्ञानस्य स्थायित्वं स्मृतियोग्यत्वञ्च भवेदेतदर्थं तदानीमध्ययनं लेखनञ्च विहितम् । तदुत्तरन्तु अन्येषामपि तद्विषयकं ज्ञानं भवेल्लोकोपकारश्च भवेदेतदर्थमनादिकालात्तत्तद्विषयकज्ञानवद्भिर्महद्-भिर्मनीषिभिरनेके ग्रन्था रचिताः । अतोऽत्रेदमाकूतं यद् विद्यारम्भावस्थायां तत्परिपाकावस्थायाञ्च लेखनमावश्यकम्, किन्तु तत्परमं कठिनम् । अत एवोक्तम् **"शतं वद एकं मा लिख"** इति । तत्र **'न हि निन्दा निन्द्यं निन्दितुं प्रवृत्ता, किन्तु विधेयं स्तोतुमि'**ति न्यायेन लेखने श्रमो विधेयो येन कथमपि कदाचिदपि लेखे वैपरीत्यं न भवेत् । अत एव श्रीमद्भिरुदयनाचार्यैः श्रीमद्वाचस्पतिमिश्रलेख-व्याख्यानावसरे भगवती सरस्वती प्रार्थिता येन पदार्थनिरूपणे प्रमादो न भवेत् । व्याख्या तु अप्रतिपत्तिनिरासाय अप्रतिपत्तिनिराकरणाय वा भवति । तौ च दोषौ यदि कृतेऽपि व्याख्याने वर्तेते तर्हि तद् वैयर्थ्यमनर्थकारित्वमपवादापत्तिश्चेति ध्रुवम् । अत एवोदयनोक्तिरियं परं मान्यतां भजते—

मातः सरस्वति तवाङ्घ्रियुगं प्रणम्य
भूयो विधाय विनयं विनिवेदयामि ।
वाक्चेतसोर्मम तथा भव सावधाना
वाचस्पतेर्वचसि नो स्खलतो यथैते ॥ इति ।

**प्रकृतमनुसरामः**। प्रस्तुतश्चायं ग्रन्थः 'व्याकरणे नागेशभट्टकृतिषु तन्त्रस्य प्रभावः' इति नामा मया प्रायशो दृष्टोऽनुमतोऽधिगतश्च। अस्य लेखकाः डॉ० राजनाथत्रिपाठिनो विद्वांसः। पूर्वं प्रदर्शितकार्यकारणभावानुसारेण सारेणेदं वक्तुं शक्यं यदायुष्मन्तो मेधाविनः शिष्टाः सदा पठनपाठनलेखनोपासनप्रसक्तचेतस एते सर्वान् तान् गुणानविकलं धारयन्ति। एभिरत्र ग्रन्थे तन्त्रागमविषया सप्रमाणं सोल्लेखं निरूपिताः। दृष्ट्वा ग्रन्थमिमं मोमोत्ति चेतः। तथा लेखनेन प्रदर्शयितुं न शक्यते, किन्तु तत्रैव द्रष्टव्यम्। आचार्यकामन्दकेन प्रोक्तं **"यो यमर्थं विजानीयात् तं तत्र विनियोजयेत्"** इति। तदनुसारेण सम्पूर्णानन्दसंस्कृतविश्वविद्यालये तन्त्रागमविभागे प्राध्यापकपदमलङ्कुर्वद्भिरेभिः स्वकर्तव्यं सम्यक्तया अनुष्ठीयते। अस्मिन् कराले कलिकाले यदा जनाः प्रायशः कर्तव्यच्युता दरीदृश्यन्ते, सर्वत्र कर्तव्यानवधारणरूपं जाड्यं चरमसीमानं परिचुम्बति, अध्ययनाध्यापनमन्त्रानुष्ठाननित्यकर्मपरित्यागौधत्यसाम्राज्यं विराजते तदैव केचन सत्कर्मसाद्गुण्यबीजभूताः कुलीनाः स्वधर्मलीना अपि सन्ति, **'एष धर्मः सनातनः'** इत्युक्तेः।

अहन्तु भगवन्तं भवानीपतिं मातरमन्नपूर्णाञ्चाभ्यर्थये यदेनान् त्रिपाठिनः दीर्घजीविनो यशस्विनो विधाय परमाभ्युदयविशिष्टान् कुर्यास्तामिति।

**डॉ० देवस्वरूपमिश्रः**

वरिष्ठाचार्यो वेदान्तविभागीयाचार्योऽध्यक्षश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये,
वाराणस्याम्।

वाराणस्यां
**विजयदशम्याम्,**
वि० सं० २०४५

# मङ्गलाभिशंसनम्

श्रीराजनाथत्रिपाठिना प्रणीतो 'व्याकरणे नागेशभट्टकृतिषु तन्त्रस्य प्रभावः' इत्याख्यो ग्रन्थो मया सप्रीति सतोषं चावालोकि। सत्यमेव ग्रन्थकृता तन्त्रशास्त्राणां व्याकरणशास्त्रैः सह सामरस्यं वर्तत इति प्रतिपादितम्। वस्तुतः तन्त्रशास्त्राणि व्याकरणशास्त्राणि च समानमूलानि। एतेषां मूलं केवलमागमेष्वेव न विद्यतेऽपितु निगमेष्वपि विद्यते। यस्याः सहस्राक्षर्या वाचो निरूपणं विंशतिवारोच्चारितपञ्चाशन्मातृकासङ्कलनेन श्रीविद्याग्रन्थेषु दरीदृश्यते, सैव सहस्राक्षरी वाक् संहिताभाग एव निरूपिता। यदक्षरं शब्दतत्त्वं हरिणा ब्रह्मत्वेन निरूपितम् तदेव बृहदारण्यकोपनिषदि **'सर्वं खलु ह्यखिलाकाशे ओतप्रोतमाकाशश्च खल्वक्षर-ओतप्रोतमि'** ति दिशा प्रागेव सूत्ररूपेणोपन्यस्तम्। सृष्टिप्रलययोः क्रमः प्राणापानप्रक्रियाभ्यां समनुक्रियते। बिन्दुरेव समुत्थाय संविभज्य यथाक्रमं वैखरीरूपेण तदनन्तरमर्थरूपेण विवर्तते, सकलमर्थजातं सकलं चोच्चारितशब्दजातं यथाक्रमं सूक्ष्मात्सूक्ष्मतरे रूपे विलीयमानं बिंदौ प्रविलीयते। एतदेव दैनन्दिनसन्ध्योपासनाद्यनुष्ठानानां प्रयोजनं यदनुदिनं सृष्टिस्थितिसंहारलीलाया अनुभवो जनं साकल्यात्मकेन भावेन सम्भरतु।

नागेशभट्टपादाः सकलविद्यावदाताः शब्दशास्त्रनिरूपणे साकल्यात्मिकामेव दृष्टिं प्रसारयन्ति। प्रस्तुतग्रन्थकृता विविधानां तन्त्रशास्त्रगतसन्दर्भाणां सम्यगाकलनपूर्वकं नागेशप्रतिपादितसिद्धान्तैः सहैकरस्यं सोपपत्ति प्रादर्शि, कुत्रापि कोऽपि पूर्वग्रहो नाभिलक्ष्यते। यत्र तत्र या या विप्रतिपत्तयः संलक्ष्यन्ते, ता अपि **'न गजनिमीलिका'** न्यायेन परिवर्तिता अपि तु तासामपि समाधानं ग्रन्थे दृश्यते। एतत्सर्वं महते मोदाय परितोषाय च।

आयुष्मान् राजनाथः सततमेवमेव विद्याभ्यासपरायणो भूयादिति हृदा कामयमानो विरमामि।

काश्यां
श्रावणीपूर्णिमायाम्,
वि० सं० २०४५

**डॉ० विद्यानिवासमिश्रः**
कुलपतिः, काशीविद्यापीठस्य।

# उपोद्घातः

भारतीया हि संस्कृतिर्निगमागममूला । निगमो वेदः, आगमश्च वेदौपयिक-स्मृत्यनुमोदितो लोककल्याणकरः पन्थाः । आगमस्यैवापरन्नाम तन्त्रमिति, तन्त्रागमस्य परस्पराभेदेन प्रायः सर्वत्र शास्त्रे व्यवहारः । अतः शास्त्रेऽत्र 'विषमप्यमृतायते' 'भोगोऽपि योगायते, कुतश्चैतदित्याकाङ्क्षायामस्य शास्त्रस्य प्रवक्ता साक्षात् शिवः, श्रोत्री सर्वानुग्राहिका साक्षात् परम्बा पार्वती, विषयश्च साक्षात् वासुदेवः । एवं भूत्वेहपरलोकानायासेन साधनक्षमोऽयमागममार्गः । उक्तञ्च रुद्रयामले —

आगतं शिववक्त्रेभ्यो गतञ्च गिरिजानने ।
मतं हि वासुदेवस्य तस्मादागम उच्यते ॥

आगमतन्त्राणां प्रवक्तरि भगवति शिवे विषामृतयोः सम्मेलनं दृश्यते । मूलतस्तयोः सामरस्यमपि सुस्पष्टं परिलक्ष्यते । यथा हि

यच्छम्भोरहिभूषणं शिरसि वा कण्ठे भृशं राजते
तत्पाशेन विषं गले च विधृतं गोपायिता स्वधुनी ।
विज्ञानं नयतामृतेन हि पथा भालेन्दुमूर्ध्वं मृते-
र्गङ्गां विष्णुपदोद्भवां किमितरद् येनाहिराशीविषः[1] ॥ इति ।

अयम्भावः—शिरसि कण्ठे वा अहिर्भूषणमपि पाशरूपो भूत्वा विषं शङ्करगले विधारयति । तेनैव पाशेन जटाकलापेषु गोपायिता स्वर्धुनी । सम्यग्योगक्षेमाय तदेव विज्ञानं समाश्रयणीयं लोकैर्यदृतेन पथा मृतेरूर्ध्वं सुधासन्दोहसागरं श्रीशङ्करभालेन्दुमेव नयति जटामात्रेषु गोपायितां गङ्गामपि, या गङ्गा सत्यपि स्वयं विष्णुपादोद्भवा 'तद्विष्णोः परमं पदम्' तस्य ध्रुवैकपथप्रदर्शिनी भवति । शिववक्त्रेभ्यो विनिःसृता या आगमवाणी सेयमध्यात्मगङ्गा । सैव पुनः शिवशक्तिसामरस्यविज्ञानप्रसूर्जननी । किमन्येन विज्ञानेन, येन अहिराशीविष एव भवेल्लोकानां भवाय क्षयाय च । अनेनागमविज्ञानस्य जडविज्ञानवादिभ्यो विलक्षणताऽपि सूचिता । उभयतः प्रयोगविधानसामान्येऽपि प्रयोगतन्त्रभेदलक्षितव्यस्यार्थस्यापि भेद इति विचारणीयम् । एतद्भेदद्वयवशादेकेनामृतत्वस्य सनातनः पन्थाः प्रवर्तितः, अपरस्मिन् बाह्येन्द्रियभोगोपकरणबाहुल्यसृष्टिसामर्थ्यगौरवे सत्यपि लोकानां महाविनष्टेरेव भयं क्रमवर्धमानम् । प्रयोगविज्ञानेषु बाह्यभोग्य-

१. सारस्वतीसुषमाया—२० वर्षे १ अङ्कः—पृ० ९ ।

संग्रहसौविध्यं न वा परीक्षालब्धतथ्यतत्त्वादीनां चमत्कारित्वं तेषामुपादेयत्वप्रतिपादनायालम्, मुख्यपुरुषार्थनिर्वहणत्वेनैव सर्वेषां प्रयोगाणामर्थप्रतिपत्तिव्यवस्थापनात्। तथापि तन्त्रप्रयोगेषु समीक्षापरीक्षाजन्यप्रत्ययस्यापि प्रामाण्यगौरवमस्त्येवेत्यत्रागमविज्ञानस्याधुनिकबहिर्विज्ञानादिना सह साजात्यम्, यथासम्भवं पारस्परिकोपकारकत्वमपि सुधीभिर्नोपेक्षितव्यम्।

## आगमशब्दार्थः

'आगतं' 'गतं' 'मतं' चैषामक्षराणां शब्दानां वा सम्मेलनेन आगमशब्दः सम्पद्यते। एतेन 'आ समन्तादर्थं शिवादिधरण्यन्ततत्त्वजातं गमयति पारमार्थिकस्वरूपतस्तथाविधस्वभावतश्च बोधयति साक्षात्कारयतीत्यागमो नाम। शक्तिरेव शिवमारभ्य क्षितिपर्यन्तं षट्त्रिंशत्तत्त्वेन विलसतीत्यनेन परशक्तिरेवागमपदव्यपदेश्या। स चागमो ज्ञानरूपोऽनन्तशास्त्रेषु व्यवह्रियते। तदुक्तम्—

आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः।
शास्त्रं शब्दात्मकं सर्वम्[1]··· ··· ··· ··· ··· ···॥ इति।

किञ्च, बहिर्दृश्यमानं सर्वमपि वस्तु चैतन्यम्, चितिशक्तेरुत्पन्नत्वादिति प्रत्यभिज्ञादर्शनपक्षमाश्रित्यैव भगवान् भर्तृहरिरप्याह—

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते[2]॥ इति।

अत आगमो ज्ञानस्य पर्यायः। ज्ञानरूपो हि भगवांच्छिवः स्वेशानतत्पुरुषाघोरवामदेवसद्योजातादिभिः पञ्चमुखैर्ज्ञानं नित्यं प्रकाशयति। ततः प्रकाशित एव ज्ञानराशिरालोकयति मार्गं विश्वस्य। तदुक्तं रौरवागमे वचनमिदम्—

अथात्ममलमायाख्यकर्मबन्धविमुक्तये।
अव्यक्ते च शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते॥ इति।

पौष्करे च—

अदृष्टविभवाच्छान्ताच्छिवात्परमकारणात्।
नादरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम्॥

अन्यत्र च—

सदाशिवोऽपि भगवान् नादरूपतयाऽऽगतम्।
षट्पदार्थमयं ज्ञानम्··· ··· ··· ··· ··· ···॥ इत्याद्युक्तम्।

---

१. स्वच्छन्दतं०—४।३४ २. वा० प०–१।४१

अतः सर्वोऽपि ज्ञानमयो विभवः साम्बशिवस्येच्छाज्ञानक्रियादिशक्त्या सम्पन्नतामेति[१]। तत्र शब्दानां मूलं परापराम्बा, अर्थानाञ्च मूलं परमेश्वरः शिवः[२]। इममेवसिद्धान्तं 'वागर्थाविव सम्पृक्तौ··· ··· पार्वतीपरमेश्वरौ[३]' इति पदेन कविकुलगुरुः कालिदासोऽपि स्वीकरोति। अत आगमो ज्ञानरूपो नानाशास्त्रेष्पदेश्यो भवति। किञ्च, निगमज्ञानायागमज्ञानमावश्यकम्। अद्यत्वे योगक्षेमः, भुक्तिमुक्ती च यादृशी आगमगम्या न तादृशी अन्यशास्त्रेभ्य इति। अस्मिन् युगे लघुनोपायेन आगमपन्था एव साधीयान्। यद्यपि आगमशब्देन समस्तशास्त्राणां प्रायशो ग्रहणम्, तथाप्यत्र शैवशाक्तदर्शनेऽयं पदः रूढ़ इति। तदुक्तमभिनवगुप्तपादैः 'आगमस्तु अनवच्छिन्नमाहेश्वरप्रकाशपरमार्थः' इति। वस्तुतस्तु आत्मसाक्षात्कारो येन सुगममार्गेण कर्तुं शक्यः स एवागमसंज्ञक इति मनीषिभिरुह्यम्।

## तन्त्रशब्दार्थः

'तनु' विस्तारे इत्यस्मात्तनादिगणपठिताद्धातोः 'सर्वधातुभ्यः ष्ट्रन्' इत्युणादिसूत्रानुसारं ष्ट्रन्प्रत्ययान्तः, 'तनोति तन्यतेऽनेन वेति' व्युत्पत्त्यनुसारं यद्वा कुटुम्बधारणपोषणार्थकात् 'तत्रि' (चु०) धातोः 'भावे' (३-३·१८) इत्यष्टाध्यायीसूत्रानुसारं घञ् प्रत्ययान्तः, तन्त्रणं तन्त्र्यते यद् येन यत्र वेति व्युत्पत्त्यनुसारं तन्त्रशब्दः सिद्धयति। किञ्च—

तनोति विपुलानर्थान् तत्त्व-(तन्त्र) मन्त्र-समन्वितान्।
त्राणं च कुरुते यस्मात्तन्त्रमित्यभिधीयते॥

इति प्रामाण्येन निरन्तरं विस्तारार्थक विशेषार्थकतत्त्वमन्त्रसमन्वितत्राणकर्मता तन्त्रस्य सिद्ध्यति। एवञ्च तन्त्रागमग्रन्थजातं यत् तं सर्वं ज्ञानराशिं विस्तृणाति विस्तरेण प्रकटयति, तदनुसारि कुटुम्बं, समूहं च बिभर्ति, तत् तन्त्रम्। ज्ञानराशीनां विस्तरेण प्रतिपादकानां ग्रन्थानां च विषयभेदात् भवति पारस्परिको भेदः। नास्ति किञ्चिद्यत्कस्यचन ज्ञानगोचरो नास्ति। तथा च यः कश्चनापि ग्रन्थो कञ्चन ज्ञानविषयं विस्तरतः प्रतिपादयन् तन्त्रशब्देन वक्तुं शक्यते।

---

१. अनादिनिधनाच्छान्ताच्छिवात्परमकारणात्।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया॥
तयोत्पन्नानि भूतानि भुवनानि चतुर्दश।
वाङ्मयं चैव यत्किञ्चित् तत्सर्वं मातृकोद्भवम्॥ इति कुलमूलावतारवचम्।

२. शब्दजातमशेषं तु धत्ते शङ्करवल्लभा।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः॥ इति वायवीयसंहितावचनम्।

३. र० म० का०—१।१

सांख्यसिद्धान्ते स्वीकृतान्यासन् षष्ठि–तन्त्राणि "कृत्स्नस्य षष्ठितन्त्रस्य[१]" "तेषु च षष्ठितन्त्रादिख्यातेष्विति। विस्तरत्वात्षष्ठितन्त्रस्य संक्षिप्तरुचिसत्त्वानुग्रहार्थं सप्ततिकारम्भः" इत्यादिवचनैः सांख्यतन्त्रस्य आहोस्वित् सांख्यदर्शनस्य तन्त्रसंज्ञा समधिगम्यते। भगवन्तः शङ्कराचार्याः स्मृतेः तन्त्रपदेन व्यवहारं कुर्वन्तो ब्रह्मसूत्रव्याख्यायाम्—"स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीतेति[२]" प्राहुः। 'गायत्रीतन्त्रम्' इत्यधुनापि शङ्करपादानां रचना समुपलभ्यत एव।

आयुर्वेदे सुश्रुतसंहिताकारा अष्टाङ्गचिकित्साविधिं तन्त्रपदेन व्यवहरन्त्यामनन्ति चैतत्तन्त्रमादिदेवप्रकाशितमिति। तथा हि—

'इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम् ॥ इति।

कोशेष्वपि तन्त्रशब्दस्य व्यवस्थितिर्दृश्यते। यथा ह्यमरकोशे-"तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे' इत्युक्तम्। वाचस्पत्ये तु—

व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते॥ इत्याद्युक्तम्।

राजनीतिग्रन्थेष्वपि तच्छास्त्रज्ञानाय तन्त्रपदव्यवहारो दृश्यते। यथा 'पञ्चतन्त्रमि'ति। एतेनेदं प्रतिभाति यद्राजनीतिरपि तन्त्रप्रतिपाद्यविषयेषु परिगणितोपलभ्यते। उक्तञ्च वाराहीतन्त्रे—

राजधर्मो दानधर्मो युगधर्मस्तथैव च।
व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्॥ इति।

किञ्चास्माकं भारतवर्षस्य शासनपद्धतिःप्रजातान्त्रिकी अस्ति, येनोद्घुष्यते भारतं प्रजातन्त्रराष्ट्रमिति। अस्य व्युत्पत्तिस्तु–प्रजा तनुते शासननियमान् यत्र, प्रजया तन्यते विस्तार्यते शासनपद्धतिर्यत्र, प्रजया तन्त्यते ध्रियते स्वसमूहो यत्र वेति। एवञ्च भारतं तद्राष्ट्रं यस्मिन् प्रजैव राष्ट्रनियमांस्तथैव तनुते विस्तारयति संशोधनपरिष्करणादिभिर्यथा तन्तुवायस्तन्तून्, यत्र प्रजैवैभिर्नियमैः स्वात्मानं धारयति पोषयति च, यत्र प्रजा एव राष्ट्रचिन्तां कुर्वन्तीत्यादि।

नारदपाञ्चरात्रस्याप्यागमसंज्ञा। अतो वैष्णवदर्शनानामपि तान्त्रिकत्वं सुतरामेव सिद्धम्। एवं हि सौर-गाणपत्य-वैष्णव-शैव-शाक्त-जैन-बौद्ध-व्याकरणादीनाञ्चागमत्वं सिद्ध्यति।

एवञ्च नानार्थकोऽपि तन्त्रशब्दः सम्प्रति शैव-शाक्तदर्शने रूढिमापन्नस्तन्त्रागमसंज्ञामधिगच्छति। तथा च समस्तसुरगणगीयमानप्रकर्षे भारतवर्षे सकलसाधककामपूरणकल्पद्रुममिव को न जानाति नाम तन्त्रशास्त्रम्। विशेषतः

---

१. सा० का०–७२     २. ब्र० सू० शा० भा० २-१-१

शाक्तास्तन्त्रानुगामिनोऽप्यागमवेत्तारो वहवः शैवा वैष्णवाः सौरा गाणपत्याश्च तथैव । अतः परमेश्वरोपासनस्य साधनभूतानामुपकरणानां हि तन्त्रसंज्ञा प्रतिष्ठते ।

तन्त्रशास्त्रं सर्वशास्त्रेभ्यो महत्तमं स्थानं विभर्तीति तत्र तत्र तन्त्रशास्त्रे निगदितम् । यथा—

नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः ।
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः ॥

देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा ।
तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम् ॥ इत्यादयः ।

महानिर्वाणतन्त्रे च—

किं तस्य तीर्थभ्रमणैः किं यज्ञैर्जपसाधनैः ।
जानन्नेव महातन्त्रं कर्मपाशैर्विमुच्यते ॥ इत्युक्तम् ।

एतेन भारतीयायाः संस्कृतेः, भारतीयाया आचारपरम्परायाश्च चत्वारीणि, सन्ति खलु मुख्योपजीव्यानि, तानि च श्रुतिः, स्मृतिः, पुराणम्, तन्त्राणि इति । एषु चतुःस्तम्भेष्वेव समग्रा भारतीया संस्कृतिरवस्थिता । अद्यत्वे च तन्त्रशास्त्रस्य महानुपयोगः । तदुक्तम्—

कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः ।
द्वापरे तु पुराणोक्तः कलौ आगमसम्मतः[1] ॥ इति ।

अद्यत्वे विविधघटनासंकुले लोकव्यवस्थितिगर्भे भारतवर्षे पाश्चात्यसभ्यतासम्पर्कोत्तरयुगे यदा वांशिकी मर्यादा प्रतिपदमवधीर्यते, भक्ष्याभक्ष्योर्विवेकोऽसभ्यताविभाव्यते, स्पृश्यास्पृश्यविचारो निराक्रियते, वर्णाश्रमव्यवस्था युगधर्माऽननुकूलेति प्रतिपाद्यते, परमेश्वरे पुनर्जन्मनि चास्तिक्यबुद्धेर्विभ्रम इति संगिरन्ते, तदा भारतीयचिरन्तनसंस्कृतेः संस्कारस्य ज्ञानस्य च यद्यस्ति कश्चित्संरक्षणोपायस्तर्हि तन्त्रमित्येव युक्तमुत्तरम् । तथा चोक्तं निर्वाणतन्त्रे—

विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥ इति ।

एवं हि तन्त्रज्ञानशून्या केचन तन्त्रस्याभिप्रायः मन्त्रयन्त्रयोः साधनम्, पुरश्चरणम्, उच्चाटनम्, मारणादिकञ्च मन्यन्ते, परमेतादृशं तन्त्रसाज्ञानग्रस्ता एवोच्यन्ते । एतद्विपरीतञ्च दृश्यते यद् तन्त्रग्रन्थेषु सर्वात्मिक्याः भौतिक्याः समृद्धेः, सर्वविधाया अध्यात्मसम्पदः, बह्वीनां विस्मायावहानां सिद्धीनाञ्चार्जनस्य च पन्थानो निर्दिष्टाः सन्त्यत्र । तन्त्रेषु दार्शनिकविचाराणामतिगहनं समीक्षणमपि जातम् ।

---

१. कुलार्णवतन्त्रस्य वचनम् ।

अद्यत्वे समग्रे भारते व्यवहारे शास्त्रे च तन्त्रसंस्कृतेः प्रभावाः परीक्ष्यन्ताम्। शैव-शाक्त-वैष्णव-सौर-गाणपत्य-बौद्ध-जैनादयो सर्वे पन्थानस्तान्त्रिकीं रीतिमनुसरन्ति। कस्य देवस्य कथमुपासनं कर्तव्यम्, कियदुपासनस्य कियत् फलमित्यादयो विषयास्तान्त्रिकाः। ग्रामे-ग्रामे, नगरे-नगरे, गृहे-गृहे चापि तन्त्रोक्तदेवानां देवीनाञ्चोपासनं प्रचलति। अतो भारतीयजीवनपद्धत्या तन्त्रस्याभेदसम्बन्धः। तन्त्रशास्त्रे सर्ववर्णानां नाराणां नारीणाञ्चाधिकारादस्य शास्त्रस्य लोकोपयोगितायाः सहैव क्रियालाघवात् युगधर्मिताऽपि सिद्धयति। अत अद्यत्वे सम्भारलाघवादाशुसिद्धिकरात् सर्वेषाञ्चाधिकाराच्च तन्त्रोक्तपन्था एव समीचीनमिति न विस्मर्तव्यं नीरक्षीरविवेकिभिः।

## नागेशभट्टस्य देशकालौ

महामहिमशाली निखिलशास्त्रतत्त्वज्ञानगुणैकमाली विद्वत्कुमौलिमणिर्माननीयोऽयं नागेशभट्टः कदा कुत्रास्मिन् धराधाम्नि समुत्पन्नः, केन प्रकारेण क्व वा सकलां पाण्डित्यकलामासादितवान्, कदा च पाञ्चभौतिकं शरीरं जहावित्यादिविषये निश्चयेन किञ्चिदपि व्यवस्थापितुन्न शक्यते एतद्विषयकप्रमाणसामग्र्यभावात्।

प्राक्तनभारते आसदियं रीतिर्यद् प्राचीनानां तत्र भवतां परमप्रसिद्धिमुपगतानामपि महापुरुषाणां जीवनचरितानि याथातथ्येन न ज्ञायन्ते। न चासीत्स्वजीवनचरित्रविषयेषु त्रिकालदर्शिष्वस्माकं पूर्वजेषु स्वरचनासु क्वचन स्वविषयकैतिहासलेखनप्रणाली। अतोऽधुना पाश्चात्त्यैतिह्यविदः पदे-पदे भारतीयेतिहासे ऐतिहासिकपुरुषजीवनस्थितिविषयेषु च शङ्कापङ्के निमज्जन्ति, परं ये भारतीयमर्यादापरम्पराज्ञानवन्तस्ते भारतीयानामैतिह्यविषये वृथा न विवदन्ते, न च प्रमाणाभावात्तेषां विषये अज्ञानधूलिं प्रक्षिपन्ति। भारतीया हि मनिषिणः सिद्धान्तेषु 'वज्रादपि कठोराणि मृदूनि कुसुमादपि' इति सूक्तिं चारितार्थयन्तः स्वस्वरचनाचमत्कारमेव प्रकाशयन्ति स्म विस्तारयन्ति स्म च स्वामन्दज्ञानसन्दोहं सर्वजनहिताय सर्वजनसुखाय।

भारतीयप्राक्तनज्ञानस्य बहवोऽंशा मन्ये बहोः कालात् वैदेशिकैराक्रान्तत्वाद् भ्रष्टाः, महाकराले कालोदरे च सन्निविष्टाश्च। श्रूयते हि तक्षशिलाया नालन्दायाश्च पुस्कालयाः षण्मासान् सततं ज्वलन्त आसन्। भारतीयप्राक्तनप्रतीका ये आसन् ते मौहम्मदकुलाक्रान्ते तदानीं भारते निःशेषतां गताः। अतो मन्ये ऐतिहासिकानि प्रमाणानि भूयस्त्वेन नष्टानि। अत अद्यत्वे साक्षात्परम्परया वा क्वचनान्यैः प्रमाणैर्भारतीयमनीषिणां जीवनवृत्तानि समीक्षन्ते।

महामहिमानः स्वनामधन्या महामहोपाध्यायाः श्रीमन्तो नागेशभट्टाः कतमदेशालङ्कार भूता आसन्निति तु सर्वथा संदिग्धमेव, परं ते आसन् महाराष्ट्रीया इति गुरुपरम्परया नाम्ना लोकोक्तिभिश्चावगम्यते। भट्टनागेशस्य गुरुर्भट्टोजिदीक्षितस्य पौत्रो वीरेश्वरदीक्षितपुत्रो हरिदीक्षित आसीत्। भट्टोजिदीक्षितो महाराष्ट्रीय आसीदितिनिर्विवादम्। तदानीमतिशयवैदुष्यकारणात्तेषां भट्ट इत्युपाधिः प्रचलति स्म। अतो नागेशस्य 'भट्ट' इत्युपाधिर्वैदुष्यसूचनायैवेत्यवगन्तव्यम्। भट्टोजिदीक्षितः, हरिजिदीक्षितः, इत्यादौ 'जि' इत्यादरसूचकवचनं मन्तव्यम्। अद्याप्युत्तरभारते महापुरुषाणां आदरातिशयेन नामान्ते 'जी' इत्याभिधानं दृश्यते। तच्चान्वर्थकम्, यतो हि भट्टान् जयति इति भटोजिः, विद्वद्विदित्यर्थः।

सप्तदशख्रीष्टाब्दकालो नागेशभट्टस्याविर्भावकाल इति सर्वे इतिहासवेत्तारः प्रतिपादयन्ति। अस्यैव भारतीयवैक्रमकालानुसारिगणना सं० १७३१ वैक्रमादारभ्य १८१० वैक्रमपर्यन्तं नागेशभट्टकालो निश्चीयते। ख्रीष्टाब्दकालानुसारेणायं कालः १६७४ ईशवीयतः प्रारभ्य १७५३ ईशवीयमध्यकालः सिद्धयति। इदं कालनिर्धारणं तदानीन्तंजयपुरनरेशानुष्ठीयमानाश्वमेधयज्ञप्रसङ्गद्वारा सम्भवति। अस्या घटनाया विवरणं म०म०पं० दुर्गाप्रसादकृतरसगङ्गाधरग्रन्थभूमिकायां द्रष्टव्यम्। तत्रैवं लिखितं यत् सवाईमहाराजजयसिंहः स्वराजधान्यां जयपुरे १७१४ ख्रीष्टाब्दे अश्वमेधयज्ञस्यायोजनं कृतवान् समाहूतवाँश्च यज्ञाचार्यरूपेण काशीतो नागेशभट्टान्। परं 'क्षेत्रसंन्यासग्रहणकारणान्नोपस्थातुं शक्यते' इति तन्निमन्त्रणं प्रख्यातवान् नागेश इति तत्र रसगङ्गाधरभूमिकायां लिखितम्। एतेनेदं व्यज्यते यद् यज्ञाचार्यपदवीग्रहणसमर्थोऽप्यहं क्षेत्रसंन्यासव्रतानुष्ठानादन्यत्र गन्तुमसर्थः। एतेनार्थसम्मानयोर्लोभाभावोऽपि नागेशस्य ज्ञायते। नागेशभट्टा महाराष्ट्रीयऋग्वेदपाठिनां ब्राह्मणकुले प्रादुरभूवन् इति "कालोपनामक शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते सिद्धान्तकौमुदीव्याख्याने पूर्वार्द्धं समाप्तम्[1]" इति लेखात् 'इति श्रीमदुपाध्यायोपनामकं शिवभट्टसुतसतीगर्भज नागेशभट्टकृते शब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्धं समाप्तम्[2]' इति लेखाच्च ज्ञायते। एवमेव भानुदत्तकृत 'रसमञ्जरी' ग्रन्थस्यैका टीका नागेशभट्टेन लिखिता। तस्याः कालो विक्रमसम्वत १७६९ वर्तते। नागेशभट्टकराङ्कितहस्तलेखरूपेणेदं पुस्तकं सम्प्रति 'यूरप' द्वीपस्थ आंग्लानां ब्रिटेनदेशे लण्डननगर्या 'इण्डिया आफिस लाइब्रेरी' इत्याख्ये पुस्तकालये स्थितं वर्तते। ऐतेनाप्युपर्युक्तकालस्यैव पुष्टिर्भवति।

## नागेशभट्टस्य पितरौ

नागेशभट्टस्य पिता 'शिवभट्टः' माता च 'सतीदेवी' आसीदिति सर्वत्रस्वव्याकरणग्रन्थेष्वादावेव तेन लिखितम्। भूयोभूयो नामोच्चारान्नागेशभट्टस्य मातृपितृ-

१. वृहच्छब्देन्दुशेखरे पूर्वार्द्धान्ते। २. वृहच्छब्देन्दुशे० उत्तरार्द्धेऽन्ते।

भक्तिः सिद्धयति । किञ्च, नागेशभट्टस्य शैवमतावलम्बित्वाच्छिवस्य शक्तिसहितस्य च मातृपित्रोः नामैक्याच्च सर्वत्र मङ्गलश्लोकेषु शिवशक्त्योः स्मरणपूर्वकमातृपित्रोः स्मरणेन श्लेषालङ्कारव्यञ्जनापि संगच्छते । एतेन तेन स्वोक्तावर्थगाम्भीर्यमपि सूचितम् । किञ्च, शिवाद्वये माहेश्वरागमस्य षट्त्रिंशत्तत्त्वात्मके सिद्धान्ते 'निर्गुणो निष्क्रियश्च परमः शिवः शिवभट्टारकापरनामधेयः । तस्मादेव कारणगुणात्मकस्य शिवतत्वस्य प्रादुर्भावः । सैव सतीत्यपरशक्तितत्त्वसम्बलितोऽखिलप्रपञ्चजातमुद्भावयति' । अस्यैवागमरहस्यगुम्भितस्य शिवभट्ट सतीदेवीति स्मरणप्रकरणस्य निरूपणं मातृपित्रोः स्मरणमाध्यमेन नागेशेन प्रकटितम् । तथा हि—

नागेशः किल नागेश भाषितार्थविचक्षणः ।
शिवभट्टसुतो धीमानुपाध्यायोपनामकः ॥
शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः[१] ॥ इत्यादयः ।

नागेशभट्टस्य पितरौ काश्यामेव निवसन्तौ पतञ्जलिकल्पं नागेशं उत्पादितवन्तौ आहोस्वित् महाराष्ट्र एव कुत्रचिन्निवसन्तौ एतादृशं सुतमासादितवन्ताविति प्रमाणाभावान्न किञ्चिदपि वक्तुं शक्यते । लोकोक्तिभिर्नागेशस्य पूर्वजीवनवृत्तैश्चैवं कल्पितुं शक्यते यन्नागेशभट्टस्याविर्भावः काश्यामेव कस्मिश्चित्स्थाने समजनि । अद्यापि महाराष्ट्रदेशीया लब्धसारस्वतवैभवाः काश्यां बहवः परिवारा वर्तन्ते । एतेषां वांशिकी अनुगतिर्वर्षशतादप्यधिका । नागेशभट्टस्यारम्भिकजीवनस्थितिर्विपन्नाऽऽसीदिति लोकोक्तिभिर्ज्ञायते । मन्ये, नागेशभट्टस्य पितरौ तस्यात्पीयसि वयसि एव शिवसायुज्यमाप्नुवन्तौ । यदि च तौ नागेशभट्टस्य ग्रन्थरचनाकाले आस्तान्तर्हि कुत्रचित् ग्रन्थेषु तयोः कस्याश्चिद्घटनाया अवश्यमुल्लेखः स्यात्, न तथा दृश्यते । नागेशभट्टस्य प्रभूततरः समयो ग्रन्थरचनायां व्यतीतः । बहुकालं यावन्नागेशभट्टस्याध्ययनस्याव्यवस्थायाः सत्वात् प्रथमे वयसि एव मातृपित्रोरभावोऽर्थस्य चाभाव आसीदिति 'रामतो लब्धजीविकः[२]' इति प्रामाण्यादवगम्यते ।

## नागेशभट्टस्य गुरवः

महाभाष्यप्रदीपोद्द्योतादौ नागेशभट्टः स्वाभीष्टदेवैस्सह गुरूनपि स्मरति । यथा—

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् ।
पाणिन्यादिमुनीन् वन्द्यान् पितरौ च सतीशिवौ ॥

नागेशभट्टो नागेशभाषितार्थविचक्षणः ।
हरिदीक्षितपादाब्जसेवनावाप्तसन्मतिः[३] ॥ इति ।

---

१. ल० श० शे० मं० श्लोकः । २. तत्रैव मं० श्लोकः ।
३. महाभाष्ये उद्द्योते मङ्गलश्लोकौ ।

अन्यत्र च—

दृढस्तर्केऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः ।
दृषदोऽपि हि सन्तीर्णाः पयोधिः रामयोगतः ।। इत्याद्युक्तम् ।

इदं हि व्याकरणाध्ययनक्षेत्रे दृश्यते यद् अष्टाध्यायी रीत्या प्रायश अध्ययनाध्यापनस्य प्राक्तनप्रणाली आसीत् । अस्यामेव परम्परायां पाणिनीयसूत्रवार्तिकसूत्रमहाभाष्यस्य च समन्वितं व्याख्यानविवेचनं काशिकाग्रन्थे जातम् । तत्रैव पदमञ्जरी-न्यासटीकयोर्भृशं विचारात् उदाहरण-प्रत्युदाहरणादिभिः सैव परिपाटी लब्धप्रतिष्ठा व्यवहारयोग्या वैज्ञानिकी चासीत् । गच्छता कालेन रूपावतार प्रक्रियाकौमुद्यनन्तरं प्रबलवैयाकरणेन भट्टोजिदीक्षितेनैकाऽभिनवा परिपाटी प्रकरणानुसारिणी प्रारब्धा, या च शनैः शनैः व्याकरणाध्ययने लब्धप्रसरा अभवत् । भट्टोजिदीक्षितशिष्येण वरदराजाचार्येण चैतस्याः परिपाट्याः सुकुमारमतीनामपि छात्राणां कृते विकासः प्रारम्भि यश्चाधुनापि प्रचलति । प्रायः एतेनैव क्रमेण अद्यत्वे व्याकरणाध्ययनस्य परिपाटी प्रचलति । अस्यामेव परिपाट्यां सिद्धान्तकौमुदी, प्रौढ़मनोरमाप्रभृतिग्रन्थाध्ययनस्य सरणौ नागेशभट्टस्य शब्देन्दुशेखरादिग्रन्थानां रचना समजनि । अतो भट्टोजिदीक्षिताश्रितप्रक्रियाप्रकरणपरम्परायामेव नागेशभट्टस्य व्याकरणे व्याख्यातृत्वेन गणना क्रियते ।

शेषकृष्णभट्टस्य शिष्यो भट्टोजिदीक्षितः षोडशतमे वैक्रमाब्दे व्याकरणस्य प्रक्रियाधाराया आविर्भावं प्रारब्धवान् । शेषकृष्णभट्टस्य पुत्रः शेषवीरेश्वरो भट्टोजिदीक्षितस्य सतीर्थ्यः, यस्य पुत्रशिष्यपरम्परायां शिष्यत्वेन पण्डितराजजगन्नाथः, पुत्रत्वेन चक्रपाणिदत्तश्च जातौ । भट्टोजिदीक्षितपुत्रस्य वीरेश्वरदीक्षितस्य पुत्रः शिष्यश्च हरिदीक्षितस्तस्मादेव व्याकरणशास्त्रस्याध्यनं चकार नागेशभट्टः । हरिदीक्षितस्य तदानीं वैयाकरणेषु महती प्रतिष्ठा आसीत् । श्रीहरिदीक्षितादेवाखिलं महाभाष्यान्तं व्याकरणं नागेशभट्टोऽधीतवान् । तस्मादेवोक्तम्—

हरिदीक्षितपादाब्जसेवनाल्लब्धसन्मतिः ।। इति ।

हरिदीक्षितादष्टादशवारं महाभाष्यन्नागेशभट्टः अधीतवानिति 'फणिभाषितभाष्याब्धेः कृतभूरिपरिश्रमः'[1] इति लेखाल्लोकश्रुतेश्चावगम्यते । स्वगुरौ हरिदीक्षिते नागेशभट्टस्य स्वाभाविकी दृढ़तरा च गुरुभक्तिरासीदित्यत्र कोऽपि विसम्वादो नास्ति । दृढतरगुरुभक्त्यैव हरिदीक्षितनाम्ना 'शब्दरत्नं' मनोरमां टीकां ग्रथितवान्नागेशः । यद्यपि विवदन्ते केचन यत् 'शब्दरत्नं' हरिदीक्षितरचनैवास्ति, परमत्र हरिदीक्षितकृतौ सत्यां किमपि प्रमाणं नास्ति, तद् विकल्पे तु शब्दरत्नस्या-

---

१. लघुशब्देन्दुशे० मङ्गलश्लोकः ।

वंवलोकनेनेदं सुस्पष्टतरं प्रतिभाति यत् याह्यर्थगाम्भीर्यशैली लघुशब्देन्दुशेखरस्य सैव शब्दरत्नस्येति। अतो रचनेयं नागेशभट्टस्यैवेत्यत्र नास्ति संशीतिलेशः। व्याकरणशास्त्रे नागेशभट्टस्य यदप्रतिमपाण्डित्यं तत्तद्रचनासु दृश्यते तस्य कारणत्वेन सारस्वताराधनस्य सत्त्वेऽपि गुरुकृपाऽपि तत्र कारणत्वेनायाति।

महामहिम्नो नागेशभट्टस्य तर्कशास्त्राध्ययनं तदानीन्तनन्यायदर्शनस्य पारदर्शिप्रतिवादिभयङ्करेण श्रीरामरामभट्टाचार्येण जातम्। मञ्जूषाग्रन्थे नागेशभट्टेन स्वयमेवैतद् विषये लिखितम्—

> अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात्।
> न्यायतन्त्रं रामरामाद् वादिरक्षोघ्नरामतः॥ इति।

एवञ्चान्यत्र--

> दृढस्तर्कोऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः।
> दृषदोऽपि हि सन्तीर्णाः पयोधिः रामयोगतः॥ इत्युक्तम्।

नागेशभट्टः स्वग्रन्थेषु दृढतरन्यायशास्त्रज्ञानादेव तत्र-तत्र न्यायगर्भिताया भाषाया व्यवहारः कृतवान्। यथा चार्थवत् सूत्रेऽर्थवदित्यस्य निष्कृष्टलक्षणे— 'एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वम्' इति। मञ्जूषायाञ्च न्यायशास्त्रीयभाषाया वहुतरप्रयोगाः सङ्गच्छन्ते। यथा-- चैकत्र ग्रन्थे आदावेव शाब्दबोधेऽगृहीतवृत्तेर्हेतुत्वनिरूपणे—'तत्रागृहीतवृत्तिकस्य शाब्दबोधादर्शनात् नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते' इति समर्थसूत्रभाष्याच्च 'तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः' इति। अतो न्यायशास्त्रगुरोः श्रीरामरामभट्टाचार्यस्य पुष्कलप्रभावो नागेशे समापतित इत्यत्र शङ्कालेशोऽपि नास्ति।

श्रीमन्तो नागेशोपाध्यायाः पण्डितराजजगन्नाथेन साहित्यशास्त्रमधीतवन्त इति कैश्चिदुच्यते परमत्राभिलेखरूपेण कोऽपि साक्ष्यो नैवावाप्यते। यदि साहित्यशास्त्रन्तेनाधीतं स्यान्नागेशेन तदा रसगङ्गाधरे मनोरमायाः कुचमर्दनटीकायाञ्चावश्यमेव किञ्चिल्लिखितं स्यात्। नागेशभट्टस्य व्याकरणागमग्रन्थेषु रसगङ्गाधरटीकायामपि नैतादृशं किमपि प्रमाणं येनैतस्य कथनस्य पुष्टिः स्यात्। अतः साधनसम्पत्या अल्पीयसि काले गुरुसन्निधौ स्वल्पीयसि एवावधौ सर्वाणि शास्त्राणि नागेशेनाधीतानीति उक्तं भवति किमधिकेन।

## नागेशभट्टस्य पत्नी पुत्राः शिष्या आश्रयदातारश्च

नागोजिभट्टस्य पत्नी आसीन्नवेत्यत्रापि विवादः। केचन वदन्ति यद् नागोजिभट्टो बाल्यादेव गृहीतब्रह्मचर्यव्रतः, नासादितवान् पत्नीम्। यदि तस्य पत्नी

स्यात्तदा तस्या क्वचन उल्लेखः स्यात्; पुत्रपौत्रादयश्च स्युः । अतो नागोजिभट्ट अविवाहितो यावज्जीवनं ब्रह्मचर्यव्रतमाचरितवान् । अन्ये तु नागेशभट्टस्य पत्नी आसीदिति प्रतिपादयन्ति । अत्र प्रमाणं कल्पनीयं भवति यत् नागेशभट्टस्यावश्यं पत्नी आसीदिति । नागेशेन पुत्रपुत्रीरूपेण शेखरमञ्जूषाग्रन्थयोर्नामग्रहणं कृतम्, तत्र यदि पत्न्यभावः स्यात्तदा पुत्रस्य चर्चैव वृथा स्यात्, कृतञ्च नागेशेन वैयाकरण-सिद्धान्तलघुमञ्जूषाग्रन्थान्ते पुत्र पुत्र्याः कथनम्--

'शब्देन्दुशेखरं पुत्रं मञ्जूषाञ्चैव कन्यकाम्' इत्युक्तिः पत्नीस्थितिं साधयति । लोकोक्तिरप्येका प्रमाणभूता । एकदा कश्चिद्दाता नागेशसन्निधावागत्य 'अस्ति काचिद् विप्रतिपत्तिः' इत्युक्तवान् । दातुः कामनेयमासीद् यन्नागेशभट्टो मत्तः पुष्कलमर्थराशिं स्वविप्रतिपत्तिरूपेण गृह्णीयात् । एतच्छ्रुत्वा नागेशभट्टो गम्भीराकृतिः सन् किञ्चित् क्षणं विचिन्त्य त्रुटितपङ्क्तेः कस्याश्चित्पाण्डुलिपेः पत्रमेकं पुरस्कृत्य प्रोवाच—'इयं हि विप्रतिपत्तिरिति' । दाता कश्चिन्नान्यः स तु 'शृङ्गवेरपुराधीश' एवासीत् । तदुपरि तेनोक्तं यन्नैतादृशी विप्रतिपत्तिरपाकरिष्यते मया, एतादृश्या विप्रतिपत्तेस्तु निराकरणं भवादृशाः सरस्वतीपुत्रा एव करिष्यन्ति, यदि चार्थविषयिणी काचिद् विप्रतिपत्तिः स्यात्तस्यापनोदः करिष्यते मया । ततो नागेशेनोक्तं यदत्र पत्नी प्रष्टव्येति । तदनु तेन तया तत्कारणं पृष्टम्, तयाप्योक्तं यदस्मद्पार्श्वे यवधान्यपूर्ण एको घटोऽस्ति, तेन मासैकस्य भोजनवृत्तिः प्रचलिष्यतीति' । श्रूयते चानया घटनया विस्मितो दाता प्रयागसमीपस्थः शृङ्गवेरपुराधीशः श्रीरामसिंहो नागेशेन मन्त्रदीक्षां गृहीतवान् व्यवस्थितवाँश्च निश्चिता प्रतिमासिकीं शतरूप्यकपरिमितां वृत्तिम् । तदनु नागेशेन लिखिताः सर्वे ग्रन्था रामसिंहेनैव मुद्रापयित्वा प्रकाशितम् । यथा--

विशेनवंशजलधौ पूर्णशीतकरोऽपरः ।<br>
तेन श्रीरामसिंहेन सर्वा विद्याप्रजानता ॥

शृङ्गवेरपुरेशेन रिपुकक्षदवाग्निना ।<br>
अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा ॥

इति वचनैः रामसिंहस्य साहाय्यं सिद्धचति ।

नागेशभट्टस्य पत्नी दुर्गानाम्नी आसीदिति केचन वदन्ति । 'कीर्तिर्यस्य स जीवति' इति वाल्मीकिवचनात् कीर्तिरूपेण नागेशकृतय एवेदानीं संस्कृतवाङ्मयेन सहैव समग्रस्य भारतवर्षस्य गौरवं वर्धयन्ति ।

नागोजिभट्टस्य बहवः शिष्या विद्यावैभवसम्पन्ना आसन्नित्यत्र कः कुतर्कं कुर्यात्, परं पट्टशिष्यत्वेनायाति प्रथमं नाम 'वैद्यनाथपायगुण्डे' महोदयस्य । वैद्यनाथपायगुण्डेमहोदयः समस्तशास्त्रं नागेशेनानुपूर्वीकं गृहीतवान् । पायगुण्डे महोदयेन

गुरुभक्त्या स्वशास्त्रज्ञानशक्त्या च अनेके ग्रन्था लिखिताः। यथा च शब्दरत्नस्य टीका 'भावप्रकाशः', उद्द्योतस्य टीका 'छाया', लघुशब्देन्दुशेखरस्य टीका–'चिदस्थिमाला', परिभाषेन्दुशेखरस्य टीका 'गदा' 'काशिका' च, वैयाकरणसिद्धान्तमञ्जूषायाष्टीका 'कला' इत्यादयः। पायगुण्डे पुत्रो 'बालशर्मा' अपि नागेशभट्टस्यान्यतमशिष्येषु आसीत्। अनेन धर्मशास्त्रे मीमांसायाञ्च महती प्रतिष्ठा लब्धा। वैद्यनाथपायगुण्डे शिष्येण 'श्रीमन्नुदेव' महोदयसाहाय्येन प्रसिद्धआंग्लविदुषा 'ह्नेनरीटामस कोलब्रुक' इत्याख्येनाज्ञया च बालशर्म्मणा नागेशभट्टस्य धर्मशास्त्रग्रन्थानां संग्रहश्चक्रे। एतद्घटनाया उल्लेखो लण्डननगर्या 'इण्यिा आफिस लाइब्रेरी' इत्याख्ये पुस्तकालये १५०७ ग्रन्थाङ्के अस्ति। अतो नागेशभट्टस्य तत्तच्छास्त्रेषु समृद्धा महती च परम्परा आसीदित्यत्र नास्तिशङ्काकलङ्कपङ्कलेशावसरः।

## नागेशभट्टविषये लोकोक्तयः

'भवन्ति भव्येष्वनेका किम्वदन्तय' इति नियमात् नागेशभट्टविषये बह्व्यः किम्वदन्त्यः प्रचलिताः सन्ति। तत्रैकत्र कथायां नागेशभट्टः पूर्वं मल्ल आसीत्, मल्लविद्यायाञ्च तस्यानन्योऽनुरागोऽभूत्। पूर्वं स गोचारणं करोति स्म येन दुग्धघृतास्वादनात्तेषां बलशालिमल्लेषु तदानीं गणना भवति स्म। नागेशभट्टस्य पितरौ ब्राह्मणवृत्तिकौ सात्त्विकजीवनं यापयन्तौ आस्ताम्। अतोऽऽहारे व्यवहारे च पण्डितरीतिरनुसृत्ता तेन। तथा च गच्छता कालेनैकदा काश्यामेव पण्डितवेशभूषितोऽसावुष्णीषधवलाम्बरौत्तरीयचन्दनादिसुशोभितः कस्यांश्चिदतिगभीरविषयमवलम्ब्य भाविन्यां पण्डितसभायामग्रपङ्क्तौ गृहीतासनः किञ्चिदपि वक्तुमसमर्थः पण्डितैरुपहसितः सार्धचन्द्रश्च सभया निष्काशितः। एतेनापमानेनातिखिन्नो नागेशभट्ट आत्मनो मौर्ख्यनाशोपायं विचिन्तयन् वागीश्वरीदेव्या मन्दिरमाजगाम। मन्दिरस्यान्तः गर्भे निषण्णः सन् कतिचिदहोरात्रं व्यतीत्य वागीश्वरीध्यानपरायण अशनशयनादिरहितो भगवतीं वागीश्वरीं प्रसादितवान्। भगवत्या दत्तेन वरेणानायासेनाल्पकालेनोपर्युक्तगुरुभ्योऽखिलां विद्यामासादितवान्। पुनः पण्डितमण्डलीषु अग्रपङ्क्तावेव नागेशस्य नाम सर्वदा सर्वत्र अभवत्।

एकाऽपराकथेयं यन्नागेशभट्टस्य शरीरमतीवसौष्ठवोपेतं बलयुक्तमतिमात्रञ्चासीत् पूर्वम्, परं यावता तेन क्षेत्रसन्यासः गृहीतः, ग्रन्थलेखनञ्चारब्धं तावताऽनुदिनं कृशतामासादिता। निरन्तरं लिखतश्च तस्य पृष्ठदेशेः कुब्जत्वमागतम्।

काश्यां स्थितो नागेशः पण्डितः सन्नपि वृत्यभावादत्यन्तं दुःखमनुभवन् काशीतो बहिर्गत्वा द्रव्यार्जनस्योपायश्चिन्तयामास। अथैकस्मिन् दिने धनार्जनाय गङ्गापारगमनकामनया च स तरिवाहकानाहूय प्रोक्तवान् यद् भो भो नाविकाः!

पण्डितः सन्नप्यहम् धनेन हीनो भवद्भ्यः किञ्चिदपि दातुमसमर्थः पारं गन्तुं कामये। नागेशेनैवं प्रोक्तेषु नाविकेषु ते प्रतिबोधयामासुर्यद् भवान् महान् पण्डितः, नान्यत्र त्वया गन्तव्यमिति। ततो लज्जितो नागेशः प्रत्यावृत्य वागीश्वरीसाधन-सम्पन्नो ग्रन्थान् प्रणिनिनाय। नागेशभट्टस्याष्टादशवारं गुरुमुखाद् महाभाष्याध्ययनं श्रूयत एव। बहुदानायोद्यतेन शृङ्गवेरपुराधीशेन रामसिंहेन यथाकथञ्चिज्जी-वनयापनाय शतरूप्यकप्रतिमासिकीवृत्तिरेवाङ्गीकृतं तेनेत्यप्याख्यानं सर्वविदि-तमेव।

नागेशभट्टः सुलभब्राह्मणस्वभावात् स्वतेजसाच्चानुचितं न कदापि सहते-स्म। अतो दाम्भिका मिथ्याभिमानिनः पण्डितम्मन्या जना नागेशतो दूरे एवावर्तन्त।

## नागेशभट्टकृतयः

म०म०नागेशभट्टस्य पाण्डित्यं चतुरस्रम्। अतस्तेन प्रायः समस्तशास्त्रेषु पुस्तकानि प्रणीतानि। नागेशग्रन्थानां संख्याऽवलोकनेनेदं प्रतिभाति यद् स कथमेते विभिन्नविषयका ग्रन्था एकेनैव नागेशेन लिखिता इति। पुस्तकरचनाचातुर्येण तेषां महतीसंख्यया च नागेशस्य लोकोत्तरवैदुष्येन सहैव क्रियाशालिताऽपि लक्ष्यते। अग्रे यथाविषयं केचन ग्रन्था उद्ध्रियन्ते।

**व्याकरणशास्त्रे यथा—**

महाभाष्योद्द्योतः, शब्देन्दुशेखरः, लघुशब्देन्दुशेखरः, परिभाषेन्दुशेखरः, वैयाकरणसिद्धान्तमञ्जूषा, वै०सि०लघुमञ्जूषा, वै०सि०परमलघुमञ्जूषा, शब्द-रत्नम्, शब्दकौस्तुभस्य विषमी टीका, अष्टाध्यायीसूत्रपाठः, तिङन्तसंग्रहः, धातु-वृत्तिः, णोरणो वादार्थः, वैयाकरणकारिका, वृत्तिवादः, शब्दानन्तसागरसमुच्चयः, सुप्तिङन्तसागरसमुच्चयः, स्फोटवाद इत्यादयः।

**साहित्यशास्त्रे—**

कुवलयानन्दटीका—अलङ्कारसुधा, गोविन्दठक्कुरकृतकाव्यप्रदीपस्य टीका—उद्द्योतः, गुरुकाव्यप्रदीपोद्द्योतः, रसगङ्गाधरटीका–गुरुमर्मप्रकाशः, रसतरङ्गिणी टीका, रसमञ्जरी टीका च प्रकाशः, गीतगोविन्दटीका, सुधालहरीटीका इत्यादयः।

**धर्मशास्त्रे—**

तीर्थेन्दुशेखरः, आचारेन्दुशेखरः, तिथीन्दुशेखरः, श्राद्धेन्दुशेखरः, प्रायश्चित्ते-न्दुशेखरः, प्रायश्चित्तसंग्रहः, तिथिनिर्णयः, सापिण्डी-मञ्जरी, सापिण्ड्यदीपिका,

गङ्गाभक्तकायस्थधर्मप्रदीपिका-टीका, गोत्रप्रवरनिर्णयः, व्रात्यप्रायश्चित्तनिर्णयः, इष्टिकालनिर्णयः, प्रयोगतरणिः, प्रभाकरचन्द्रतत्त्वदीपिका, तात्पर्यदीपिका, त्रिस्थलिसेतुः, कालेन्दुशेखरप्रभृतयः।

**तर्कशास्त्रे**—लक्षणरत्नमाला, तर्कभाषाटीका च

**वेदव्याख्याने**—वेदसूक्तभाष्यम्, एकश्रुतिवादश्च।

**वेदान्ते**—व्याससूत्रेन्दुशेखरः।

**सांख्ये**—लघुसांख्यसूत्रवृत्तिः।

**योगे**—पातञ्जलसूत्रवृत्तिः, पातञ्जलसूत्रवृत्तिभाष्यच्छायाव्याख्या च।

**तन्त्रे**—परमार्थसारविवरणम्, दुर्गासप्तशतीटीका-नागेशी, चण्डीपाठ-टीका, चण्डीस्तोत्रप्रयोगविधिः, कात्यायनीतन्त्रमित्यादयः।

**पुराणे**—वाल्मीकिरामायणस्य टीका—तिलकम्, अध्यात्मरामायणस्य टीका ( टीकेयं नागेशाश्रयदातुर्नाम्ना )। इत्येवं केचनमुद्रिताः केचन हस्तलेखरूपेण संकलिताश्च नागेशग्रन्था तत्रतत्रोपलभ्यन्ते। व्याकरणशास्त्रे च सारभूता अद्यत्वे शेखरादयो ग्रन्था व्याकरणशास्त्रस्य मानदण्डत्वेन स्थिता इव भान्तीति।

## व्याकरणे नागेशग्रन्थानां पौर्वापर्यम्

पाणिनीयव्याकरणशास्त्रस्य नूतनविचारप्रचाराम्बरे द्युमणिरिव राजते नागेशभट्टः सकलशास्त्रपारावारीणः। व्याकरणे प्रक्रियाया दर्शनस्य च पक्षात्रति पुरातनौ। अन्यशास्त्रस्य नैतादृशी स्थितिः। तत्र परम्परायां सप्तदशख्रीष्टशताब्द्यां वैयाकरणतल्लजः पदवाक्यप्रमाणपारावारीणो नागेशभट्ट असाधारणप्रतिभया भारतत्रसुन्धरायामाविर्बभूव। तथा स भाष्यप्रदीपव्याख्यानं उद्द्योतः, भट्टोजिदीक्षितकृताया वैयाकरणसिद्धान्तकौमुद्या व्याख्यानभूतं शब्देन्दुशेखरम्, व्याकरणदर्शनविचारभूमौ मञ्जूषाग्रन्थश्चारीरचत्। अतः प्रक्रियाधारा, दर्शनधारा, विविधव्याख्यानधाराश्च नागेशेन व्याकरणशास्त्रे तत्तद् ग्रन्थैः प्रवाहिता।

नागेशभट्टग्रन्थावलोकनेनेदं प्रकृष्टतया न वक्तुं शक्यं यद् कः ग्रन्थः पूर्वं कश्च पश्चात् प्रणीत इति। मन्ये, प्रदीपोद्द्योतेन सहैव शेखर—मञ्जूषादिग्रन्थानामपि प्रणयनं समभूदिति। सर्वशक्त्या स्वपाण्डित्यद्योतनायाभिनवविचाराय च नागोजिभट्ट उद्द्योतस्य रचनां चक्रे। उद्द्योतलेखनात् प्राक् महाभाष्ये 'कृतभूरिपरिश्रमः' इत्युक्त्या तत्र श्रद्धातिशयो नागेशस्य व्यज्यते। गोरसाभावे भोजनस्य वैरस्यप्रसङ्गवद् महाभाष्यज्ञानाभावादवैयाकरणत्वप्रसङ्ग इति धिया 'यथोत्तरं मुनीनां प्रामाण्यम्' इति व्यवस्थया चादौ महाभाष्यप्रदीपोद्द्योतस्य रचना समभवत्।

यद्यपि बृहच्छब्देन्दुशेखरग्रन्थावलोकनेन सर्वस्यादौ तस्यैव रचना प्रकल्पनीया भवति, तस्य व्यासशैलीप्राधान्यात् सिद्धान्तप्रतिपादने बहुशः असाफल्याच्च। तथापि उद्द्योतस्य व्यवस्थापनेन सममेव दार्शनिकसैद्धान्तिकव्यवहारिकपक्षाणामतिरिक्तत्वेन संकलनात् कालान्तरे ग्रन्थकारेण तेषामेव नियोजनात् तत्तद्ग्रन्थानां प्रणयनमपि संजातं कालान्तरे।

एतेन सिद्धान्तकौमुदीग्रन्थस्य व्याख्यानभूतस्य शब्देन्दुशेखरस्य च रचना सर्वतः प्राक् समजनि, ततो लघुशब्देन्दुशेखरस्य। व्याकरणदार्शनिकानां सिद्धान्तान् क्रमप्राप्तान् शब्दकौस्तुभ-वैयाकरणभूषणसारप्रभृतिग्रन्थानाधृत्य वैयाकरणसिद्धान्तमञ्जूषाग्रन्थस्य ततश्च यथोत्तरं गाम्भीर्यं सम्पादयन् वैयाकरणसिद्धान्तलघुमञ्जूषा, वैयाकरणसिद्धान्तपरमलघुमञ्जूषाग्रन्थस्य च प्रणयनं जातम्। अत्रैतेषां ग्रन्थानां गुरवः, उपाध्यायाः, अध्येतारश्चैव प्रमाणभूताः ममास्य कथनस्य साक्षिभूताश्च। एषां ग्रन्थानां मध्ये मध्ये सर्वत्रान्योन्यनामोल्लेखाद् वस्तुतो नागेशग्रन्थानां परस्परं कालनिर्धारणं दुःखशम्, प्रौढिमात्रञ्च। इदं तु सत्यं यन्नागेशग्रन्थस्य परिभाषेन्दुशेखरस्य ग्रन्थनं नूनमन्ते जातम्। नागेशो यथा अध्यापनकालेऽपाठयत्तथैव तस्य लेखनं समभवत्। पूर्वं परिभाषावृत्तिभ्यः सर्वथा भिन्नो लक्ष्यसिद्ध्यनुसारिपरिभाषाक्रम इह समाश्रितो महाविदुषा तेन। श्रीमन्नागेशभट्टस्यानितरसाधारणपाण्डित्यप्रभावादेव तदीयग्रन्थमणेः परिभाषेन्दुशेखरस्य तस्मिन्नेव कालेऽध्ययनाध्यापनपदवीमुपगतस्य बहुविधा लभ्यन्ते पाठभेदाः। ते च नागेशभट्टपट्टशिष्येण गदाकारेण पायगुण्डेमहोदयेन दर्शिता बहवो गदाटीकायाम्। शब्दानुशासनस्य पदार्थबोधे नागेशभट्टस्य महती प्रौढिरासीद् यया स्वप्राग्वर्तीनां प्रायः समेषामप्याचार्याणां सिद्धान्ताः समालोचिताः प्रत्याख्याताश्च तैः। यद्यपि परिभाषेन्दुशेखरस्य कतिपये व्याख्यातारो नागेशभट्टप्रस्थापितान् कतिपये सिद्धान्तान् प्रत्याख्यातुं भृशं प्रयतितवन्तस्तथापि तेषां संख्याऽतीवाल्पीयसी। अतश्च मेधाविनस्तेऽपि स्वविचारेषु कियदंशं यावत् सफला इति विद्वांस एव विदाङ्कुर्वन्तु।

## नागेशस्य गद्यशैली

समेषां विषयाणां प्रकरणानां विद्यानाञ्च निरूपणायैका प्रणाली भवति। भारतीयसंस्कृतवाङ्मयगद्यसन्दर्भे व्याकरणशास्त्रगद्ये निमज्जनेन पतञ्जलिप्रोक्तगद्यस्य प्रसादमाधुर्यव्यङ्ग्ययुक्तस्य चाद्यावधिर्न किमप्यन्यत् गद्यं तस्य तुलामधिरोहति। अर्थगाम्भीर्ययुक्तस्य प्रवहन् पञ्जलिगद्यस्य गतिर्यावती मनोहारिणी तावती एवार्थप्रकाशपरा। नागोजिभट्टो यद्यपि स्वग्रन्थरचनायां गद्यप्रसङ्गे महाभाष्यपन्थानमेवानुकर्त्तुं प्रयतते, परं शेषावतारभूतस्य पतञ्जलेरार्षज्ञानस्य समता साधरणेन मानवतनुग्राहिणा जनेन न कर्तुं शक्यत इति कृत्वा तैस्तोलनाभावेऽप्यन्यै-

वैयाकरणैर्नागेशस्य गद्यवैशिष्ट्यं नूनं युक्ततमम् । अतो गूढविषयाणां प्रस्थापनार्थं यावच्छक्यं प्रसादमाधुर्यादिगुणगुम्फनं नागेशेनानुष्ठितम् । अनेन तेन स्वसिद्धान्तस्थापनाय बाधारूपेण भाष्यमतमप्येकदेशि—इत्युक्त्याऽन्यथा कृतम्, यस्याद्यावधिर्न कोऽप्येतादृशः समालोचको लोचनमञ्चति यो नागेशोक्तिं खण्डयेत् । नागेशरचनासु कोऽपि सिद्धान्त उपेक्षणीयो नास्ति । यत्र नागेशभट्टा आग्रहयुता भवन्ति यदस्या भाष्यपङ्क्तेरयमेवाशयस्तस्य खण्डनं न कृतमद्यावधिः केनापि तत्त्वसमालोचकेन । किञ्च, ते बहोः कालादक्षुण्णतया प्रवहन्तानपि शब्दानुशासनसिद्धान्तान् तत्साधिका आकरयुक्तींश्चान्यथा संयोज्यान्यथैव व्यवस्थाप्यन्ते । अत एव शाब्दिकानां पदार्थविमर्शविषये एष एव सिद्धान्त इति प्रतिपादयितुं महीयांशोऽपि विद्वांसो व्यामुह्यन्ति । इदं प्राचीनमतम्, इदञ्च नवीनमतमिति व्याहरन्तो विलोक्यन्ते ते । इयञ्च परिपाटी सर्वेषान्नागेशग्रन्थानाम् । ते च ग्रन्थनिर्माणे समासशैलीं सूत्रशैलीं वाऽनुसरन्ति ।

नागेशभट्टस्य व्याकरणशास्त्रे प्रमाणभूतेषु लघुशब्देन्दु-मञ्जूषा—परिभाषेन्दुप्रभृतिग्रन्थेषु शेखरग्रन्थो म०म०पं०भट्टोजिदीक्षितरचितसिद्धान्तकौमुद्या व्याख्यानभूतः । तत्र च खण्डन-मण्डनप्रक्रिया नागेशनाश्रिता । यतोह्युक्तं लघुशब्देन्दुशेखरे आदावेव प्रतिज्ञावाक्ये—

'मनोरमोमार्धदेहं लघुशब्देन्दुशेखरम्[१]' इति ।

प्रदीपोद्द्योतष्टीकाभूतोऽपि पदे-पदे प्रदीपातिरिक्तं किञ्चिन् मतं प्रस्थापयति । कुत्र-कुत्र चैवमिति जिज्ञास्यमानेन मया स्वनिबन्धे तन्त्रागमप्रभावस्य कतिचिदंशाः प्रकाशिताः । तस्यात्र निरूपणमप्रकरणान्नयुक्तम् ।

वैयाकरणसिद्धान्तमञ्जूषा-लघुमञ्जूषा-परमलघुमञ्जूषा च नागेशभट्टस्य व्याकरणदर्शनमुद्दिश्य स्वतन्त्ररचना । अत्र व्याकरणदृष्टया बहवो दर्शनविषया निरूपिताः सन्त अपि सृष्टिक्रमः, तद्बीजभूता माया, ब्रह्मणः सत्यत्वम्, जगतो मिथ्यात्वम्, ख्यातय इत्यादयो विषया भूषणग्रन्थतोऽऽधिक्येन पर्यालोचिताः । शक्तिर्बोधजनकतारूपा, ज्ञानार्थकधातूनां सकर्मकत्वोपपादनाय फलव्यापारोभयनिरूपिता शक्तिः, आवरणभङ्गरूपं फलं धातुवाच्यम्, प्रत्यक्षस्थलेऽन्तःकरणं चक्षुरादीन्द्रियप्रणालिकया विषयदेशं गत्वा तत्तदाकारेण परिणमति । सैव वृत्तिरित्युच्यते । ज्ञानपदव्यवहर्तव्यत्वेन चावरणभङ्गो जायते । आवरणञ्च विषयावच्छिन्नचैतन्याच्छादिका ज्ञाननिष्ठावरकशक्तिः । अयमेवावरणभङ्गः फलम्, ज्ञानञ्च व्यापारः, 'फलव्यापारयोर्धातुः' इत्यादिकारिकाव्याख्यानावसरे 'फलव्यापारयोः'

---

१. लघु० शे०—आदौ मङ्गलश्लोकः ।

इति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक्शक्तिः 'एकवृन्तगतफलद्वय' न्यायेन पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिरित्यादयो अनेके शास्त्रान्तरसिद्धान्ता वाचोयुक्तिभिः शाब्दिकसिद्धान्तत्वेन वैयाकरणभूषणसार ग्रन्थे समावेशिताः। तत्र समापतितान् दोषान् अपास्य, श्रुत्यङ्गत्वेन साधितस्यापि शब्दानुशासनस्य धूलिधूसरां दर्शनशास्त्रपद्धतिं शब्दविद्यावदातमानसानामन्येषाञ्च दार्शनिकानां वाक्यपदीयादिनिर्दिष्टदिशा नयनातिथीकृत्य तर्कैकजालजटिलाभिस्तार्किकप्रभृतिदर्शनशास्त्रप्रणेतृभिस्तत्त्वतया समर्थितमतत्वं निराकृत्य शब्दशास्त्रस्य पारमार्थिकरूपं निरूपयितुं नागेशभट्टेन मञ्जूषाग्रन्थो मणिमञ्जूषैव निरमायि। अत्र ग्रन्थे दर्शनविषयिणी गभीरतरा खण्डन-मण्डनपरायणा भाषा शैली च नूनं मनोहरति प्राज्ञानाम्। एवमेवान्येष्वपि ग्रन्थेषु ज्ञेयम्।

## नागेशभट्टे तन्त्रप्रभावस्य कारणम्

इदं हि मयात्र भूमिकायां संसाधितं यन्नागेशभट्टो महाराष्ट्रीयः सन्नपि काश्यामेव लब्धजन्मा काश्यामेव यापितजीवनः काशीपतिं भगवन्तं विश्वेश्वरं वागीश्वरीं च स्वेष्टत्वेनाङ्गीचकार, स्वजीवनस्य समग्राया रचनासम्पत्तेश्चार्पणं शक्तिसम्वलिते शिवपादपद्मे समर्पयामास 'स्वोक्तौ सम्यगुपपाद्य शिवयोरर्पितो मया' इत्युक्त्या। अत्र शोधनिबन्धस्य प्रथमाध्याये शैवधर्मस्य प्राचीनार्वाचीनस्थितिः, विभिन्नदेशेषु तस्य प्रभावः, वेदादारभ्य व्यवहार-शास्त्र-परम्परानुरोधेनाद्यत्वे तस्य स्वरूपमित्यादयो विषया मया याथातथ्येनालोचिताः। ज्ञानस्याधिष्ठातृदेवयोः शिवशक्त्योस्तत्र तत्र शास्त्रेषु प्रतिष्ठानात्तन्त्रे च तस्यैव तत्त्वयुग्मस्याचाराच्छिवशक्त्योर्व्यापकत्वम् सर्वेशत्वञ्चानायासेन सिद्धयति। व्याकरणशास्त्रस्यागम इति पदव्यवहारादागमसिद्धान्तेन व्याकरणसिद्धान्तानामभेदान्नागेशेनागमतन्त्रशास्त्रसिद्धान्तान् स्वव्याकरणकृतिषु स्पष्टतया स्वीकृतमिति नात्र किञ्चिच्चित्रम्। किञ्च, नागेश इति पदेनापि शिवतत्त्वस्यैव बोधोदयान्नागेशभट्टाः शिवेनात्मनः सारूप्यं प्रकल्प्य व्याकरणपदार्थान् व्याख्यातवन्तः। किञ्च, नागेशभट्टस्य गुरवः प्रायः शिवभक्ताः शक्तिभक्ता विष्णुभक्ताश्चासन्। व्याकरणगुरोर्हरिदीक्षितस्य पितामहाः श्रीमन्तो भट्टोजिदीक्षितमहोदयाः स्वामरकीर्तेः सिद्धान्तकौमुद्याः अवसाने—

भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी।
प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः॥

इति प्रतिपादयन्तः स्वरचनां 'त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये' इति सिद्धान्तेनार्पयामासुः। तत्पुत्रपौत्रपरम्परायां शिवशक्त्योर्भवानीविश्वनाथापरनामधेययोरभीष्टदेवत्वेन स्मरणात्तत्परम्पराया नूनं प्रभावः नागेशे निपतित

इत्यत्र लेशतोऽपि शङ्का नास्ति । किञ्च, सतीशिवभट्टसंज्ञकौ जननीजनकौ विशेषतो भागवतो विश्वेश्वराराधनेनान्ते पतञ्जलिकल्पं नागेशं सुतमासादितवन्तौ । भगवतः शिवस्य नागेन जगताधारेण सहस्रफणिना अभेदसम्बन्ध अनादिकालादेव सिद्धः, यावती प्राचीना सृष्टिस्ततोऽपि पुराणःसहस्रफणिर्भगवान् शेषोऽनादिः' सचाभूषणं शिवस्य । अतः शिवस्यानादितासिद्धेः सत्वेन सर्वजगदाधारस्यापि धारकत्वेन निखिलब्रह्माण्डाधिपतित्वं तस्य सुतरां सिद्धयति । परमार्थरूपेण शब्दास्तस्याखिलब्रह्माण्डमयस्य शिवस्यानादिसिद्धस्वरूपस्य विषये को विसम्वादः कुर्यात् । नागेश इति पदस्य निरुक्तिस्तु नागानामिर्लक्ष्मीः तं श्यति तनूकरोतीति प्रसिद्धया जगताधारकस्यानन्तशेषस्य गौरवमपि यो वर्द्धयत्यसौ 'नागेशः' इति रीत्या नागेशशब्दः शिवापरपर्यायः सिद्धयति । अतोऽऽत्मरूपस्य शिवकीर्तेर्वितान एव नागेशो विस्तारितवानित्यत्र काचिद् सन्देहस्थितर्नास्ति । अतः शैवशाक्त-सिद्धान्तमूलस्य तन्त्रशास्त्रस्य सिद्धान्तो यदि नागेशेन स्वसामर्थ्यसार्थक्याय विस्तारितस्स्यात्तर्हि तेन सुकृतमेवकृतं स्यादिति सुधियो विभावयन्तु ।

## कृतज्ञताज्ञापनम्

'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' इति सिद्धान्ताद् व्याकरणाचार्यकक्षायान्नागेशग्रन्थाध्ययकाल एवैका जिज्ञासाऽनुदिनं दृढतराऽभवत् यन्नागेशभट्टः स्वकाले मर्यादापदवीं गतोऽपि व्याकरणशास्त्रसिद्धान्तानालोच्याप्रतिमोपपत्तिपरम्पराभिर्दर्शनान्तरीयापसिद्धान्तान् अपास्य वाक्यपदीयस्य दुरधिगमार्थगिरिगह्वरगहनशब्दगर्ते निगूढान् दोषान् दूरीकृत्य च व्याकरणशास्त्रस्य दर्शनशास्त्रत्वं व्यवस्थापयन्नन्येषां दार्शनिकशिरोमणीनां सङ्गतिं स्थातुं शाब्दकुलं युक्तिततिहेतिभृतं कृतवानिति सोपपत्तिभिर्निरूपणीयम्। गच्छता कालेनेयं जिज्ञासा समूला सती शोधकायार्थं प्रेरयन्ती क्रियारूपेणावसरं प्राप्ता। तदारभ्य शनैः शनैः पूर्वं नागेशग्रन्थानां उद्योतादारभ्य मञ्जूषाप्रभृतीनामध्यनं प्रारब्धम्, गवेषितानि च तत्र तत्र प्राचीनाचार्येभ्यो नागेशभट्टस्य मतभेदस्थलानि। पूर्वं मम शोधविषयः 'व्याकरणे नागेशभट्टकृतिविमर्शः' इत्यासीत्, किन्तु, तन्त्रग्रन्थस्वारस्यावगमेनैतज्ज्ञातं यत्तन्त्रशास्त्रस्य बह्वः सिद्धान्ता नागेशेन स्वसिद्धान्तरूपेणाङ्गीकृताः। पुनश्चेयमिच्छाबलवती बभूव यत्तन्त्रग्रन्थसिद्धान्तानामेव व्याकरणे नागेशभट्टकृतौ प्रभावोऽन्वेषणीय इति। तदानीं प्रार्थिताऽनुसंधानसमितिर्विषयस्यास्योपयोगितां विभाव्य 'व्याकरणे नागेशभट्टकृतिषु तन्त्रस्य प्रभावः' इति विषयं स्वीकृतवती। तदनु अत्र विषये स्वल्पेनैव कालेन यन्मयाऽनुसंधातुं शक्यं तद् प्रेक्षावतां समक्षं प्रस्तुतम्।

तन्त्रागमस्य व्याकरणशास्त्रस्य च दुरवगाहितां जानन्त्येव प्राज्ञाः। एकैकमपि शास्त्रं भृशं परिश्रमायालम्, परमगतौ सत्यान्तत्र प्ररूढिः दुःखायेति न तिरोहितं प्रेक्षावताम्। स्वाभाविक्याश्चास्यां स्थितावन्धतमसि निमज्जितस्य जनस्य कृते प्रदीपमिव मार्गे नयतां कस्यचिदकारणकरुणावरुणालयजनस्येव ममानुपदमार्गदर्शनं विदधतां परमकारुणिकानां कैरवकोविदकुलकलाधराणां विपश्चिदपश्चिमानां सर्वतन्त्रस्वतन्त्राणां श्रीमतामाचार्यपदवीविभूषितानामस्मद्गुरुवर्याणां डॉ० कालिकाप्रसादशुक्लमहोदयानां यदि कृपा नाभविष्यत्तदायं शोधप्रबन्धः पूर्णतान्नाधिगमिष्यत्।

अद्यत्वे उपकारस्मरणपरम्परा निभाल्यते। तत्र किञ्चिल्लेखनेनैवोपकारं स्मारं-स्मारं स्वकर्तव्यतासमर्पणपुरस्सरं निबन्धाः प्रस्तूयन्ते, परं ममायं यत्किञ्चिदपि लेखनाध्ययनकर्तव्यजातं तन्निखिलमस्मद्‌गुरुत्रर्याणां कृपयैवेत्यत्र किञ्चिदन्यत् कथनन्नापेक्षते। कैः शब्दैस्तेषामहमुपकारं ज्ञापयामि, रात्रिन्दिवं च कदापि तत्र गते मयि तैः स्वनिर्देशाः सदाऽस्मभ्यं दत्ताः, संशोधनेन परिष्कृताश्च लेखाः। अतस्तेभ्यः श्रद्धासुमनांसि समर्प्य तेषामाशिषं कामये। तथा हि—

शाब्दिको हि महाप्राज्ञः काव्यस्वारस्यलुब्धकः।
परापरा च विद्यायां निष्णातो लोकविश्रुतः॥ १॥

तपस्विने शास्त्रविचक्षणाय
महानुभावाय गुणोत्तमाय।
राधापदायार्पितमानसाय
दयालवे मे प्रणतिः सदा स्यात्॥ २॥

पदं समाश्रित्य हि यस्य मादृशाः
सुयोग्यशिष्या बहवः सुशिक्षिताः।
तमार्यवृत्तं गुरुवर्यकालिका—
प्रसादशुक्लं शिरसा नमाम्यहम्॥ ३॥ इति॥

शोधप्रबन्धनिबन्धनप्रसङ्गेन येषामन्तेवासित्वं लब्धं मया, यैश्च स्वस्नेहाम्बुधौ भृशं मामवगाहितं विस्तारितं च मुधासुधाविषयसम्बन्धिवचनं तं शास्त्रलोकव्यवहारमर्यादाधुरन्धरं विद्वद्वरं कैलासलोकवासिनं श्रीभूपेन्द्रपतित्रिपाठिनं व्याकरणविभागाध्यक्षचरं प्रणतिः पुरस्सरं भावयामि हृदये। तथा हि—

वागधिष्ठानिकादेवी गेहिनीव विजृम्भते।
तं नौमि शिरसा नित्यं श्रीभूपेन्द्रगुरुं वरम्॥ इति॥

चित्सुधासमुद्रसमुद्भूतस्य शास्त्रानन्दप्रणाल्यानुभूतशब्दतत्त्वस्य नानागमज्ञानविज्ञानविद्योतितान्तःकरणस्याद्यत्वे तपस्विशिरोमणेराचार्यकुलशेखरायमाणव्याकरणविभागीयाचार्यपदमलङ्कुर्वतः शिष्यज्ञानाय शास्त्ररक्षणाय च विधातुः पृथक्-सृष्टिभूतस्य पण्डितप्रवरश्रीरामप्रसादत्रिपाठिगुरुवर्यस्य नाम कस्य कृते प्रमोदाय न कल्पते। एतैः काले-काले च मां प्रबोध्य शोधनिबन्धपूर्त्तये भृशमुप-

कृतमिति शब्दातिरिक्तसामर्थ्याभावात् कृतज्ञतया च समर्प्यते पद्यप्रसूनाञ्जलिरयम्—

योवेत्ति वेदाङ्गमुखं समस्तं
विद्या-सदाचार-तपोऽभिवन्द्यम् ।
श्रद्धास्पदं शिष्यगणाभिजुष्टं
विद्वत् सुपूज्यं शिवभक्तियुक्तम् ॥ १ ॥

अध्यापयन्तं सततं विनेयान्
सदोपकुर्वन्तमहं दयालुम् ।
रागादिदोषै रहितं गुरुं तं
रामप्रसादं शिरसा नमामि ॥ २ ॥

पाणिनीया हि या गंगा सञ्चरन्ती मुखाम्बुजे ।
पुनाति निखिलाँल्लोकान् तं नमामि गुरुं वरम् ॥ ३ ॥ इति ॥

पदवाक्यप्रमाणपारावारीणा ज्ञानगौरवग्रन्थीन् सततं भेदयन्तः सदाध्ययनाध्यापनकान्तारचारिणो विश्वविख्यातविद्यावैभवा विदुषान्निकाये मूकीकृता वादिनः सभाभाषणतत्परा विद्वत्कुलमौलिमणय आत्मारामाः सम्प्रति वेदान्तविभागीयाचार्यपदमलङ्कुर्वाणा दयालवो मे गुरवो विद्यावाचस्पतयः कैः शब्दैः पाठनाय बोधनाय चोपकारस्मरणरूपेण स्मरणीया आचार्यदेवस्वरूपमिश्रा इति न जाने, तथापि स्खलितैः शब्दैः स्मरामि—

त्रिविष्टपानन्दपयोधिलक्ष्म्या
सदाशिवस्पर्शपवित्रतोया ।
अनेक—तीर्थातिसमृद्धवेगा
भृशं निपीता विबुधैरतृप्ता ॥ १ ॥

न्याये हिमाद्रौ परिक्रीडमाना
पदप्रपन्ना परमानभङ्गा ।
गङ्गेव गीर्यस्य हरेर्जयन्ती
देवस्वरूपं तमहं नमामि ॥ २ ॥ इति ॥

स्नेहाशिषाभ्याञ्च ये मम जीवने सदोत्कर्षं कामयन्ते समीहन्ते च मम

कल्याणन्तेऽऽचार्यवरा सम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य पूर्वकुलपतयः पं० करुणापतित्रिपाठिनः सदोपकारकत्वेन स्मरणीया वन्दनीयाश्च। नव नवोत्साह-प्रदानेन ते सततं कार्याय प्रेरयन्ति। नामकुलानुरूपगौरवजुष्टास्ते विद्यायां परोपकारे च सदा तत्परा धर्मराजपदवीं भूषयन्तो राजन्ते। अतः कार्तज्ञ्यज्ञापने-नानेनाहं सन्तोषमनुभवामि।

'वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः। करणं परोपकरणं येषां केषां न ते वन्द्याः' इत्युक्ति चरितार्थयन्तः विद्याविद्योतितान्तःकरणा नानोपकारै-र्विद्वद्भरणास्तलस्पर्शिप्राच्यप्रतीच्यविचारधुरीणा सारस्वतवैभवे पारावारीणाश्च श्रीमन्तो डॉ० विद्यानिवासमिश्राः काशीविद्यापीठविश्वविद्यालये कुलपतिपदमल-ङ्कुर्वाणा मम सदोपकारकत्वेन स्मरणीयाः। ते हि तन्त्रागमशास्त्रे—'किञ्चित् प्रामाणिकं लेख्यम्, अत्र शास्त्रे दुर्लभपाण्डुलिपीनां सम्पादनं प्रकाशनं च त्वया विधेयम्, प्रमाणिकाश्च लेखास्तत्तद् पत्र-पत्रिकासु त्वया लेख्याः' इत्याशीर्वचनैः प्रेरणैश्च मम बोधोत्सवो विधीयमानास्ते नूनं महानुपकारिणः। तदुच्यते—

विद्याविनोदैः परिहृष्यमाणाः सञ्जातहर्षा विविधानुकल्पैः।
नीतौ च दक्षाः सततं सुपक्षा विद्यानिवासाः सुधियो जयन्ति॥

अद्यत्वेऽस्माकं महनीये विश्वविद्यालये कुलपतिपदे राजन्ते विविधविद्या-विशारदा आचार्यपदभाजा डॉ० विश्वनाथवेङ्कटाचलमहोदयाः। एते हि स्वविद्या-प्रकाशैर्विद्योपद्रवकारकनानाविघ्ननिरासैश्चाहो! साम्प्रतं धन्यतां भजन्ते। ते हि स्वाशिषा स्वप्रेरणया चानुदिनं मामुपकुर्वन्ति प्रकाशयन्ति च विद्याक्षेत्रे पादप-शाखोपशाखाकल्पा नाना पक्षाः। युवजानीं विश्वेश्वरं सततं स्मरन्नेवैते नैतिकं सञ्जतं च जीवनं जीवन्त अस्य महतो विश्वविद्यालयस्य विद्यावैभवप्रकाशनाय नानाविद्वद्गोष्ठी-विचारपरिचर्चा—गभीर ग्रन्थप्रकाशनादिप्रयत्नैरनुदिनं नवनवै-रुत्साहैः समेधयन्ति संस्कृतज्ञान्। अतः सपर्यावचोभिस्तानभिनन्दयामि।

व्याकरणशास्त्रीयदर्शनतत्त्व मुद्गमस्थानन्तन्त्रागमशास्त्रमेवेति तस्य दुरव-गाहितां ज्ञात्वैव विषण्णो मे हृदयो विविधविद्याविद्योतितान्तःकरणानां सदास्वकर्त-व्यनिर्वाहारूढप्रतिज्ञावतां शास्त्रैकपक्षपातिनां सांख्ययोगतन्त्रागमविभागाध्यक्षच-राणां पण्डितप्रवरव्रजवल्लभद्विवेदचरणानामाश्वासनेन शोधकर्मणि प्रवृत्तोऽहमे-

तत्कार्यं साधितवान् । महान्तस्ते विचारसञ्चारसहयोगादिभिः सदा स्मरणीयाः । अत उक्तिरियं सार्थक्यं भजते—

तन्त्रशास्त्रैकमर्मज्ञो नानादर्शनपारगः ।
व्रजवल्लभसुधीर्नित्यं भूयात्तु वरदो मम ।। इति ।।

अत्र ग्रन्थे प्रथमाध्याये येभ्यो ग्रन्थेभ्यो विषया गृहीताः सन्ति तत्र प्राथम्येनायाति नाम 'शैवमत' इति ग्रन्थस्य । ग्रन्थोऽयं विहारराष्ट्रभाषा परिषदा पाटलिपुत्रतः १९५५ ख्रीष्टाब्दे केन्द्रीयशिक्षामन्त्रालयेन दिल्याः सहयोगेन डॉ० यदुवंशीमहानुभावेन प्रकाशितः । ग्रन्थस्यास्य लेखकाः प्रकाशकाश्च ममोपकारकत्वेन नूनं धन्यवादार्हाः ।

अत्र ग्रन्थप्रकाशने सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिभिः डॉ० हरिश्चन्द्रमणित्रिपाठिभिर्यः सहयोगो विहितस्तदर्थन्तेऽतीवधन्याः । प्रकाशनकर्मण्येतेषां विचारा नितान्तं मर्षणीया महनीयाश्च । प्रतिबोधनेनोत्साहवर्धनेन चैते सततं प्रकाशन-सम्पादन-लेखनकर्मणि प्रेरयन्त्यस्मान् । अत एतेषामुपकारं शिरसा आवहामि कृतज्ञताञ्च ज्ञापयामि ।

अन्ते, अस्य ग्रन्थस्य मुद्रकाः स्नेहभाजः विजयप्रेसस्वामिनः श्रीगिरीशचन्द्रमहोदया अपि आशिषा सभाज्यन्ते । अतीवसौम्या इमे निरन्तरं कार्यकारित्वेन मामुपकुर्वन्ति स्म ।

एवञ्च ज्ञाताज्ञातरूपेण येभ्यः किञ्चिद् साहाय्यमासादितं तेभ्यः कृतज्ञतां हृदयेनावहामि उपहरामि च सर्वेश्वरे यामलीभूते परतत्त्वे भगवति विश्वनाथपदे कृत्तिमेनां यां समर्पयनमन्दानन्दमनुभवति मे चेतः, अपक्षीयते च खेद इति शम् ।।

वाराणस्याम्,
गुरुपूर्णिमायाम्,
विक्रमसम्वत–२०४५
दिनाङ्कः–२९–७–१९८८ ई०

विदुषां वशंवदः
**राजनाथत्रिपाठी**
प्राध्यापकः,
आगमस्य, सांख्ययोगतन्त्रागमविभागे,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,
वाराणस्याम् ।

# विषयाऽनुक्रमणिका


| विषयः | | पृष्ठाङ्कः |
|---|---|---|
| उपोद्घातः | ... | १-२३ |
| आगमशब्दार्थः | ..... | २-३ |
| तन्त्रशब्दार्थः | ..... | ३-६ |
| नागेशभट्टस्य देशकालौ | ..... | ६-७ |
| नागेशभट्टस्य पितरौ | .... | ७-८ |
| नागेशभट्टस्य गुरवः | ..... | ८-१० |
| नागेशभट्टस्य पत्नी-पुत्र-शिष्याः आश्रयदातारश्च | ..... | १०-१२ |
| नागेशभट्टविषये लोकोक्तयः | ..... | १२-१३ |
| नागेशभट्टकृतयः | ..... | १३-१४ |
| व्याकरणे नागेशभट्टग्रन्थानां पौर्वापर्यम् | ..... | १४-१५ |
| नागेशस्य गद्यशैली | ..... | १५–१७ |
| नागेशभट्टे तन्त्रप्रभावस्य कारणम् | .... | १७–१८ |
| कृतज्ञताज्ञापनम् | ..... | १९-२३ |
| **प्रथमोऽध्यायः** | | **१-६३** |
| मङ्गलाचरणम् | ..... | १ |
| नागेशभट्टः शैवः | ..... | १-२ |
| शैवधर्मस्य भारतीयजीवने प्रभावस्तस्य स्वरूपञ्च | ..... | २ |
| ऋग्वेदे शैवधर्मस्वरूपम् | ..... | २-४ |
| यजुर्वेदे शैवधर्मस्वरूपम् | .... | ४-६ |
| रुद्रशब्दनिरुक्तिः | ..... | ६-८ |
| अथर्ववेदे शैवधर्मस्वरूपम | ..... | ८-११ |
| ब्राह्मणग्रन्थेषु रुद्रस्वरूपम् | ..... | ११-१४ |
| रुद्रोपासने लिङ्गपूजा | ..... | १४-१६ |
| उपनिषत्सु रुद्रोपासनम् | ..... | १६-१८ |
| सूत्रग्रन्थेषु रुद्रस्वरूपम् | ..... | १८-२० |
| रुद्रपूजायां शक्तिपूजा | ..... | २०-२१ |
| विनायकस्याराधनम् | ..... | २१-२२ |
| रामायणे शैवधर्मस्वरूपम् | ..... | २२-२५ |
| महाभारते शैवधर्मः | ..... | २५-२७ |

| विषयः | | पृष्ठाङ्कः |
|---|---|---|
| पुराणेषु शैवागमः | .... | २८-२९ |
| काव्येषु शैवधर्मपरम्परा | ..... | २९-३४ |
| पुराण-काव्योत्तरकाले शैवधर्मस्य स्वरूपम् | .... | ३४ |
| उत्तरभारते शैवधर्मस्वरूपम् | ..... | ३५-३८ |
| दक्षिणभारते शैवधर्मस्वरूपम् | ..... | ३८-३९ |
| दक्षिणभारते शैववैष्णवानां स्थितिः | ..... | ३९-४६ |
| लिङ्गायता वीरशैवाश्च | ..... | ४६-४८ |
| कश्मीरे शैवधर्मस्वरूपम् | ..... | ४८-५० |
| नन्दिकेश्वरमते दार्शनिकविचारतत्त्वसारः | ..... | ५१ |
| कश्मीरीयशैवाद्वैतदर्शने नन्दिकेश्वरस्य प्रभावः | ..... | ५१-५५ |
| बाह्यदेशेषु भारतीयशैवधर्मप्रभावः | ..... | ५५-५६ |
| नेपालदेशे शैवधर्मस्वरूपम् | ..... | ५६ |
| चम्पाद्वीपे शैवधर्मस्वरूपम् | .... | ५७-६१ |
| यवद्वीपे शैवधर्मस्वरूपम् | ..... | ६१-६२ |
| बालि-सुमात्रादिद्वीपेषु शैवधर्मस्य स्थितिः | ..... | ६२-६३ |
| **द्वितीयोऽध्यायः** | | **६४-१०३** |
| नागेशाभिमतः सृष्टिप्रक्रियाया विमर्शः | ..... | ६४-६५ |
| नागेशभिमतसृष्टिप्रक्रियायास्तान्त्रिकसृष्टिप्रक्रियात्वम् | ..... | ६६-६९ |
| श्रीतन्त्रालोकानुसारिसृष्टिक्रमः | ..... | ६९ ७२ |
| मातृकाचक्रविवेकानुसारेण सृष्टिक्रमः | ..... | ७२-७३ |
| वरिवस्यारहस्ये सृष्टिक्रमः | ..... | ७३-७५ |
| प्रपञ्चसारप्रक्रियया सृष्टिविचारः | ..... | ७५-८० |
| शारदातिलकसम्मतसृष्टिक्रमः | ..... | ८०-९१ |
| योगिनीहृदयदृष्टया सृष्टिस्वरूपविमर्शः | ..... | ९१-९५ |
| कामकलाविलासदृष्टया सृष्टिवर्णनम् | ..... | ९५-१०० |
| महानयप्रकाशग्रन्थरीत्या सृष्टिविचारः | ..... | १००-१०२ |
| निष्कर्षः | ..... | १०२-१०३ |
| **तृतीयोऽध्यायः** | | **१०४-११६** |
| नागेशाभिमतवाक्चतुष्टयस्य तान्त्रिकत्वम् | ..... | १०४-११२ |
| नागेशाभिमतशक्तेस्तान्त्रिकत्वम् ( नैयायिकमीमांसकप्राचीनवैयाकरणमतेषु शक्तेः स्वरूपम् ) | ..... | ११२-११४ |

| विषयः | | पृष्ठाङ्कः |
|---|---|---|
| नागेशभट्टाभिमतं शक्तेः स्वरूपम् | ..... | ११४-११७ |
| तान्त्रिकाभिमतशक्तेः स्वरूपम् | ..... | ११७-११९ |
| **चतुर्थोऽध्यायः** | | **१२०-१४७** |
| महावैयाकरणनागेशभट्टाभिमतबौद्धार्थस्य तान्त्रिकत्वम् | | |
| बौद्धपदार्थस्य स्वरूपनिर्वचनम् | .... | १२० |
| व्याकरणशास्त्रे बुद्धेः स्वरूपम् | ..... | १२०-१२१ |
| नानाशास्त्रदृष्टचा बुद्धेर्गुणाः | ..... | १२१-१२३ |
| जैमिनीयनये बुद्धेः स्वरूपम् | ... | १२४ |
| औपनिषदां तार्किकाणाञ्च मते बौद्धपदार्थविवेनचम् | ..... | १२४ |
| पातञ्जले योगदर्शने च बौद्धार्थविवेचनम् | .... | १२४-१२५ |
| वेदान्तदर्शने बौद्धपदार्थः | ... | १२५-१२६ |
| योगवासिष्ठे विष्णुपुराणादिषु च बौद्धपदार्थसत्तासाधनम् | ..... | १२६-१२७ |
| नागेशोपाध्यायमते बौद्धपदार्थविचारः | ..... | १२८-१३४ |
| तन्त्रागमदृष्टचा बौद्धार्थपदार्थविवेचनम् | ..... | १३५-१३६ |
| मातृकाया बौद्धार्थे उपयोगः | ..... | १३६-१४३ |
| इदन्ता—अहन्तयोश्च स्वरूपम् | ..... | १४३-१४४ |
| विमर्शस्वरूपम् | ..... | १४४-१४५ |
| तन्त्रागमशास्त्रे आन्तरस्यैवार्थस्य बहिः प्रकाशनम् | ..... | १४५-१४७ |
| **पञ्चमोऽध्यायः** | | **१४८–१९९** |
| भाष्योद्द्योते लघुशब्देन्दुशेखरस्य संज्ञाप्रकरणादौ च नागेशभट्टस्य | | |
| माहेश्वरसूत्रविषये विचारः | ..... | १४८-१४९ |
| लघुशब्देन्दुशेखरे चतुर्दशसूत्राणां माहेश्वरत्वस्वीकृतिः | ..... | १४९-१५२ |
| महाभाष्योद्द्योते चतुर्दशसूत्राणां माहेश्वरत्वसाधनम् | ..... | १५२-१५४ |
| तन्त्रशास्त्रे माहेश्वरसूत्राणां तत्रत्यवर्णानाञ्च विमर्शः | ..... | १५४-१५७ |
| उपनिषत्स्वहमिति पदस्य निर्देशः | ..... | १५७-१५८ |
| विरूपाक्षपञ्चाशिकायामहमित्यस्य विचारः | ..... | १५८-१५९ |
| वरिवस्यारहस्ये अहमितिवर्णघटितस्य माहेश्वरसूत्रसमुदायस्य- | | |
| सर्वशक्तिमत्वम् | ..... | १६०-१६१ |
| नित्याषोडशिकार्णवे माहेश्वरसूत्रोक्तवर्णानां स्थितिसमीक्षणम् | ..... | १६१-१६३ |
| परात्रिंशिकादृष्टचा माहेश्वरसूत्रोक्तवर्षसमाम्नायसमीक्षणम् | ..... | १६३-१७१ |
| स्वरशब्दनिरुक्तिः | ..... | १७१-१७३ |

**विषयः** **पृष्ठाङ्कः**

महार्थमञ्जरीग्रन्थोक्तरीत्या माहेश्वरसूत्रोक्तवर्णविमर्शः ... १७३-१७७
ईश्वरप्रत्यभिज्ञाविमर्शिनीव्याख्यानुरोधेन माहेश्वरसूत्रगत-
वर्णानां विमर्शः ..... १७७-१७८
वातुलशुद्धाख्यतन्त्रोक्तं वर्णविज्ञानं माहेश्वरसूत्रवैशिष्टच-
साधकम् .... १७८-१७९
वर्णानां देवाः स्वरूपाणि फलानि च ..... १७९-१८०
माहेश्वरसूत्रविषये कङ्कालमालिनीतन्त्रोक्तवर्णस्वरूपम् ..... १८०-१८१
शारदातिलकग्रन्थोक्तवर्णानां माहेश्वरसूत्रोक्तवर्णैः सह साम्यम् ..... १८१-१८४
मातृकातो मन्त्रोत्पत्तिः ..... १८४-१८५
अन्यतन्त्रागमग्रन्थेषु माहेश्वरसूत्रोक्तवर्णस्थितिः ..... १८५-१९२
कामधेनुतन्त्रे वर्णमातृकाणां स्वरूपम् ..... १९२-१९३
निष्कर्षरूपेण महामहोपाध्यायनागेशोक्तमाहेश्वरसूत्रविवृत्तिः
सर्वथा तन्त्रागमानुगामिनी ..... १९३-१९४
उपसंहारः ..... १९५-१९६
**परिशिष्टम्–१** ..... **१९७–१९९**
प्रबन्धे आनुपूर्वीकानि सहायकग्रन्थनामानि
**परिशिष्टम्–२** ..... **२००–२०३**
उद्धृतग्रन्थानां लघुशब्दसङ्केतः
**अशुद्धिसंशोधनम्** ..... **२०४**

॥ श्रीगणेशाय नमः ॥

# व्याकरणे नागेशभट्टकृतिषु तन्त्रस्य प्रभावः

## प्रथमोऽध्यायः

## नागेशभट्टः शैवः

सुधारश्मिश्चन्द्रः शिरसि जटिले भात्यनुपमं
विषं कण्ठे ब्रूते जगदवनशीलं परकृपाम् ।
त्रिशूलं यस्येदं विगमयति शूलानि भजतां
शिवं तं वन्देऽहं त्रिनयनमुमाशक्तिसहितम् ॥

गङ्गाधरो विरूपाक्षो धूर्जटी चन्द्रभूषणः ।
शितिकण्ठो महेशानः शङ्करः शङ्करोतु नः ॥

तत्र महामहिमस्वानामधन्याः श्रीमन्तो नागेशभट्टाः परमशैवा आसन् इति तत्र तत्र ग्रन्थमङ्गलाचरणैरवगम्यते । तानि च मङ्गलानि महाभाष्यस्योद्द्योतादौ—

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् ।
पाणिन्यादिमुनीन् वन्द्यान् पितरौ च सतीशिवौ ॥

नागेशभट्टो नागेशभाषितार्थविचक्षणः ।
हरिदीक्षितपादाब्जसेवनावाप्तसन्मतिः ॥ इत्यादयः ।

परिभाषेन्दुशेखरे च—

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ इति ।

बृहच्छब्देन्दुशेखरे लघुशब्देन्दुशेखरे च—

पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः ।
शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः ॥

याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीशाद् रामतो लब्धजीविकः ॥

नत्वा फणीशं नागेशस्तनुतेऽर्थप्रकाशकम् ।
मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम् ॥

मञ्जूषा-लघुमञ्जूषा-परमलघुमञ्जूषायाञ्च—

नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः ।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥

शिवं नत्वा हि नागेशेनानिन्द्या परमालघुः ।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥ इत्यादयश्च ।

यद्यपि तत्र तत्र मङ्गलश्लोकेषु शिवभट्टसतीदेवीति नामभ्यां नागेशेन स्वपितरौ स्मृतौ, तथापि परमशिवभट्टारकस्य परमभट्टारिकाशिवायाः सतीत्यपरनामधेयायाश्च प्रणिपातेनायं नागेशः शैव एवासीदिति वक्तुं शक्यते ।

## शैवधर्मस्य भारतीयजीवने प्रभावस्तस्य स्वरूपञ्च

निगमागममूलकमिदं संस्कृतवाङ्मयम् । निगमपदेन वेदाः, आगमपदेन च शिवात्समधिगत्य शक्त्या प्रवर्तितं वाङ्मयमुच्यते आप्तैः । उक्तञ्च तन्त्रसाहित्ये—

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे ।
मतं हि वासुदेवस्य तत आगम उच्यते ॥ इत्यादयः ।

इमौ चागममूलकौ शक्तिशिवौ निगममूलकाविति तत्र तत्र वैदिकसाहित्यानुशीलनेनावगम्यते । वेदेषु रुद्ररूपेण कीर्तितो देव एव परवर्तिसाहित्ये काले च शिवपदवीमधिजगाम, स चैव हि शक्त्या अभिन्न इति विचारविषयको निखिलशास्त्रप्रकाशने शक्तः परमगुरुरिति पदवीमलञ्चकार । अस्यैव परमभट्टारकस्य शिवाभिन्नस्य निग्रहानुग्रहशक्तस्य परमप्रकाशकपरमस्वतन्त्रस्याद्वयतत्त्वस्य रुद्र-शिव-काल-प्रभृत्यनेकैः परश्शतैः शब्दैः शास्त्रेषु निरूपणं विद्यते । वेदेषु ब्राह्मणेषु, उपनिषत्सु, रामायणे, महाभारते, पुराणेषु, साहित्यग्रन्थेषु, तन्त्रग्रन्थेषु, शिलालेखप्रभृतिषु च सर्वत्र स्वयमशिववेशकलितस्याप्यन्यस्य कृते आन्तरतो बाह्यतश्चानन्द-भुक्ति-मुक्ति-प्रदायकत्वेन शिवो निरूपितो विद्यते । अस्यैव तत्त्वस्य मौलिकस्वरूपेषु केचन विचाराः प्रमाणसम्पत्तयश्चाग्रे विवक्ष्यन्तेऽत्र प्रकरणे ।

## ऋग्वेदे शैवधर्मस्वरूपम्

वेदेषु शिवो रुद्रशब्देन प्राय उपस्थापितो विद्यते । ऋग्वेदे रुद्रस्य त्रीणि एव समग्राणि परिपूर्णानि च सूक्तानि समुपलभ्यन्ते । तानि च प्रथममण्डले यथा—

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहेमतीः ।
यथाशमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्[1] ॥

अवोचाम नमो अस्मा अवस्यवः श्रृणोतु नो हवं रुद्रो मरुत्वान् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः[2] ॥ इति ।

---

१. ऋ० सं० १।११४।११ । २. तत्रैव—१।११४।११ ।

द्वितीयमण्डले च—

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः[१] ।। इत्यादयः ।

सप्तमे च मण्डले—

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाम्ने ।
अषालहाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः[२] ।। इत्यादयश्च ।

एतदतिरिक्तेनान्यत्र रुद्रसोमयोश्चैकस्मिन्नेव सूक्ते स्तुतिर्विद्यते । तत्राद्येषु षट्सु मन्त्रेषु रुद्रस्य अन्ते त्रिषु सोमस्य च[३] ।

अन्यत्र चापि रुद्रसोमयोरेकत्र स्तवनं दृश्यते[४] । एवं ह्यन्यदेवैः सार्द्धमपि रुद्रस्य बहुत्र स्तुतिर्दृश्यते वेदे । यथा हि—

त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना[५] ।। इति ।

अग्ने रुद्रत्वेन ऋग्वेदे बहुत्र स्तवनं विद्यते । यथा—

अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः ।
यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसाम्[६] ।। इति ।

पञ्चममण्डले विविधरूपेषु रुद्रस्य निरूपणं जातम् । तत्र हि सः क्वचिद् संहारकत्वेन, क्वचिच्च स्वस्तिकर्तृत्वेन च स्तुतो विद्यते—

तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य[७] ।।

विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः[८] ।।

पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा । तुर्याम दस्यून्तनूभिः[९] ।।

भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रमक्तौ ।
बृहन्तमृष्वमजरं सुषुम्नमृधग्घुवेम कविनेषितासः[१०] ।। इत्यादयः ।

षष्ठमण्डलेऽपि 'सोमारौद्रसूक्ते' 'सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयोऽरमश्नुवन्तु[११]' प्रभृतिभिश्चतुर्भिर्मन्त्रैस्तस्य स्तवनं विद्यते ।

---

१. ऋ० सं० २।३३।१; २. तत्रैव—७।४७।१; ३. तत्रैव—१।४३।६ ।
४. तत्रैव—६।७४।४; ५. तत्रैव—२।१।६; ६. तत्रैव—३।२।५ ।
७. तत्रैव—५।४२।११; ८. तत्रैव –५।५१।१३; ९. तत्रैव—५।७०।३ ।
१०. तत्रैव— ६।४९।१०; ११. तत्रैव—६।७४।१ ।

सप्तममण्डले च स्वतन्त्रमेव रुद्रसूक्तं विद्यते। परमन्यैर्देवैः सहापि सस्तत्र तत्र स्तुतो विद्यत इति सप्तममण्डलमनुशीलनेनावगम्यते। तत्राग्नौ रुद्रे च भेदो यथा वक्ष्यमाणमन्त्रे—

इन्द्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहन्तम्[1] ॥ इति।

अष्टममण्डले चापि प्रभूततरा रुद्रस्य स्तुतिः स्वतन्त्रतया वाक्सूक्तादिषु च प्रसृता दृश्यते। तद्यथा—

प्र रुद्रेण ययिना यन्ति सिन्धवस्तिरो महीमरमतिं दधन्विरे[2]।
अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ[3] ॥ इत्यादयः।

अन्यच्च—

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम्।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृल[4] ॥ इत्यादयश्च।

## यजुर्वेदे शैवधर्मस्वरूपम्

तैत्तिरीयसंहितायां कृष्णयजुर्वेदे च रुद्रस्यानेकाः स्तुतयो दृश्यन्ते। तत्र रुद्रस्य कुत्रचिदग्निना, कुत्रचित् सूर्येण, कुत्रचित् त्र्यम्बकहोमेन, शतरुद्रियरूपेण, शिवरूपेण, पशुपतिरूपेण च वर्णनं समुपलभ्यते। ततश्चादाय केचन मन्त्रा उद्ध्रियन्ते रुद्रस्येति—

मा वः स्तेन ईशत् माऽघशंसो रुद्रस्य हेतिः परिणो वृणक्तु।
ध्रुवा अस्मिन् गोपतौ स्यात् बह्वीर्यजमानस्य पशून् नः पाहि ॥ इति।

रुद्रस्य सूर्येण सम्बन्धो यथा—'रुद्रस्त्वाऽवर्तयतु मित्रस्य पथा'।

अग्ने रुद्रेण तादात्म्यं यथा—'देवासुराः सयंता आसन्ते देवा विजयमुपयन्तोऽग्नौ वामं वसु ··· ··· ·····सोऽरोदीद्यदरोदीत्तद् रुद्रस्य रुद्रत्वम्' इति।

त्र्यम्बकहोमविषयकं स्तवनं यथा तत्रैव प्रथमे काण्डे—'पशूनां शर्मासि शर्म मे यच्छक एव रुद्रो न द्वितीयाय तस्थ। अवतद्धन्वा पिनाकहस्तः कृत्तिवासाः' इत्यादयः।

वाजसनेयिसंहितायां तृतीयाध्याये, अष्टपञ्चाशन्मन्त्रे हि—'अव रुद्रं अदीमह्य अव देवं त्र्यम्बकम्। यथा नो वस्यसस् करद् यथा नः श्रेयसस् करद् यथा नो व्यवसाययात्[5]' इत्यादिना श्रेयसायेत्यादिभ्यो रुद्रस्य स्तवनं संपन्नम्।

एवं हि सर्वविधत्राणाय बहुधान्याय संतत्यै च रुद्रस्य स्तवनं तत्र संपन्नम्। तथा हि—'शिवो नामासि स्वधितिस्ते पिता नमस्तेऽस्तु मा मा हिंसीः।

---

१. ऋ० सं० ७।१०।४; २. तत्रैव—१०।९२।५; ३. तत्रैव—१०।१२५।६।
४. तत्रैव—१०।१६९।१; ५. वा० सं० ३।५८।

निवर्तयाम्य आयुषे अन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय[1]' इत्यादि ।

वाजसनेयिसंहितायां षोडशाध्याये प्रथमसूक्ते षट्षष्टिमन्त्रेषु रुद्रस्य विभिन्नैर्नामभिः स्तुतिः कृता विद्यते । पशुपतित्वेन रुद्रस्तत्रैव वाजसनेयिसंहितायां चतुर्विंशाध्याये तृतीयमन्त्रे स्तुतस्तद्यथा—'रुद्राय पशुपतये कणार्यामाऽवलिप्ता रौद्रा नमोरूपा पार्जन्याः' इति ।

एकोनचत्वारिंशाध्याये नवममन्त्रे च—'उग्रं लोहितेन मित्रं सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यात् प्रमुदा । भवस्य कण्ठ्यं रुद्रस्यान्तः पार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत्' इत्यादयः ।

एषु मूलेषु रुद्रस्य यद्रूपं निहितं तस्य कियन्तो विधयः, कस्य च प्रतीकत्वेन तस्य निरूपणं इति विषयमवलम्ब्य बह्व्यः कल्पनाः कल्पिताः । रुद्रस्य नाम्नः सार्थक्येन, मरुतां साहचर्येण, तस्य बभ्रुवर्णेन, प्रायः क्रूरकर्मणा च रुद्रं केचन संहारकत्वेनामनन्ति । प्रमाणार्थं शर्मन् ( जर्मन ) देशीयविदुषो वेबरमहोदयस्य विचारा मर्षणीयाः । सः स्वग्रन्थे रुद्रं झंझावातस्य 'रव'स्वरूपमित्यर्थतस्तं निर्धारयति[2] । पाश्चात्त्यविद्वान् डा० मैकडोनलमहोदयस्तु रुद्राग्न्योः साम्यं परिलक्ष्य नैव झंझावातस्यापितु विनाशिकाया विद्युतः रूपे झंझावातस्य विध्वंसकस्वरूपस्य च रुद्ररूपस्य परिकल्पनं चकार[3] । भारतीयः पाश्चात्त्यो विद्वान् श्रीभाण्डारकरमहानुभावस्तु प्रकृतेर्विध्वंसकशक्तीनां स्वरूपेण रुद्रं परिकल्पयति[4] । आंग्लविदुषो म्यूरमहोदयस्यापीत्थमेव सम्मतिः[5] । केचन विद्वांसश्चाग्निरुद्रयोः साम्यं विभाव्य तं अग्नेरेव कस्यचिद्रूपस्य प्रतीकत्वेनामनन्ति । ऋग्वेदस्य स्वानूदितभूमिकायां आंग्लविद्वान् विल्सनमहोदोऽग्नेरिन्द्रस्य[6] वैकरूपेणैव रुद्रं व्यवस्थापयति । एवं ह्यन्येऽपि पाश्चात्त्यदेशीयविद्वांस इतिहासवेत्तारश्च संहारकरूपेणैव रुद्रमुपस्थापयन्ति कल्पयन्ति च ।

परं वयं भारतीयाः सर्वमङ्गलाश्रयाखिलसंसर्गसमन्विताखिलशिवत्वप्रदायकनिग्रहानुग्रहपञ्चकृत्यकारित्वसर्वाभीष्टदस्तत्त्वातीतः कश्चिद्विलक्षणःसमस्तवैलक्षण्यगुणगणानामेकाश्रयः, क्वचिदीश्वरः, गुरुः, ज्ञानरूप एव रुद्रः, शिवपदमलङ्करोतीति मन्यामहे । स एव विचित्रासनाशनशयनवाहनास्त्रशस्त्राभूषणपरिवेशवाद्यवृन्दपुत्रकलत्रादिमण्डितोऽशिववेशस्थितोऽपि शिवरूपः, कालजयी, अजः, शिवः,

---

१. वा० सं० ३-६३;　　२. वेबर, इन्दिस पूटूडीन—२, १९-२२ ।

३. मैकडोनल, वैदिक माइथालौजी—पृ० ७८ ।

४. भाण्डारकर, वैष्णविज्म, शैविज्म इति ग्रन्थप्रकरणे ।

५. म्यूर, ओरिजनल संस्कृत टैक्स्ट्स—४ पृ० १४७ ।

६. विल्सन, ऋग्वेदभूमिकायाम् ।

महादेवपदवीकः, समस्तविरोधानां समाहर्ता, विषं पीत्वाऽप्यमृतः, पिण्डमूर्तिप्रभृतिविविधरूपेणाराध्यः, आशुतोष, रुद्रः, समस्तशास्त्रोपजीव्यः, अनाख्येयोऽपि तत्त्वज्ञैराख्येयः, परमप्रकाशः, शिव इत्यस्माकं विश्वासः। तथा हि वाजसनेयिसंहितायाम्—

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः॥

एवं हि—

या ते हेतिर्मिढुष्टमा हस्ते बभूव ते धनुः।
तयाऽस्मान् विश्वतस्त्वम् अपक्ष्मया परिभुजः॥

तथा हि—

'नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च[1]' इत्यादयः।

एवं हि ऋग्वेदे यजुर्वेदे च रुद्रस्य विविधरूपाणि प्रदर्शितानि। तत्रत्यालोडनविमर्शादिभिरिदं परिज्ञायते यत् सान्द्रेषु मेघेषु चपलायमानाया सौदामिन्याः सार्द्धमेवामन्दमेघनिर्घोषो महावृष्टिश्च प्रकृतेर्यत्तत्त्वं तदेव रुद्रपदेनाभिधीयत इति।

## रुद्रशब्दनिरुक्तिः

रुद्रशब्दस्य कोऽर्थ इत्याकांक्षायां व्याकरणे कोशकाव्यादिषु च यन्निरूपितं तज्ज्ञात्वा रुद्रशब्दस्य काश्चन निरुक्तयोऽग्रे प्रद्रक्ष्यन्ते। 'रुदिर् अश्रुविमोचने' इत्यस्माद्धातोरौणादिके 'रक्' प्रत्यये कृते सति रुद्रशब्दस्य निष्पत्तिः संपद्यते। यथा च—'रोदनात् रुद्रः' इति।

अपरा च—'रुधिर् आवरणे' इत्यस्माद्धातोः सम्पदादित्वाद् भावे क्विप् प्रत्यये सति स्त्रीत्वविवक्षायां 'रोधनं रुद् तां रुधम् राति ददाति इति रुद्रः'। अन्यच्च 'रवणं रुत् तां रुतम् रवं राति ददाति इति रुद्रः' ( झलां जशोऽन्ते, अष्टा० ८।२।३९ )। वाचस्पत्यादिकोषग्रन्थेषु च 'पुरारोदिति रुद्=रक्। १—शिवमूर्तिभेदे 'योऽरोदीत् तत् रुद्रस्य रुद्रत्वम्' इति श्रुत्युक्तेः। २–वह्नौ च। तथा हि—

अजैकपादहिर्बुध्न्यो विरूपाक्षः सुरेश्वरः।
अयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः।
वैवस्वतश्च सावित्रो हरो रुद्रा इति स्मृताः॥

इत्युक्तेषु एकादशसु शिवमूर्तिभेदेषु व०,व० यजु० १६ अ० उक्तेषु—'नमस्ते रुद्रमन्यव' इत्यादिषु, रुद्रगणेषु, एकादशसंख्यायाम्, आर्द्रानक्षत्रे च इत्याद्युक्तम्।

---

१. वा० सं० १६।८, ११, ४१।

रुद्रस्य विशिष्टमस्त्रं धनुरस्ति, अनेन धनुषा ये बाणाः परिचाल्यन्ते, ते मनुष्यैः सहैव पशूनामपि संहारका भवन्ति[1]। इमे च बाणा अमोघाः, अतस्तेषां सन्निपाते न केषामपि प्राणा रक्ष्यन्ते। रुद्रस्य 'गोघ्न', 'नृघ्न', 'क्षयद्वीर' प्रभृतीनि नामानि संहारकत्वेनैव सार्थकानि भवन्ति[2]।

रुद्रस्यैकं विशेषणं 'कपर्दी' इत्यप्यस्ति, यस्याभिप्रायो जटाजूटधारित्वं शिवस्यास्ति। गगने उत्पतन्त्यो मेघमाला वस्तुतो जटा इव प्रतिभान्ति, तासु यदा विद्युदुल्लासो जायते, तदा रुद्रस्य 'कपर्दी' इत्युपाधिः सर्वथा सार्थकतां भजते। उपाधिश्चायं तृत्सूनामपि भवति, यो ह्यार्याणामेककुलत्वं विख्यापयति, तद्वंशीयाश्च जटाधारिण आसन्। अनेनैवोपाधिना 'पूषा' देवोऽपि भूषितो विद्यते, यत्र चायं सूर्यप्रभामण्डलस्य प्रतीकत्वेनोपतिष्ठते। 'दिवो वराहः[3]' इति रुद्रस्यैकं नाम। दिवो द्युलोकः, आकाशस्तस्य वराह इत्यर्थे कृते सति कृष्णमेघेभ्यो निःसरन्तीनां विद्युज्ज्वालानामुपमा अनायासेन श्वेतदंष्ट्रा संवलितेन रुद्रवाराहेण दातुं शक्यते। एवं हि 'कल्पलीकिन्[4]' (ज्वलनशीलो वा) इति नामान्तरं रुद्रस्यैवास्ति, यस्य साम्यं सौदामिन्या अग्निना वा कल्पितुं शक्यते। एतेन रुद्रस्य तैक्ष्ण्यमेवाभिलक्ष्यते।

रुद्रस्योग्ररूपमेव वेदेषु केवलं न निरूपितम्; प्रत्युत तस्य सौम्यरूपाण्यपि तत्र प्रदर्शितानि। तस्मिन् स्वरूपे स 'महाभिषक्' इति पदवीमधिरोहति। अस्योषधयः शीता व्याधिनाशिन्यश्च भवन्ति। रुद्रस्यैतस्य रूपस्योदयः प्रायो वर्षर्तौ वृष्ट्या जायते। तत्र हि अविरलवारिधाराभिरौषधय उत्पद्यन्ते, जीवेषु वनस्पतिषु च नवीनाया एकस्या संजीवनशक्तेश्च संचारो भवति। अस्मिन्नेव रूपे रुद्रस्य सम्बन्ध उर्वरतया अप्यस्ति। सन्तानार्थञ्चापि तेन प्रार्थना क्रियते[5]। उत्तरभारते वर्षागमकाले विद्युदाघातानन्तरं या वर्षा भवन्ति, ताभिर्धान्यं, ओषधयः, वनस्पतयश्च भूयस्त्वेनोत्पद्यन्ते। अस्मिन्नेव काले प्रभूतेषु जीववर्गेषु सन्ततिसमृद्धिरपि जायते। अतो रुद्रस्य उर्वरतया अभिन्नः सम्बन्धः स्वाभाविक एवेति सिद्ध्यति। अस्मिन्नेव प्रसङ्गे रुद्रस्य 'वृषभ[6]' इति संज्ञापि सार्थक्यायार्थगाम्भीर्याय च कल्पते।

अयम्भावः--'वृषभ' शब्दस्यानुवादोऽनडुहा गवां पत्या वा क्रियते। संस्कृतसाहित्ये चास्यैवार्थस्यानेन शब्देन बोधो जायते, परं ऋग्वेदे येषु येषु प्रसङ्गेषु

---

१. ऋ० सं० २।३३।१०, ७।४६।१ इत्यादयः।

२. तत्रैव—१।११४, १०।२-३३,११४-३-६;

३. तत्रैव—१।११४। ५।

४. तत्रैव—२।३३।८;

५. तत्रैव—१।१४३, ६। २,३३,७।

६. तत्रैव—२,३३, ६-८।

'वृषभ'शब्दः प्रयुक्तस्तेषु तेष्वर्थेष्वप्यन्वर्थसंज्ञकत्वेनैवोपतिष्ठते । 'वृष्-वर्षणे' इति धातोर्निष्पन्नस्यास्य शब्दस्य अर्थद्वयं भवति, एको वर्षाकारकोऽपरश्चात्यन्त-प्रजननशक्तिकः, पुंस्त्वपूर्णो बलिष्ठश्च । यतो ह्यस्य शब्दस्य व्याख्याता सायणाचार्योऽपि 'वर्षयिता' इति शब्दं प्रयोजयति । अतः सन्ततिशक्तिरसशक्तिपरि-पूरितस्य रुद्रस्य 'वृषभ'इत्यभिधानं सार्थक्यं भजत इति तत्र तत्र रुद्रसूक्तालोडनेन परिज्ञायते ।

ऋग्वेदस्यैकस्मिन् सूक्ते सोमेन सार्द्धमेव रुद्रः स्तुतो दृश्यते । तद्यथा—

सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयोऽरमश्नुवन्तु ।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे[1] ।। इत्यादयः ।

सोमारुद्रा युवमेतान्यस्मै विश्वा तनूषु भेषजानि धत्तम् ।
अवश्यतं मुंचतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्[2] ।।

प्रथममण्डलस्य त्रिचत्वारिंशत्तमे सूक्ते प्रथमतो नवमन्त्राणि यावद् रुद्रसोम-सूक्तं वर्तते । तत्र षट्सु मन्त्रेषु रुद्रस्य, त्रिषु च सोमस्य स्तुतिर्विद्यते । एतेनेदं प्रस्फुटति यद्रुद्रस्य सोमेन साहचर्यं गुणधर्मेऽपि संगच्छते । अतो रुद्रः स्वास्थ्यं बलं यच्छति, सोमः शान्तिश्च । सोमलता अपि वृष्टिं विना न वर्द्धते, तस्या रसोऽपि बभ्रुः (सौवर्णः) भवति । अतः शान्तिः, पुष्टिः, भुक्तिर्मुक्तिश्च प्रदाता रुद्र इति संसिद्ध्यति ।

रुद्रस्याग्निनाऽपि साहचर्यं वरीवर्ति । ऋग्वेदे अनेकशो रुद्र अग्निरूपेण स्तुतः[3] । विद्युतस्तादात्म्येन रुद्रो बहुत्र वेदेषु प्रतिष्ठापितः । एवं हि वैद्युतो रुद्रोऽग्निसा-धर्म्येणावतिष्ठत इत्यपि संगच्छते । 'ज्ञानमिच्छेन्महेश्वरात्', 'ज्योतिर्वंद्ज्ञानानि भवन्ती'ति नियमानुरोधेन कारणे जिज्ञास्यमाने सति वेदे एकस्मिन् रुद्रमन्त्रे 'मेधापति'[4] रिति रुद्रस्याभिधानेन मेधाया ज्ञानरूपतया तस्य च प्रकाशरूपत्वात् प्रकाशात्मको रुद्रोऽस्त्येवेतीदानीमपि मन्यते ।

## अथर्ववेदे शैवधर्मस्वरूपम्

अथाधुना अथर्ववेदमधिकृत्य रुद्रविषये विविच्यते किञ्चिद्—

अथर्ववेदे प्रलयकारित्वेन रुद्रो बहुधा निरूपितो विद्यते । तस्य शिरो त्रिष-युक्तमस्ति, येन च व्याधयो वर्द्धन्ते । सर्वे हि जीवलोकास्तस्माद् बिभ्यति । उक्तञ्च—

रुद्र जलाष-भेषज नीलशिखण्ड कर्मकृत ।
प्राशं प्रतिप्राशो जहि अरसान् कृणु ओषधे[5] ।।

---

१. ऋ० सं० ६।७४।१; २. तत्रैव—६।७४।३; ३. तत्रैव—२।१।६ ।
४. तत्रैव—३।२।५; ५. अ० सं०—२।२७।६ ।

अयंभावः—हे रुद्र ! यस्य पार्श्वे सन्त्योषधयः, यस्य शिखा नीलवर्णा अस्ति, यो हि कर्माणि सम्पादयति, सः प्रतिप्राशो भूत्वा प्राशान् नाशयतु; हे ओषधे ! तान् पराभूतान् कुरु,।

यां ते रुद्र इषुमास्यदङ्गेभ्यो हृदयाय च।
इदं तामघत्वद् वयं विषूचीं वि वृहामसि[1] ॥

अतो रुद्रेणेयमेव प्रार्थना क्रियते यत् सः स्वशिरः स्तुतिकर्त्रा दूरं त्यजेत्, तस्य प्रहारः शत्रुषु कृपाणेषु वा समापतेदिति । तथा हि—

विश्वरूपां सुभगाम् अच्छावदामि जीवलाम् ।
सा नो रुद्रस्यास्यतां हेतिं दूरं नयतु गोभ्य.[2] ॥ इति ।

यो हि रुद्रो देवो यष्टव्यरूपेणाग्नौ, वरुणरूपेण जले, सोमरूपेण लतासु च वरीवर्ति, स हि सर्वलोकान् रचयति, तं रुद्रात्मकाग्नये अग्न्यादिगुणात्मकाय रुद्राय च वयं नमामः । तद्यथा—

यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये[3] ॥

अथर्ववेदे रुद्रस्य 'राजा' 'भीम' 'उपहन्तृ' प्रभृतीनि नामानि भयानक-विध्वंसकादिरूपेषु कल्पितानि विद्यन्ते । तद्यथा—

स्तुहि श्रुतं गर्तसदं जनानां राजानं भीममुपहन्तमुग्रम् ।
मृडा जरित्रे रुद्रस्तवानो अन्यमस्मत् ते निवपन्तु सैन्यम्[4] ॥

पशुवृद्धयर्थमपि अथर्वणि पशुपतिरूपेण रुद्रः स्तुतो विद्यते । स च पशुवृद्धयर्थं पशुः, द्विपदः, चतुष्पदो वा भवतीति कृत्वा यथा—

य ईशे पशुपतिः पशूनां चतुष्पदामुत यो द्विपदाम् ।
निष्क्रीतःस यज्ञियं भागमेतु रायस्पोषा यजमानं सचन्ताम्[5] ॥ इति ।

रुद्रस्य विध्वंसक-हिंसकरूपयोरथर्ववेदे बहुधा कल्पना विद्यते । तत्रैव तस्य साहचर्यं शुना अपि विद्यते । यतो हि श्वा मृतमांसभक्षी, श्मशाने च बहुधा तिष्ठति । अतः कालस्य परिचालकत्वेन रुद्रेण शुना साहचर्यं सर्वथा स्वाभाविकं स्वानुरूपञ्च प्रतिभाति । तथा च—

रुद्रस्यैलवकारेभ्योऽसंसूक्तागिलेभ्यः ।
इदं महासेभ्यः श्वभ्यो अकरं नमः ॥ इति ।

---

१. अ० सं०—६।९०।१; २. अ० सं०—६।५९।३; ३. अ० सं०—७।८७।१ ।
४. अ० सं०—६।१।४०; ५. अ० सं०—२।३४।१ ।

एवं हि अथर्ववेदे रुद्रस्य पुरुषस्वरूपं ऋग्वेदीयपुरुषसूक्तात् प्रकृष्टतरं विभाति। भूतपिशाचेभ्यश्च रक्षणार्थं रुद्रं स्तूयते। अत इमेऽपि तस्य सहयोगिन एवेति मत्वा रुद्रस्य स्तुतिं क्रियते। तच्च यथा—

रुद्रो वो ग्रीवा अशरैत् पिशाचाः पृष्टीर्वोऽपि शृणातु यातुधानाः।
वीरुद् वो विश्वतो वीर्या यमेन समजीगमत्[1]॥ इति।

एतेनेदं प्रमाणितं भवति यद्रुद्र एतादृशो देवो यस्य लोकः प्रामाण्यं मनुते, अतिसूक्ष्मातिसूक्ष्मक्रियाकलापेषु च तस्यावश्यकताऽनुभूयते च। एतेनैव कारणेन निग्रहानुग्रहाभ्यां रुद्रः परवर्तिकाले महादेवपदवीमधिजगामेत्यशंशयेन वक्तुं शक्यते। रुद्रः सहस्राक्षः, स सहस्राक्षैरसंख्यैर्वा नेत्रैः शुभाशुभकर्माणं लोकं पश्यति, शुभाशुभं फलञ्च प्रयच्छति। अतः सो महादेवो मर्त्येषु परितः परिव्याप्य तिष्ठतीति। रुद्रो वैदिकान्निखिलान् देवान् इन्द्राग्निसूर्यवरुणप्रभृतीन् स्वायत्तीकरोति, शनैः शनैः स एव सर्वेषां प्रतिनिधिभूतत्वेनावशिष्यते। इत्त्थं सर्वेषु देशेषु तत्रत्यपरम्परासु च प्रायशो विशेषेण कश्चिद् विलक्षणो देवो यथानुक्रमः प्रादुर्भवति, यः सर्वानतिक्रम्यावतिष्ठते। इयमेव स्थितिः रुद्रविषयेऽत्र भारते दृश्यते। स च महागुणविभूषितोऽपि व्रात्त्यानां समुद्धर्ता अस्तीति अथर्ववेदानुशीलनेनावगम्यते।

तत्र हि—

व्रात्य आसीदीयमान एव स प्रजापतिः समैरयत्।
सोऽवर्धत स महानभवत् स महादेवोऽभवत्।
स देवानामीशां पश्येत् स ईशानोऽभवत्[2]॥ इत्यादयः।

एवं शिवाशिवरूपो देव अस्माकं रुद्र इति आवेदकालादधुनापि वयं भारतीया मन्यामहे।

कृष्ण-शुक्लयजुर्वेदे विलक्षणे 'त्रयम्बक, शतरुद्रिय' नामनी सूक्ते वर्तेते, ययोः ऋग्वेदाथर्ववेदयोः कोऽपि संकेतोनैवावाप्यते, परं तत्र रुद्रस्य किञ्चिदभिनवमेकरूपं दृश्यते। तत्र तस्य स्वसृरूपेण अम्बिकादेव्या उल्लेखो वर्तते।

यथा—

'पशुनां शर्मासि शर्म यजमानस्य शर्म मे यच्छक एव रुद्रो न द्वितीयाय तस्थ। आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्रा अम्बिका तं जुषस्व[3]' इत्यादयः।

इयं स्त्री देवता का? कथञ्चास्या रुद्रेण सहोल्लेख इति जिज्ञासायां कृतायां शक्तिसहितस्य शिवस्य प्राक्तनस्वरूपमम्बिकायुतं रुद्रस्यैवासीदिति सिद्ध्यति।

---

१. अ० सं०—६।३२।२;　२. अ० सं०—१५।१।१-४-५।

३. य० सं०, तै० सं०—१।८।६ तथा च वा० सं०—३।४७।६३।

शक्तिसहितस्यान्यस्य कस्यचिद्देवस्य ऋग्वेदे अथर्ववेदे चोल्लेखो रुद्रातिरिक्तो न जात इति वैशिष्ट्यं रुद्रस्य ।

एवं हि 'शतरुद्रिय[1]' सूक्ते 'गिरिशन्त' 'गिरिश' प्रभृतीनि नामानि तस्य पर्वतैः सह सम्बन्धख्यापनं कुर्वन्ति । एतदतिरिक्तं हि 'क्षेत्रपतिः' 'गणिक्' प्रभृतीनि नामान्यपि रुद्रस्यास्मिन् सूक्ते प्राप्यन्ते, येन रुद्रस्यामितप्रभावा ज्ञायन्ते । एवं हि रुद्रस्य गणनाप्यत्र त्रयोविंशमन्त्रादारभ्य सप्तविंशमन्त्रं यावद् विहिता । एतेन रुद्रस्य सर्ववर्ण-सर्वभूत-सर्वजीवमनोग्राह्यत्वेनावस्थानमुपतिष्ठते । अतो वैदिकेभ्योऽन्येभ्यो देवोभ्यो रुद्रस्य स्वरूपं विस्तृतं व्यापकञ्च प्रतिभाति ।

## ब्राह्मणग्रन्थेषु रुद्रस्वरूपम्

क्रमशो वेदानतीत्य ब्राह्मणग्रन्थेषु रुद्रस्य महात्म्यं अतितरां राजते । तत्र देवा अपि तस्माद् विभ्यति[2] । रुद्रेण प्रयुक्ता बाणाः स्तोतारं न नाशयेयुरिति जिज्ञासायां तैत्तिरीयब्राह्मणे त्र्यम्बकहविः प्रकरणे उक्तं यथा—

'रुद्रस्य हेतिः परिणो वृणक्त्वित्याह । रुद्रदेवेनास्त्रायते[3]' इत्यादयः ।

ब्राह्मणग्रन्थानां समये रुद्रो महादेवपदवीमधिरूढः सर्वदेवेभ्यः प्रशंशितं यज्ञभागं गृह्णाति स्म । क्वचिदुपेक्षायां सत्यां सर्वे देवास्तस्मात् भयमानमन्ति स्म । अतस्तं देवाधिपतित्वेनाङ्गीकुर्वन्ति स्म । यथा च कौशीतकिब्राह्मणे—

'पशुन् पञ्चमेनाह्नाप्नुवन्ति पंक्ति छन्दस्त्रिणवं स्तोमंशववासामावार्चीं दिशं हेमन्तम् ऋतूनां मरुतो देवान् देवयजतं रुद्रमधिपतिम्[4]' इति ।

ऐतरेयब्राह्मणे एका कथा विद्यते । तत्र प्रजापतिर्ब्रह्मा स्व तनयया सरस्वत्या गमनं चक्रे । इदञ्चागम्यगमनं देवेभ्यः कृते रोषकारकं समजनि, क्रुद्धाश्च देवा ब्रह्मणे दण्डदानाय रुद्रमधिकृतवन्तः । तद्यथा—

'प्रजापतिर्वै स्वां दुहितरं अभ्यधावद् दिवम् इत्यन्यआहुरुषसमित्यन्ये । तामृश्यो भूत्वा रोहितां भूतामभ्यैत् । तं देवा—तमेत्यार्या निखदन्ते[5]' त्यादयः ।

अस्यां कथायां अन्येभ्यो देवेभ्यो रुद्रस्योत्कर्षः प्रस्फुटति । यतो हि—रुद्रादन्ये देवाः यज्ञकर्मनियमाधीनाः, रुद्र एकस्तद्रहितः, अतः स ब्रह्मदण्डदाने समर्थः । इयं कथा जैमनीयब्राह्मणे चातितरां प्रकृष्टत्वेनायाति[6] । एतेन रुद्रस्य नैतिकशक्तिरपि प्रकृष्टतमेति सिद्धयति ।

एवं विवेचनायां इदं प्रतीयते यद् वेदादारभ्य ब्राह्मणग्रन्थं यावत् रुद्रो

---

१. य० सं०, वा० सं०—१६।१।६६ । २. श० ब्रा०—९।१।१।१-५ ।
३. तै० ब्रा०—३।२।५ । ४. कौ० ब्रा०—२३।३ ।
५. ऐ० ब्रा०—३।१३।९ । ६. जै० ब्रा०—३।२६९ तः ६३ ।

भारतीयप्रमुखदेवेष्वनुत्तमः सर्वाराध्यः शर्वशक्तिमान् देवानामपि देव इति पदवीमवाप्तवान्। सूत्रग्रन्थेष्वपि रुद्रस्य तदेव माहात्म्यमुपबृंहितं वर्तते इति तत्र तत्रोपनिषद्ग्रन्थानुशीलनेन परिज्ञायते। तत्र बृहदारण्यकोपनिषदि--

"ब्रह्म वा इदमग्र आसीद् एकमेव तदेकं सन्न व्यभवत्। तत् श्रेयो रूपम् अत्यसृजत् क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्यन्यो यमो मृत्युरीशान[१]" इति।

श्वेताश्वतरोपनिषदि तु रुद्रो महत्या स्तुत्या स्तुतो विद्यते। तत्र स तृतीयाध्याये द्वितीयमन्त्रादारभ्य एकादशमन्त्रपर्यन्तमतिशयचमत्कृत्या शक्या निरूपितो विद्यते। एवं हि चतुर्थ-पञ्चम-षष्ठाध्यायेष्वपि रुद्रस्तुतिर्दृश्यते। तथा च--

एको हि रुद्रो न द्वितीयाय तस्थुर्य--
इमाँल्लोकान् ईशत ईशनीभिः ।
प्रत्यञ्जनास्तिष्ठति संचुकोचान्तकाले
संसृज्य विश्वा भुवनानि गोपाः[२] ॥

सर्वाननशिरो ग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः ॥

वीरान् मा नो रुद्र भामिनोव्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥
तत्कारणं सांख्ययोगाधिगम्यं देवं मुच्यते सर्वपाशैः[३] ॥ इत्यादयः।

उपनिषद्ग्रन्थकालानन्तरं समागच्छति सूत्रकालः। भारतीयजीवने सूत्रसाहित्यस्यातिशयेन महत्त्वं वरीवर्तीति न तिरोहितं प्रेक्षावताम्। तत्र शांखायनश्रौतसूत्र, आश्वालयनश्रौतसूत्र, लाटचायन-बौधायन-मानवश्रौतसूत्रेषु सर्वत्रैव रुद्रसम्बन्धिन्यः स्तुतयो विलसन्तितमाम्। तत्र शांखायनश्रौतसूत्रे शूलगवहोमे यथा--'रुद्रं गवा यजते स्वस्त्ययनाय[४]' इत्याद्युक्तम्। आश्वलायने च यथा--

'यदि देवानां हवींष्यन्वायतयेयुरग्निर्गृहपतिः सोमो वनस्पति--रुद्रः पशुमान् पशुपतिर्वा'[५]।

लाटचायने, त्र्यम्बकहोमे च--

'तत्र ब्रह्मा पर्यञ्जपेद् इति धानञ्जयजप्यस्तिष्ठन्निति शाण्डिल्यस्त्रयम्बकं यजामहे सुगन्धिं पुष्टिवर्धनमुर्वारुकमिव बन्धानान्मृत्योर्मुक्षीयमामृतादिति[६]'।

बौधायने धर्मसूत्रे च--

---

१. बृ० उ०--१।४।११।
२. श्वे० उ०--३।२-३।
३. श्वे० उ०--३।११, ४-२२, ६-१३।
४. शां० श्रौ० सू०--४।१७।
५. आ० श्रौ० सू०--४।११।५।
६. ला० श्रौ० सू० त्र्य०--५।३।

'ॐ भवं देवं तर्पयामि । ॐ शिवं देवं तर्पयामि, ॐ ईशानं-ॐ पशुपति[१]०' इत्यादयः । एवमेवान्यत्रापि रुद्रस्तुतिर्विद्यते सूत्रासाहित्ये ब्राह्मणग्रन्थेषु च ।

इत्थं हि समूलमिदं प्रमाणयितुं शक्यते यद् पौराणिकशिवस्वरूपस्य उपासनस्य च प्रायः सर्वे प्रधानांशा वैदिकरुद्रस्य स्वरूपात् तदुपासनपद्धतेश्च गृहीता विद्यन्ते । स्वयं 'शिवः' इति नामापि वैदिकरुद्रस्य प्रशस्तिपरं विशेषणमेवेति मन्ये; तत् प्राथम्येन यजुर्वेदे प्राप्यते । शिवस्यान्येषां नाम्नामभ्युदयोऽपि वैदिकाधारे एव जात इत्यत्र शङ्काया लेशावसरो नास्ति । शिवस्य त्रयाणां नेत्राणामुपमा 'त्रयम्बकम्' इत्यनेन संपन्नम् । नीलशिखण्डोपाधौ शिवस्य हालाहलविषपानस्य पौराणिककथाबीजं प्राप्यते । अयमुपाधिर्यजुर्वेदे 'नीलग्रीवः' इत्यनेन दीयते । 'कपर्दिन्' 'केशिन्' प्रभृतिभिरुपाधिभिः परवर्तिकालिकशिवस्य जटामण्डितरूपस्य कल्पना समजनि । केशिभिः मुनिभिश्च सह वैदिकरुद्रस्य प्राक्तनसाहचर्यरूपेण पुराणकालिकशिवस्य यौगिकक्रियाभिः सम्बन्धस्तस्य महायोगिरूपस्य चोत्पतिस्तदैव समजनि । वैदिकरुद्रस्यावास उत्तरीयपर्वतेषु स्वीकृतत्वादेव परवर्तिसमये शिवावासः 'कैलासः' इति प्रतिष्ठापितः । यजुर्वेदस्य शतरुद्रियस्तोत्रे रुद्रधनुषः पिनाक इत्यभिधानेनागामिकाले सैव संज्ञा तद्धनुषः समपद्यत । वैदिकरुद्रस्यैकोऽन्य उपाधिः 'कृत्तिवासः' इति । एतेनैव पौराणिकशिवस्यापि कृतिधृगित्येदं नाम सार्थकं भवति । एवं दृश्यते हीदं यद् वैदिकी अनादिश्च रुद्रोपासनपरम्परा इदानीमपि याथातथ्येन प्रचलति । एतेनागमिकशैवधर्मस्य तद्रूपं निर्ममे यत्रानेके विश्वासाः परम्पराश्च प्रतिष्ठापिता बभूवुः । अतो यावत्यः परम्परा अनादिकालत समारभ्य इदानीं यावत् शिवोपासने प्रचलन्ति, मन्ये; तावत्यः परम्परा नान्येषु धर्ममार्गेषु समजनीत्यसंशयम् ।

आगमिक-पौराणिकशैवधर्मस्य च केचन पक्षा एतादृशा अपि सन्ति ये वैदिकरुद्रोपासने प्रायो नैव लभ्यन्ते । यथा 'लिङ्गपूजायाः' प्रकारो वेदेषु न दृश्यते, परं वेदोत्तरकालादारभ्याद्यावधि सा शिवोपासनायाः प्रमुखतमा पद्धतिर्विद्यते । यद्यपि अश्वमेधयज्ञेषु यज्ञीयपशोर्लिङ्गपूजा प्रचलिता आसीत्तथापि स्पष्टतया लिङ्गपूजाया वेदेषु अनुपदेशात् नैतेन पश्चात् कालिकी लिङ्गपूजापद्धतिर्योजयितुं शक्यते ।

शक्तिपूजानामापरं वैशिष्टयं वैदिककालोत्तररुद्रोपासने दृश्यते । यजुर्वेदस्य प्रथमकाण्डे अष्टमे सूक्ते षष्ठे मन्त्रे त्रयम्बकहोमे रुद्रेण सहैकस्याः स्त्रीदेवताया अम्बिकाया उल्लेखो विद्यते, या च तस्य भगिनित्वेनावतिष्ठते, परं ततोऽन्यत्र अम्बिकायाः क्वाप्युल्लेखो न जातः । अतस्तस्या अकिञ्चित्करमेव महत्त्वं कल्पनीयम् । एतदतिरिक्तं वेदोत्तरकाले शक्तेः सर्वप्रधानदेवेष्वग्रगण्यत्वेन प्रतिष्ठा वरीवर्ति । शक्तेर्माहात्म्यं शिवेनान्यूनम्, तत्समम्, क्वचिदधिकं वा विद्यते । अतस्त-

---

१. बौ० ध० सू०–२।५।६ ।

भारतीयप्रमुखदेवेष्वनुत्तमः सर्वाराध्यः शर्वशक्तिमान् देवानामपि देव इति पदवी-मवाप्तवान्। सूत्रग्रन्थेष्वपि रुद्रस्य तदेव माहात्म्यमुपबृंहितं वर्तते इति तत्र तत्रोप-निषद्ग्रन्थानुशीलनेन परिज्ञायते। तत्र बृहदारण्यकोपनिषदि--

"ब्रह्म वा इदमग्र आसीद् एकमेव तदेकं सन्न व्यभवत्। तत् श्रेयो रूपम् अत्यसृजत् क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्यन्यो यमो मृत्युरीशान[1]" इति।

श्वेताश्वतरोपनिषदि तु रुद्रो महत्या स्तुत्या स्तुतो विद्यते। तत्र स तृतीया-ध्याये द्वितीयमन्त्रादारभ्य एकादशमन्त्रपर्यन्तमतिशयचमत्कृत्या शक्त्या निरूपितो विद्यते। एवं हि चतुर्थ-पञ्चम-षष्ठाध्यायेष्वपि रुद्रस्तुतिर्दृश्यते। तथा च--

एको हि रुद्रो न द्वितीयाय तस्थुर्य--
इमाँल्लोकान् ईशत ईशनीभिः ।
प्रत्यञ्जनास्तिष्ठति संचुकोचान्तकाले
संसृज्य विश्वा भुवनानि गोपाः[2] ।।
सर्वाननशिरो ग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः ।।

वीरान् मा नो रुद्र भामिनोव्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।।
तत्कारणं सांख्ययोगाधिगम्यं देवं मुच्यते सर्वपाशैः[3] ।। इत्यादयः।

उपनिषद्ग्रन्थकालानन्तरं समागच्छति सूत्रकालः। भारतीयजीवने सूत्र-साहित्यस्यातिशयेन महत्त्वं वरीवर्तीति न तिरोहितं प्रेक्षावताम्। तत्र शांखायन-श्रौतसूत्र, आश्वालयनश्रौतसूत्र, लाट्यायन-बौधायन-मानवश्रौतसूत्रेषु सर्वत्रैव रुद्रसम्वन्धिन्यः स्तुतयो विलसन्तितमाम्। तत्र शांखायनश्रौतसूत्रे शूलगवहोमे यथा—'रुद्रं गवा यजते स्वस्त्ययनाय[4]' इत्याद्युक्तम्। आश्वलायने च यथा--

'यदि देवानां हवींष्यन्वायतयेयुरग्निर्गृहपतिः सोमो वनस्पति--रुद्रः पशुमान् पशुपतिर्वा'[5] ।

लाट्यायने, त्र्यम्बकहोमे च--

'तत्र ब्रह्मा पर्यञ्जपेद् इति धानञ्जयजप्यस्तिष्ठन्निति शाण्डिल्यस्त्रयम्बकं यजामहे सुगन्धिं पुष्टिवर्धनमुर्वारुकमिव बन्धानान्मृत्योर्मुक्षीयमामृतादिति[6]'।

बौधायने धर्मसूत्रे च--

---

१. बृ० उ०—१।४।११।
२. श्वे० उ०—३।२-३।
३. श्वे० उ०—३।११, ४-२२, ६-१३।
४. शां० श्रौ० सू०—४।१७।
५. आ० श्रौ० सू०—४।११।५।
६. ला० श्रौ० सू० त्र्य०—५।३।

'ॐ भवं देवं तर्पयामि। ॐ शिवं देवं तर्पयामि, ॐ ईशानं-ॐ पशुपतिं[१]०' इत्यादयः। एवमेवान्यत्रापि रुद्रस्तुतिर्विद्यते सूत्रासाहित्ये ब्राह्मणग्रन्थेषु च।

इत्थं हि समूलमिदं प्रमाणयितुं शक्यते यद् पौराणिकशिवस्वरूपस्य उपासनस्य च प्रायः सर्वे प्रधानांशा वैदिकरुद्रस्य स्वरूपात् तदुपासनपद्धतेश्च गृहीता विद्यन्ते। स्वयं 'शिवः' इति नामापि वैदिकरुद्रस्य प्रशस्तिपरं विशेषणमेवेति मन्ये; तत् प्राथम्येन यजुर्वेदे प्राप्यते। शिवस्यान्येषां नाम्नामभ्युदयोऽपि वैदिकाधारे एव जात इत्यत्र शङ्काया लेशावसरो नास्ति। शिवस्य त्रयाणां नेत्राणामुपमा 'त्रयम्बकम्' इत्यनेन संपन्नम्। नीलशिखण्डोपाधौ शिवस्य हालाहलविषपानस्य पौराणिककथाबीजं प्राप्यते। अयमुपाधिर्यजुर्वेदे 'नीलग्रीवः' इत्यनेन दीयते। 'कपर्दिन्' 'केशिन्' प्रभृतिभिरुपाधिभिः परवर्तिकालिकशिवस्य जटामण्डितरूपस्य कल्पना समजनि। केशिभिः मुनिभिश्च सह वैदिकरुद्रस्य प्राक्तनसाहचर्यरूपेण पुराणकालिकशिवस्य यौगिकक्रियाभिः सम्बन्धस्तस्य महायोगिरूपस्य चोत्पतिस्तदैव समजनि। वैदिकरुद्रस्यावास उत्तरीयपर्वतेषु स्वीकृतत्वादेव परवर्तिसमये शिवावासः 'कैलासः' इति प्रतिष्ठापितः। यजुर्वेदस्य शतरुद्रियस्तोत्रे रुद्रधनुषः पिनाक इत्यभिधानेनागामिकाले सैव संज्ञा तद्धनुषः समपद्यत। वैदिकरुद्रस्यैकोऽन्य उपाधिः 'कृत्तिवासः' इति। एतेनैव पौराणिकशिवस्यापि कृतिधृगित्येदं नाम सार्थकं भवति। एवं दृश्यते हीदं यद् वैदिकी अनादिश्च रुद्रोपासनपरम्परा इदानीमपि याथातथ्येन प्रचलति। एतेनागमिकशैवधर्मस्य तद्रूपं निर्ममे यत्रानेके विश्वासाः परम्पराश्च प्रतिष्ठापिता बभूवुः। अतो यावत्यः परम्परा अनादिकालत समारभ्य इदानीं यावत् शिवोपासने प्रचलन्ति, मन्ये; तावत्यः परम्परा नान्येषु धर्ममार्गेषु समजनीत्यसंशयम्।

आगमिक-पौराणिकशैवधर्मस्य च केचन पक्षा एतादृशा अपि सन्ति ये वैदिकरुद्रोपासने प्रायो नैव लभ्यन्ते। यथा 'लिङ्गपूजायाः' प्रकारो वेदेषु न दृश्यते, परं वेदोत्तरकालादारभ्याद्यावधि सा शिवोपासनायाः प्रमुखतमा पद्धतिर्विद्यते। यद्यपि अश्वमेधयज्ञेषु यज्ञीयपशोर्लिङ्गपूजा प्रचलिता आसीत्तथापि स्पष्टतया लिङ्गपूजाया त्रेदेषु अनुपदेशात् नैतेन पश्चात् कालिकी लिङ्गपूजापद्धतिर्योजयितुं शक्यते।

शक्तिपूजानामापरं वैशिष्टयं वैदिककालोत्तररुद्रोपासने दृश्यते। यजुर्वेदस्य प्रथमकाण्डे अष्टमे सूक्ते षष्ठे मन्त्रे त्रयम्बकहोमे रुद्रेण सहैकस्याः स्त्रीदेवताया अम्बिकाया उल्लेखो विद्यते, या च तस्य भगिनित्वेनावतिष्ठते, परं ततोऽन्यत्र अम्बिकायाः क्वाप्युल्लेखो न जातः। अतस्तस्या अकिञ्चित्करमेव महत्त्वं कल्पनीयम्। एतदतिरिक्तं वेदोत्तरकाले शक्तेः सर्वप्रधानदेवेष्वग्रगण्यत्वेन प्रतिष्ठा वरीवर्ति। शक्तेर्माहात्म्यं शिवेनान्यूनम्, तत्समम्, क्वचिदधिकं वा विद्यते। अतस्त-

---

१. बौ० ध० सू०—२।५।६।

स्याः स्वातन्त्र्येणोपासनं बहोः कालात् प्रचलति, अवश्यमेव यजुर्वेदीया अम्बिका नैतत् स्वरूपमधिरोहति। अतो वेदादन्यं तस्याः प्रतिष्ठाकारणान्वेषणमद्यत्वे शक्तिपूजाप्रकरणे कर्तव्यमिति, यतो लोकास्तां स्वीकुर्वन्तीति।

देवालयानां निर्माणम्, तत्र रुद्रस्य लिङ्गानां स्थापनम्, अन्येषां देवानां वा स्थापनं नूनं वेदेषु क्वचित् साक्षान्निरूपणाभावेऽपि उत्तरवैदिककाले लब्धप्रतिष्ठाकं दृश्यते। वैदिके युगे दीर्घसत्रावसायिनां यज्ञानां यज्ञमण्डपानाञ्च निर्माणानि भवन्ति स्म, परं परवर्तिकाले अत्युत्कृष्टदेवालयानां तत्र देवमूर्तीनां च प्रतिष्ठापनेनेदं कल्पनीयं भवति यदस्याः परम्परायाः प्रादुर्भावो वेदोत्तरकाल एव समजनि। इदञ्च तृतीयं वैशिष्ट्यं वेदोत्तरकालस्य संल्लक्ष्यते। एवं हि रुद्रसोपानाया विविधोपचारा विचारधाराश्च यथा हि-रुद्राद्वैतवादः, द्वैतवादः, द्वैताद्वैतवादादयश्च वेदोत्तरमेव प्रादुर्बभुवुरित्यशंशयेन वक्तुं शक्यते। एवञ्च क्रमेण शैवधर्मस्य, तदुपासनस्य तत्र विविध-साधनमार्गाणाञ्च विकासः प्रायशः शनै-शनैर्जातः, यस्य प्रभावो भारतवर्षसहितेषु देशान्तरेष्वप्यशंशयेन समभवदिति तत्तद् प्रमाणैरवगम्यते।

## रुद्रोपासने लिङ्गपूजा

लिङ्गन्नाम प्राणिनामसाधारणधर्मः। 'लिङ्गं चिह्नशेफयोः[१]' इत्यमरकोशप्रामाण्येन लिङ्गस्य चिह्नं शेफश्चोभे नामनी। ते नपुंसके। अतो लिङ्ग्यतेऽनेनेति लिङ्गमिति व्युत्पत्तिः। 'लिगि गतौ' (भ्वा० प० से०) इति धातोः 'हलश्च' (पा० सू० ३।३।१२१) इति सूत्रेण घञ् प्रत्यये रूपसिद्धिः। एवं हि—

लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि।
शिवमूर्तिविशेषे च मेहनेऽपि नपुंसकम्[२]॥ इत्युक्तम्।

प्रायः सर्वत्र देशेषु, साहित्येषु, प्राणिषु च लिङ्गस्य स्वाभाविकधर्ममर्यादा समुपतिष्ठते। व्याकरणे, सांख्ये, धर्मशास्त्रे चास्मिन् विषये वैशिष्ट्येन विचाराः प्रचारिता विद्यन्ते। उक्तञ्च शब्देन्दुशेखरे भट्टनागेशेन कोशवाक्यम्—'स्तनकेशवती स्त्रीः स्याल्लोमशः पुरुषः स्मृतः' इति। अत्र स्तन-केश-लोमप्रभृतयः शब्दाः पारिभाषिका मन्यन्ते। 'सामान्ये नपुंसकम्' इति वचनेन स्त्रीपुंसयोर्वैशिष्टचाभावे सामान्यस्थितिर्भवति। तस्यैव निरूपणं व्याकरणशास्त्रे लिङ्गवैशिष्ट्येन क्रियते, तटः-तटी-तटमित्यादिना। लिङ्गनिर्वचनमावश्यकमिति विज्ञायैव भगवान् पाणिनिर्लिङ्गानुशासनं नाम प्रकरणं विरचितवान्। अतः शब्दराशौ केचन शब्दा नियतलिङ्गाः केचन परिवर्तनशीलाश्च भवन्ति।

शिवस्य लिङ्गपूजा स्वस्मिन्नतीव महत्त्वं बिभर्ति। एतदर्थमेव स्वातन्त्र्येण

---

१. अ० को०—३।३।२५। २. मे० को० २३।२१।२२।

लिङ्गपुराणस्य रचना समजनि । शिवपुराणे अपि लिङ्गपूजा बहुशः प्रकाशिता । इदमतीवविचित्रं तथ्यं यदन्ये देवाः मूर्तिरूपेण पूज्यन्ते, परं भगवाँच्छिवः प्रायशो लिङ्गरूपेण पूज्यते । यत्र यत्र ज्योतिर्लिङ्गानि तत्र तत्र लिङ्गपूजैव समादृता दृश्यते । अर्घ्याकारे मण्डले लिङ्गस्थापनेनेदं सिद्धयति यद् प्रकृति-पुरुष-स्त्री-पुरुष शक्ति-शिवमूलकोऽयं जीवलोकः । यतश्चार्घ्यं शक्तिरूपकं लिङ्गञ्च शिवरूपकमिति, तयोः सामरस्यादेव शब्दार्थसामर्थ्यादर्थनिष्पत्तिवद् सृष्टिसमारम्भो जायते । अर्थ-लिङ्गयोगादेव सृष्टिः, उत्तराभिमुखमर्घ्यस्य सन्निवेशात्सृष्टेरुत्तरोत्तरं तुष्टिः पुष्टिश्च परिकल्प्यते । लिङ्गस्य विश्वाण्डाकारत्वम् । अतो रुद्रोऽपि विश्वाकारक इति कल्पनीयो भवति । तस्यार्चनेन समग्रसृष्टेरर्चनं भवतीति सुतरां सिद्धचति ।

तत्र शैवदर्शनस्य वास्तविकं नाम भारतीयवाङ्मये 'आगमः' इति । स चागमो ज्ञानरूपोऽनन्तशास्त्रेषु व्यवहृतो भवति । तदुक्तम्—

आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः ।
शास्त्रं शब्दात्मकं सर्वम्[1] ..... ..... ॥

स चागमो भगवतो महेश्वरस्येशानतत्पुरुषाघोरवामदेवसद्योजातात्मकस्य ज्ञानात्मकस्य पञ्चमुखस्य प्रभावादेवोदेति । भगवान् भर्तृहरिरपि वाक्यपदीये आगमस्य ज्ञानात्मकत्वं स्फुटमेव स्वीकरोति । यथा—

चैतन्यमिव यश्चायमविच्छेदेन वर्तते ।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते[2] ॥

कुलमूलावतारतन्त्रे हि—

अनादिनिधनाच्छान्ताच्छिवात्परमकारणात् ।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया ॥
तयोत्पन्नानि भूतानि भुवनानि चतुर्दश ।
वाङ्मयं चैव यत्किञ्चित् तत्सर्वं मातृकोद्भवम् ॥ इत्युक्तम् ।

एवमेव शिवशक्त्योः शब्दार्थयोरिवैक्यं सर्वत्र शैव-शाक्तदर्शने निगदितम् । तथा हि—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशते[3] ॥ इति ।

शब्दानां मूलं परापराम्बा, अर्थानाञ्च मूलं परमेश्वरः शिवः । इममेव सिद्धान्तं 'वागर्थाविव सम्पृक्तौ पार्वतीपरमेश्वरौ[4]' इति पदेन कविकुलगुरुः कालिदासोऽपि मनुते । एवमेव हि सिद्धान्तं शैवदर्शने सर्वत्र समुल्लसति । तदुक्तं वायवीयसंहितायाम्—

---

१. स्व० त० ४।३४ । २. वा० प०–१।४१ ।
३. ईश्वर० वचनम्–१।५।७ । ४. रघु० म०–१।१ ।

शब्दजातमशेषं तु धत्ते शङ्करवल्लभा ।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥ इत्यादयः ।

महाभारते शिवमूर्तीनां लिङ्गानाञ्चोपासनपद्धतेः सङ्केतः प्राप्यते । अनुशासनपर्वणि १६,२२,८५,९०,९७,१५१ प्रभृत्यध्यायेषु शिवमूर्तिनां सामान्येन लिङ्गानाञ्च वैशिष्ट्येनोपासनपद्धतिः प्रचलिता इति प्रदर्शितम् । एवं हि द्रोणपर्वणि २२ अध्यायेऽपि लिङ्गार्चनं निरूपितम् । अतः कुत्रचित् मूर्तीनां सर्वत्र च शिवलिङ्गानामर्चनं भवति स्म इत्यत्र शङ्कालेशो नास्ति । अतिप्राचीनकाले भारते लिङ्गपूजैव प्रचलिता आसीदिति[1] । लिङ्गार्चनेनैव शिवस्य पुंस्त्ववैशिष्ट्यात् अन्येभ्यो देवेभ्यो विशिष्टतमं महत्त्वं वरीवर्ति । एवं हि वेदे स्पष्टरूपेण लिङ्गार्चनस्योपदेशाभावेऽपि वैदिकमन्त्रभावकल्पनाधारेण परवर्तिकाले रुद्रोपासनस्य प्रमुखधारो लिङ्गपूजैव समपद्यत इति तत्र तत्र ग्रन्थालोडनेनावगम्यते । समये समये उत्खननेन शिलाभिलेखेन, महाकाव्यानुरोधेन चैतज्ज्ञायते यद् पश्चिमएशियामहाद्वीपस्य प्राचीनमिस्रदेशे, पूर्वएशियामहाद्वीपस्य जापानप्रभृतिदेशेषु च सर्वत्रैव लिङ्गपूजा प्रचलति स्म । प्राचीनसभ्यताया बेबीलीन-असीरियन जनाः प्रायशो लिङ्गोपासनं कुर्वन्ति स्म इति सर्वैरैतिह्यविदः प्रायशो जानन्त्येव ।

'सिन्धुघाटी' इति स्थानस्य मोहनजोदरो–हरप्पा इत्याख्यस्योत्खनने प्राप्तेन शिवलिङ्गेनेदं सुस्पष्टमेव यदद्यावधि सार्द्धद्विसहस्रवर्षपूर्वं लिङ्गरूपेण शिवार्चनं भवति स्म भारते । अतो बहोः कालादेव प्राचीनएशियाद्वीपतः प्रारम्भ पूर्वएशिया महाद्वीपं यावत् यस्मिन् समग्रं उत्तरदक्षिणभारतं वरीवर्ति, शिवलिङ्गोपासनं शक्तिसहितमेव प्रचलित आसीत् । अस्य शिवलिङ्गार्चनस्य वैदिकरुद्रार्चनेन तादात्म्यसम्बन्धोऽपि प्राक्तनकालत आसीदिति निर्विवादम् । वैदिकरुद्रस्वरूपस्य निर्गुणस्वरूपकल्पनया शिवलिङ्गं सम्भूतमिति बहुविचारितेन च प्रतिभाति ।

## उपनिषत्सु रुद्रोपासनम्

निगमागममूलिकेयं भारतीया संस्कृतिः । निगमपदेन वेदाः, आगम इति पदेन शिवप्रोक्ताः शैवशाक्तसिद्धान्ताः गृह्यन्ते । आगमपन्थानं तिरस्कृत्य भारतीयजीवनपद्धतेः कल्पनमेव दुःशकमिति । अतो वेदादेव क्वचित् साक्षात्, क्वचिच्च परम्परया शिव-शक्तेरुपासनस्य प्रमाणान्युपलभ्यन्ते । श्वेताश्वतरोपनिषदि भगवतः शिवस्य सर्वशक्तिमत्वात् ईश-महेश्वर-शिव-ईशानप्रभृतिभिः पदैः सम्बोधनं भवति स्म । तथा च—

सर्वाननशिरो ग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः[2] ॥

१. दृष्टव्यम्–यथा–गुड्डीमल्लस्य लिङ्गमूर्तिः ।
२. श्वे० उ०—३।११ ।

मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्[1] ॥

योयोनिं योनिम् अधितिष्ठत्येको यस्मिन्निदं संच विचैतिसर्वम् ।
तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति[2] ॥

भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्[3] ॥ इत्यादयः ।

श्वेताश्वतरोपनिषत्काल उपनिषदां मध्ये मध्यकाले निर्धार्यते । अत्र च रुद्रस्य यद्रूपं प्राप्यते तेनेदं सुस्पष्टं भवति यद् तावत्कालं यावद् वैदिको रुद्रः शिवाभिधेन महद् वैशिष्ट्यमगमत्, तस्याभेदेन योगाभ्यासेन च दार्शनिकविचारधारया सम्बन्धोऽप्यजायत, ऋषयो महर्षयश्च परमाध्यात्मतत्त्वेन तमेव स्वीचक्रुः । असावेव शिवः कालान्तरे ज्ञाननिधिः, शब्दमयः, ज्ञानम, गुरुः प्रभृत्यभिधानैर्महर्षिभिरभिहितः । स च शिवः शक्त्या युक्तो लोकान् भावयति, ततश्चानन्तगुणकर्मा अनन्तलोका चेयं सृष्टिः प्रादुर्भवति । उक्तञ्च श्वेताश्वतरोपनिषदि—

य एको वर्णो बहुधा शक्तियोगाद्, वर्णान् अनेकान् निहितार्थो दधाति[4] ।

शक्तिश्चेयमनादिः, सदा—शिवमनुवर्तते । सा च रक्त-कृष्ण-श्वेतत्रिवर्णात्मिका । अतस्त्रिगुणात्मिका साऽखिलं विश्वजातं विरचयति ।
उक्तञ्चोपनिषदि—

अजामेकां लोहितशुक्लकृष्णां, बह्वीःप्रजाः सृजमानां सरूपाः ।
अजोह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः[5] ॥

जीवे पुरुषे चायमेवभेदो यद् पुरुषः स्वतन्त्रःशिवस्वरूपः, जीवश्च भोक्ता प्रकृत्या नियन्तृनश्च । यदा हि जायते ब्रह्मसाक्षात्कारस्तदैव जीवो मुच्यते, प्रकृत्या मायाबन्धनेन वा तदेव मुक्तो भवति । द्रष्टव्यञ्चैतदेव श्वेताश्वतरोपनिषदि—

अस्मान् मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया सन्निरुद्धः ।
मायां तु प्रकृतिं विद्यात्, मायिनं तु महेश्वरम् ॥
तत्कारणं सांख्ययोगाधिगम्यं, ज्ञात्वा देवं मुच्यते सर्वपाशैः[6] ॥ इत्यादयः ।

श्वेताश्वतरोपनिषदि यस्य पुरुषविशेषस्य सङ्केतः स रुद्र एवेति, तमेव शिवः, ईशः, ईशान इति परश्शतैः शब्दैरत्रव्यवह्रियते । सांख्यागमदर्शनश्चातीव प्राचीनदर्शनम् । अतो दर्शनानामवतारक्रमे एव शिवशक्तेः प्रामुख्यं तत्र तत्र विलसति बीजरूपेण विस्तरेण वा दर्शनेषु । इत एव स्पष्टतराधारा शैवशाक्तागमस्य प्रादुर्भवति, या शनैःशनैर्गङ्गाधारा इव विशिष्टतरा भवन्ती

१. श्वे० उ०—४।१ । २. तत्रैव—४।११ । ३. तत्रैव—५।१४ ।
४. तत्रैव—४।१ । ५. तत्रैव—४।५ । ६. तत्रैव—४।९—१०।६।१३ ।

स्वप्रभावमहिम्ना समस्तलोककल्याणमावहन्ती रामायणे, महाभारते, पुराणेषु, शास्त्रेषु, काव्येषु, व्यवहारेषु च सञ्चरन्ती अद्यावधि समुल्लसति। केनोपनिषदि उमा हैमवती इति प्रोक्त। उमाया उपाधिर्हैमवतीति सत्त्वादुमाया रूपं सौवर्णम्, तामेव परवर्तिकाले हिमवतः कन्यकेति मन्यमाना जनास्तस्या नाम पार्वती इति चक्रु[१]। मैत्रायणीये उपनिषदि रुद्रस्य तमोगुणप्राधान्यं विष्णोश्च सत्त्वगुणप्रधान्यश्चान्वाख्यानं विद्यते। भर्गरुद्रयोश्चैक्यं निरूपयन् तत्राह—

भर्गाख्यो भाभिर्गतिस्य हीति भर्गो भर्ज इति वैष भर्ग इति रुद्रो ब्रह्मवादिनो[२]......॥ इति।

एवं हि रुद्रस्य प्रजापतिना तादात्म्यं सम्पादयन् शम्भुप्रभृतिनामभिर्यथा च–

"एष हि खल्वात्मेशानः शम्भुर्वो रुद्रः प्रजापतिर्विश्वसृड्धिरण्यगर्भः सत्यं प्राणो हंसः शान्तो विष्णुर्नारायणोऽर्कः सविता धाता सम्राड् इन्द्र ह इन्दुरिति य एष[३]" इत्यादयः प्रतिपादयन् उत्तरकाले रुद्रस्य शम्भुरिति नाम जातमिति न तिरोहितं प्रेक्षावद्भिः। एवं हि बृहल्लघुसर्वासूपनिषत्सु प्रायशो रुद्रविषयिणी चर्चा कृता विद्यते। एवं हि क्रमेण वैदिकरुद्र एव परवर्ति काले शम्भुशिवादिपरश्शतैर्नामभिः, अम्बिकादेवी एव उमा, हैमवती, सुखर्णवर्णा, पार्वती, शिवा, शक्तिप्रभृत्यनेकैः शब्दैर्लोके विख्यातिमलभतामिति बहुविमर्शेन प्रतिफलति।

वेदस्य कर्मकाण्ड-उपासनाकाण्ड-ज्ञानकाण्डमिति काण्डत्रयं विद्यते। अतः कर्मकाण्डकर्मानन्तरं बहवो जनाः शनैः शनैरुपासनाया अधिकारिणो जायन्ते। अस्या भावनायाः स्पष्टतरः प्रकाश उपनिषत्स्वेव समवलोक्यते। अत एकं देवं प्रधानं मन्वानो जनाः परमार्थत एकेश्वरवादिनो अजायन्त। अत्रैव भक्तिभावनायाः प्रादुर्भावोऽपि समजनि। यद्यपि पार्थक्येन कर्म-उपासना-ज्ञानकाण्ड-कालकल्पनं कर्तुंन्न शक्यते, एकवृन्तावलम्बिफलत्रयवत, तथापि कर्मकाण्ड-भावस्य किञ्चिन्न्यूनत्वं परिभाव्यैव एकेश्वरवादप्रधानाया भक्तिभावनायाः प्रामुख्येन प्रादुर्भावो बभूवेति नैतत् तिरस्कर्तुं शक्यते। अस्या एकेश्वरभावभक्ति-प्रधानाया विचारधाराया आश्रयेषु सत्सु बहुदेवेषु मुख्यो देवो भगवाँच्छिव एव जातः। एतच्च श्वेताश्वतरोपनिषदो वक्ष्यमाणेन वचनेन सिद्धयति। तच्च—

तत्कारणं सांख्योगाधिगम्यं, ज्ञात्वा देवं मुच्यते सर्वपाशैः॥ इत्यादयः।

## सूत्रग्रन्थेषु रुद्रस्वरूपम्

ब्राह्मणग्रन्थोत्तरकाल उपनिषदाम्, तदुत्तरकालश्च सूत्रसाहित्यस्य। तत्र श्रौत-धर्म-गृह्यसूत्रेषु च रुद्रोपासनायाः का प्रक्रिया आसीदित्यनुपदमेव विविच्यते किञ्चिद्—

---

१. केन० उप०—३।१२। २. मैत्रा० उप०—५।७। ३. तत्रैव—५।८।

उपनिषदामुत्तरकालेन सहैव सूत्रेष्वपि रुद्रार्चनस्य क्रमः शनैः शनैः प्रचलितोऽभूत् । अयश्चार्चनक्रमः कर्मकाण्डपथमुत्सृज्य भावपथमलङ्करोति । अत्र काले अनेकेषु देवेषु स एक एव रुद्रो देवो विभिन्ननामभिर्विभूषितोऽऽराधनाऽऽधारः सम्पद्यते । सः पूर्ववदेव भव-रुद्र-शर्वप्रभृत्युपाधिभिर्विभूषितो महादेवः, पशुपतिः, भूपतिः प्रभृतीनि गुणकर्मानुरोधीनि नामानि रक्षति । यथा च शांखायनश्रौतसूत्रे—

'वेद ते पितरं वेद मातरं, द्यौस्ते पिता पृथिवी माता । तस्मै ते देव भवाय शर्वाय पशुपतय उग्राय देवाय महते देवाय रुद्रायेशानायाश्नये स्वाहेति[1]' इत्यादयः ।

'भूपते भुवपते भुवनपते भूतपते भूतानां पते महतो भूतस्य पते मृल नो द्विपदे चतुष्पदे च पशवे मृल नश्च द्विपदश्च चतुष्पदश्च पशून् योऽस्मान् द्वेष्टि यं च वयं द्विष्मो दुरापूरोऽसि सच्छायोऽधिनामेन[2]' इत्यादयश्च ।

एवं हि शांखायन[3], लाटचायन[4], आश्वलायन[5] सूत्रेष्वपि संहितावद् त्र्यम्बक नाम्ना तस्मै विशेषहविर्दानं, वर्णितम् येन च स रुज्हरौषधीनां दाता, मनुष्य-पश्वादीनां च त्राता इति ज्ञायते ।

शांखायनश्रौतसूत्रे रुद्रसहचर्याः स्त्रीदेवताया भवानी, शर्वाणी, ईशानी, रुद्राणी, आर्गेयीप्रभृतिनामभिः स्तुत्या एतत्कालं यावत् तस्य स्त्रीदेव्या सह तादात्म्येनार्चनं जायते स्म, गणानामपि पूजा इदानीं यावत् प्रचलिताऽभवदित्यत्र शङ्कावकाशो न विद्यते ।

समकालिकेषु धर्मसूत्रेष्वपि श्रौतसूत्रमिव रुद्रोपासनं निर्दिष्म् । बौधायनधर्मसूत्रे रुद्रस्य सहचर्याःस्त्रीदेवतायाः स्पष्टरूपेण रुद्रपत्नीत्वेनाप्यत्र निर्देशः सम्प्राप्यते । तथा हि--

'ॐ भवं देवं तर्पयामि । शिवं देवं तर्पयामि ॐ ईशानं···· ॐ पशुपतिं··· । ॐ रुद्रं ····। ॐ उग्रं ···। ॐ भीमं ···।····ॐ महान्तं ····। ॐ भवस्य देवस्य पत्नीं तर्पयामि[6]' इत्यादयः ।

अत्र धर्मसूत्रे परमेश्वरस्य पार्षदानामपि तर्पणं निर्दिष्टम् । ततः प्राक् विनायकस्य स्कन्दस्य च नामानि संहितादौ रुद्रप्रसङ्गे नैवाप्तानि । अयमेव विनायकः कालक्रमेण विघ्नविदारको गणेशः संवृत्तः इत्यपि सम्भाव्यते । यद्यपि गणेशस्य नाम्नो बौधायनधर्मसूत्रे नामोल्लेखो न जातस्तथापि तैत्तिरीयारण्यके वक्रतुण्डः,

---

१. शांखा० श्रौ० सू० शूलगवहोमे—४।१९ ।
२. तत्रैव—४।२० ।
३. शांखा० श्रौ० सू०—३।१७।१०-११ ।
४. लाटचा० श्रौ० सूत्र—५।३ ।
५. आश्व० श्रौ० सू०—३।११।१ ।
६. बौधा० ध० सू० २।५।६ ।

दन्ती इति नामभिः स्तोत्रस्य सत्त्वात्तस्यात्र कल्पना कार्या। यतो ह्यत्र विनायक-स्कन्द-षण्मुखानां शिवपुत्राणां तर्पणं विहितम्। तद्धि यथा—

'ॐ स्कन्दं तर्पयामि। ॐ षण्मुखं.... । ॐ जयन्तं। ॐ विशाखं तर्पयामि'[1]। इत्यादयः।

सामान्यजनानां धार्मिकविचाराचाराणां स्वरूपज्ञानाय गृह्यसूत्राणि सन्ति परमोपयोगीनि। गृहस्थजीवनेन सह गृह्यसूत्रस्य सम्बद्धतया तत्र हि रुद्रस्योपासनविधेर्बाहुल्येन निरूपणात् सामान्यजीवनेन सह रुद्रस्य सम्बन्ध इदानीं यावत् सम्पन्न इति तत्र तत्र गृह्यसूत्रानुशीलनेनावगम्यते। निर्विघ्नता सिद्ध्यर्थं सुखसमृद्धि सम्प्राप्त्यर्थञ्चाश्वलायनगृह्यसूत्रे शिवं समुद्दिश्य होमैकः प्रदर्शितः। तथा च—

'आश्वयुज्याम् आश्वयुजीकर्म। निवेशनम् अलंकृत्य स्नाताः शुचिवाससः पशुपतये स्थालीपाकं निरूप्य जुहुयुः। पशुपतये शिवाय शंकराय पृषातकाय स्वाहेति,'[2] इत्यादयः।

रुद्रः सामान्यतो वृक्षेषु चत्वरेषु पुष्पतीर्थेषु श्मशानेषु च एकाकी एव रमते, तत्र तत्र च जनानां अनिष्टः संभवति, तस्मादेव रक्षणार्थं रुद्राराधनं भवति स्म[3]।

## रुद्रपूजायां शक्तिपूजा

धर्मसूत्रवदेव गृह्यसूत्रेष्वपि रुद्राण्या रुद्रपुत्राणाञ्चोल्लेखः समभवत्, परन्त्वत्रायमेव विशेषो यद्रुद्रस्य मूर्तिपूजाऽपि गृह्यसूत्रकाले प्रादुरभवत्। बोधायनगृह्यसूत्रे ज्येष्ठापूजा प्रसङ्गे देवागार इति शब्दस्योल्लेखः समजनि। अतो देवागारेषु मूर्तिपूजा भवति स्म। मूर्तिपूजासार्द्धमेव लिङ्गपूजाऽपि प्रचलिताऽऽसीदिति। सा च पूजा मानवाकृतिमूर्तिवदेव फलपुष्पाक्षतधूपदीपनैवेद्यादिभिः सम्पद्यते स्म इत्यत्र नास्ति शङ्कालेशः[4]।

गृह्यसूत्रेषु रुद्रपत्न्याः स्वातन्त्र्येणाप्युपासनं समारभत। तत्र रुद्रमूर्तिस्थापनविधिना सहैव स्त्रीदेवताऽर्चनं निर्दिष्टम्, दुर्गा इति सञ्ज्ञया च सा देवी अत्र प्राथम्येन निर्दिष्टा। तद्यथा—

'आपो हिष्टा मयोभुवः इति तिसृभिः हिरण्यवर्णाः इति चतसृभिः पवमानाः इत्येतेनानुवाकेन मार्जयित्वा आर्यायै रौद्रायै महाकाल्यै महायोगिन्यै सुवर्णपुष्प्यै, देवसंकीर्त्यै महायज्ञै ( यक्ष्यै ) महावैष्णव्यै महापृथिव्यै मनोगम्यै संखधारिण्यै नमः इति .. सावित्र्यै ... भगवत्यै दुर्गादेव्यै हविर्निवेदयामि इति हविर्निवेद्य शेषम् एकादशनामधेयै हुत्वा पश्चद्दुर्गां जपेद् दशस्वस्ति जपेत्[5]' इत्यादयः।

---

१. बौ० ध० सू०—२।५।७।
२. आश्वला० गृ० सू०—२।२।१-२।
३. मान० गृ० सू०—१-१३।९-१४।
४. बोधा० गृ० सू०—३।३।९।
५. बोधा० गृ० सू०—३।३।२।

गृह्यसूत्रकालं यावत् देव्याराधनं वैशिष्टचेन सम्पद्यते स्म । उपनिषदां शक्त्या अस्या अभेदः प्रतीयते । अस्यासनं सिंहरथे आसीत् । यथाचोदाहरणं बोधायन गृह्यसूत्रे—

यस्याः सिंहारथे युक्ता व्याघ्राश्चाप्यनुगामिनः ।
तामिमां पुण्डरीकाक्षीं ज्येष्ठामाह्वयाम्यहम्[1] ।। इति ।।

## विनायकस्याराधनम्

गृह्यसूत्रेषु विनायकस्याराधनमपि रुद्रेण सहैव प्रतिपादितम् । तस्यानेकानि नामानि सन्ति । स चासन्तुष्टो विघ्नकरो सन्तुष्टश्च विघ्नहरो भवति । विनायकस्य कोपे सति लक्षणवन्तोऽपि राजपुत्रा राज्यं न लभन्ते । पतिकामाश्च लक्षणवत्यः कन्याः भर्तृन्न लभन्ते, लक्षणवत्यश्च स्त्रियः प्रजाकामाः प्रजां न लभन्ते । आचारवतीनां स्त्रीणामपत्यानि म्रियन्ते । श्रोत्रियोऽध्यापकः आचार्यत्वं न प्राप्नोति । अध्येतॄणां महाविघ्ना भवन्ति । वणिजां वाणिज्यपक्षा विनश्यन्ति, कृषीवलानां कृषिरल्पफला भवति । अतस्तस्यानुकूल्याय बहवो यत्नाः प्राचीनकालादेवारभ्य अद्यावधि अनुष्ठियन्ते[2] । बोधायनगृह्यसूत्रेऽपि विनायकार्चनस्य विधिर्निर्दिष्टः । तत्र हि—

'मासि मासि चतुर्थ्यां शुक्लपक्षस्य पञ्चम्यां वाभ्युदयैः सिद्धिकामः ऋद्धिकामः पशुकामो वा भगवतो विनाकस्य बलिं हरेत्—

विघ्न-विघ्नेश्वरागच्छ विघ्नित्येव नमस्कृत ।
अविघ्नाय भवान् सम्यक् सदास्माकं भव प्रभो[3]।। इत्यादयः ।

अस्य विनायकस्य धर्मसूत्रेषु वर्णितस्य 'हस्तिमुख' 'वक्रतुण्ड' प्रभृत्युपाधिभिः साधर्म्यं विद्यते । तस्योपाधिः 'गणेश्वर' इत्यपि आसीद् यश्चाग्रे गणेश इति नाम्ना प्रसिद्धिं जगाम । गुणधर्मेण गणेशो रुद्रमनुकरोति । अतः शिवस्य प्रधानपार्षदपदमलङ्कुर्वाणोऽयं गणपतिः शिवशक्तिश्च संतोष्य परवर्तिकाले पूज्याग्रेष्वग्रगण्यतामवाप इति सुधियो जानन्त्येव । एकस्यैव शिवस्योपासनप्रक्रियायां भेदान् प्रकल्प्य शिवपार्षदेषु गणेश्वरस्यायोजनं विधाय विनायकस्य शिवसुतत्वात् तद्गुणधर्मानुकारित्वेन भाव्यमिति निग्रहानुग्रहकारित्वं गणेशस्यापि सम्भवतीति ।

उत्खननप्रमाणेषु सर्वतः प्राचीनप्रमाणं सिन्धुसभ्यतायाः प्राप्यते । तत्र हि शिवशक्तिमूर्तिनामवशेषेण तदानीन्तनकाले शिवशक्त्याराधनं भवति स्म । अतो वैदिकपरम्परायाः सूत्रग्रन्थं यावदनुशीलनेन हरप्पा-मोहनजोदरो नामनी सिन्धुसभ्यतायारुत्खननप्रमाणेन च स्पष्टं प्रतिभाति यत् शैवशाक्त परम्परा

---

१. बोधा० गृ० सू०—३।३।९ । २. मानव० गृ० सू०—२।१४ ।
३. बोधा० गृ० सू०—३।३।१० ।

अनादिकालादेव प्रचलन्ती सतीदानीमपि प्रचलति। कालक्रमेण वैदिको रुद्र एव शिवपदवीकः, अम्बिका शक्तिरेव पार्वती पदवीका, विनायक एव च गणेशपदवीको जात इति। कालक्रमेणैव वैदिकाराधनपरम्परायां क्वचित् परिवर्तनं विधाय देवालयानायां, मूर्तिनां, पूजापद्धतिनां पूजोपयिकसामग्रीणाञ्च भेदाः प्रादुर्बभूवुः, अस्य परमाधारो वैदिक एव, परम्परा वैदिकी एवेति शम्।

## रामायणे शैवधर्मस्य स्वरूपम्

वैदिककालादारभ्य सूत्रसाहित्यकालं यावत् रुद्रस्वरूपं शैवधर्मस्य स्थितिश्च इतः पूर्वं मया विमृष्टम्, पुनरिदानीं रामायणे महाभारते च शिवशक्तिभक्ति-धारायाः शैवशक्तिपरम्परायाः समासेन विमर्शः प्रस्तूयते। अत्र साहित्ये प्राचीना-र्वाचीनशैवधर्मस्योभे रूपे प्राप्येते। महाभारतापेक्षया रामायणे शिवस्य प्राचीन-स्वरूपं दृश्यते। अतस्तावत्प्राथम्येन रामायणमाश्रित्यैव विविच्यते किञ्चित्।

रामायणे सूत्रग्रन्थेभ्यो रुद्रस्वरूपं भूयस्त्वेन प्रकृष्टतरं लभ्यते। अत्र रुद्र इति नामापेक्षया सः सामान्येन शिव इति निगद्यते। महादेव-महेश्वर-शंकर-त्र्यम्बकाणां तथान्येषां नाम्नामत्र पूर्वापेक्षयाऽऽधिक्येन प्रयोगा दृश्यन्ते। अत्रत्यः शिवो रुद्रापेक्षया महाकल्याणकारित्वेनोपतिष्ठते। रामायणे भक्तिपक्षस्य मुख्याधारयोः शिवविष्ण-वोर्द्वे रूपे निरूपिते। तत्र शिवः समग्रजीवलोकस्य कल्याणकारित्वेनायाति; स वरदाता, आशुतोषः, दयानिधिश्चास्ति। अतः स महादेवपदमलङ्करोति। उपनि-षत्सु रूद्रो दार्शनिकदृष्ट्या परब्रह्मत्वेनाङ्गीक्रियते, भक्तिवादस्योत्त्थापनेन सह रामायणे शिवस्यापि तथा रूपं प्रतिफलति। रामायणे प्राचीनदेवमण्डलस्थाने प्रायशो यथा ब्रह्माविष्णुशिवा एवावशिष्यन्ते तथा नान्ये देवाः। तत्रापि ब्रह्मा प्रायशो विष्णुशिवापेक्षया किञ्चिन्न्यूनत्वमेवावहति।

तथा च—

यदिहोत्पद्यते भूतं कस्तत् प्रतिसहिष्यति।
अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन्॥
देवदेव महादेव लोकस्यास्य हितेरत।
सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि॥
न लोका धारयिष्यन्ति तव तेजः सुरोत्तम।
ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर[1]॥ इत्यादयः।

शिवस्यामरलोकेऽपि भवति उपासनम्, स च देवानामपि देवः। तथा हि विषपानप्रसङ्गे—

---

१. वा० रामा० १।३६। ८-९-१०। (गीताप्रेस गोरखपुरस्य द्वितीयं संस्करणम्)

अथ देवा महादेवं शंकरं शरणार्थिनः ।
जग्मुः पशुपतिं रुद्रं त्राहि त्राहीति तुष्टुवुः ।।
एवमुक्तस्ततो देवैर्देवदेवेश्वरः प्रभुः[1] ।।

विश्वामित्रेण शिवाराधनप्रसङ्गे च—

स गत्वा हिमवत्पार्श्वे किन्नरोरगसेविते ।
महादेव प्रसादार्थं तपस्तेपे महातपाः[2] ।। इति ।

भगवांच्छिवो लोकगुरुः, निग्रहानुग्रहपञ्चकृत्यकर्ता च । स हि सर्गं स्वलीलया आविर्भावयति स्वेच्छया चोपसंहरति । सः सर्वलोकाधारोऽप्यस्ति । स चाव्ययः, अक्षरः, अमरश्चास्ति ।

गङ्गावतरणकथाप्रसङ्गे महर्षिर्वाल्मिकिरुद्घोषयति यच्छिवस्तपसैव प्राप्यः, तस्य प्राप्तिर्नान्येन पथा भवितुमर्हति । अतो राज्ञा भगीरथेन उग्रं तपो विधायैव शिवं तोषयित्वा गङ्गां भूमावानीता । तथा च --

..... ..... ... वत्सरं समुपासत ।।
अथ सम्वत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ।।

प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम्[3] ।। इत्यादयः ।

शिवोपासनस्य लोकप्रचलितस्य स्वरूपस्य सर्वातिशायिज्ञानं रामायणादेव लभ्यतेऽस्माभिः । रामायणे कल्याणकर्तुः शिवस्योपस्थितिर्दृश्यते । सो हि रुद्रपत्न्याः सहैव प्रायश उपतिष्ठते । तस्या अपि स्वातन्त्र्येणास्तित्वं सम्पन्नम् । अस्या नाम उमा, इति केनोपनिषदि उमा हैमवती सत्वादियम् हिमालस्य पुत्री सिद्ध्यति । हिमवतः प्रादुर्भावेनास्याः पार्वती नाम अप्याजगाम, यच्चाग्रे समागत्य सर्वाधिकां प्रचारभूमौ समागच्छत् । तथा च—

ततो वृषभमास्थाय पार्वत्या सहितः शिवः ।
वायुमार्गेण गच्छन् वै शुश्राव रुदितस्वनम्[4] ।। इति ।

रुद्रस्य स्त्री सत्वात्पार्वत्या रुद्राणी इत्यपि नाम अनेकवारं रामायणे पृथक्-पृथक् स्थलेषु दृश्यते । तथा च—

कान्वेषेति महाराज न खल्वन्येन हेतुना ।
रूपं चानुपमं कृत्वा रुद्राणी तत्र तिष्ठति[5] ।। इति ।

---

१. वा० रा०—१।४५।२१-२२ । २. वा० रा०—१।५५।१२ ।
३. वा० रा०—१।४३।१—२—३ । ४. वा० रा० उ० का०—४।२७ ।
५. वा० रा० उ० का०—१३।२३ ।

परं भवानी इति नाम परिहृत्य रुद्रस्य स्त्रीलिङ्गनाम्नो व्यवहार उत्तरोत्तरं स्वल्पतर एव जातः, सामान्यतश्चास्याः शक्तिदेवतायारुत्तरोत्तरं स्वातन्त्र्येणापि व्यवहारः प्रादुर्बभूव। संहारशक्त्या सदा संयुक्ताऽपि काली शनैः शनैः कलापदवीका सती अपि सर्वोपकारकरणाय सदार्द्रचित्ता समभूत्। सौम्यमूर्तिःसत्वात्तस्या देवीति नाम समजनि, यस्या महत्त्वं चराचरं जगत् वेत्ति। तथा हि—

दृष्ट्वा च भगवान् देवीं मैथुनायोपचक्रमे[1]।

यस्याः कामनायाः सिद्धिः शिवोपासनया सिद्धयति तस्या एव सिद्धि देव्या आराधनेनापि। अतो वेदोत्तरकालादारभ्य रामायणकालं यावत् इदमेव महदन्तरं यद् शिवायाः शिवेन साहचर्यं, तस्याः स्वातन्त्र्यं, लोकोत्तरं गुणिता च तस्याः क्रमशो वृद्धिपदमारुढाः संल्लक्ष्यन्ते।

वैदिको रुद्र एव शिवरूपेण, अम्बिका एव च पार्वतीरूपेण क्रमशः परिवर्तितौ इति तु निर्विवादम्। यद्यपि रामायणे शिवस्य शिवायाश्चानेके कथाप्रसङ्गाः कालान्तरे सम्बद्धा ये वैदिकरुद्रदेवेन सह सम्बद्धा नासन्, परं बहवः प्रसङ्गाः सन्त्येतादृशा अपि येभ्यो रुद्रशिवयोरैक्यं प्रतिभाति। एतेषु प्रसङ्गेष्वेव कैलासे शिवावासो रामायणेऽपि निर्दिष्टः। तेन प्रतीयते यद्रुद्र एव शिवपदवीमवाप। उक्तञ्च रामायणे—

स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरे गिरेः।
हिमवत्प्रभवे श्रृङ्गे सह देव्या महेश्वरः[2]॥ इति।

रामायणे शिवस्य विषपानविषयिणी कथा, गंगावतरणकथा, शिवपार्वतीविवाहकथा, स्कन्दोत्पत्तिकथा, कामदेवनाशकथा, दक्षकथा, शिवस्त्रीरूपनिर्माणकथाप्रभृतयो विषया वैदिकसाहित्येन न्यूनाधिक्येन साम्यमधिगच्छन्ति।

शिवस्य सर्वात्मकत्वादेतन्महद् वैशिष्टचमन्येभ्यो देवेभ्यो दृश्यते यच्छिवो देवैस्सार्द्धमेव दानवैरप्याराध्यो भवति। मनुष्यैः सह निशाचरा, मनुष्या अपि महादेवं समभ्यर्च्चयन्ति, इयमेव शिवस्य शिवता। कैलासपर्वतस्य तोलने शिवप्रभावेणाभिमानभग्नेन रावणेन लोकगुरोः शिवस्य भक्ति राक्षसैरपि आद्रिता इति सुस्पष्टम्। शिवस्य गणा भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-वेतालप्रभृतयोऽपि सन्ति। तस्य कण्ठे सर्पमाला, शिरसि गंगाधारा, ललाटे बालचन्द्रः, गले गरलेन नीलत्वम्, विचित्रभूषणवसनम्, असनासनम्, आयुधम्, वाहनम्, पुत्रादयश्च निखिलाः परस्परमसामञ्जस्यं भजमानाः पदार्था अपि विलसन्ति। सो महायोगी सन्नपि महाभोगी, नितरां मृदुरप्यत्यन्तमुग्रः, शान्तैकान्तचित्तोऽपि समग्रशास्त्राणामाविर्भावयिता, धनहीनोऽप्यद्वितीयो दाता, लोकगुरुः, अशिववेशोऽपि महानस्ति। अतः शिवो महादेव इति रामायणे चित्रितः। अस्य शिवस्य

१. वा० रा०—१।३६।६। २. वा० रा०—१।३६ २६।

नहि केवलं भारतवर्षे एव परमन्यदेशेष्वप्याराधनं विविधरूपेण भवति। भारतीयाः सर्वे प्रदेशाः शिवरूपोपासनया नितरां संसक्ता इति भूयो भूयो रामायणानुशीलनेन ज्ञायते।

## महाभारते शैवधर्मः

शिवस्वरूपस्य तस्योपासनस्य च विषये रामायणादधिकं महात्म्यं महाभारते प्राप्यते शिवस्य। सः परंब्रह्म, असीमः, अचिन्त्यः, विश्वस्रष्टा, आत्मनि विश्वं समाकलितोऽस्ति। परमतत्त्वेन स एवावसीयते, नहि तद्रहितं किञ्चिद्, स महाभूतानामधिष्ठाता, आधारः, नित्यः, कारणश्चास्ति।

अयमेव भावो द्रोणपर्वणि द्रष्टव्यः—

नमो भवाय शर्वाय रुद्राय वरदाय च।
पशूनां पतये नित्यमुग्राय च कपर्दिने॥

कुमारगुरवे नित्यं नीलग्रीवाय वेधसे।
विलोहिताय धूम्राय व्यालज्ञोपवीतिने॥

महादेवाय भीमाय त्र्यम्बकाय शिवाय च।
ईशानाय मखघ्नाय नमोऽस्त्वन्धकघातिने॥

अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च।
वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे॥

तपसे तप्यमानाय ब्रह्मणायामिताय च।
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते॥

नमः सहस्रशिरसे सहस्रभुजमन्वये।
सहस्रनेत्रपादाय नमोऽसंख्येयकर्मणे॥

नमो हिरण्यवर्णाय हिरण्यकवचाय च।
नामोऽस्तु देवदेवाय महाभूतधराय च॥

भवतानुकम्पिने नित्यं सिद्धचतां नो वरः प्रभो[1]॥ इत्यादयः।

एवं हि विष्णुरूपःकृष्णः स्वाराध्यत्वेन भगवन्तं शिवं स्तौति[2]। एतेन शिवस्य व्यापकत्वं सर्वाराध्यत्वञ्च सिद्धचति। भगवाँच्छिवः स्वस्वभावेनाशुतोषः सर्वविघ्नच्छिदः, मूर्तिरूपेण लिङ्गरूपेणचार्चनीयः, निराकाररूपेण साकाररूपेण चाराधनीय इति तत्र तत्र महाभारतानुशीलनेन सिद्धचति। अतः समग्रे पूर्वोत्तरपश्चिमदक्षिणभारते शिवभक्तिर्विभिन्नरूपेण बहुप्राक्तनकालादेव प्रच-

१. महा० द्रो० प०—७४।५२-५३-५४-५६-५७-६०-६१-६२ श्लोकाः।

२. महा० द्रो० प०—१६९।२९-३०-३१-३२ श्लोकाः।

४

लिताऽऽसीदिति नास्त्यत्र शङ्काकलङ्कपङ्कलेशावसरः। स च शिवो भक्त्या वशीकर्तव्य इति वनपर्वपर्यालोचनेनावगम्यते। तथा च—

तपसाराधितः शम्भुर्भगवान् लोकभावनः[1] ।। इति।

महाभारते भगवतस्तपसाराध्यस्य शिवस्य प्रसन्नतायै पाशुपतव्रतस्याचरणं तदानीन्तनभारतवर्षे जनाः कुर्वन्ति स्म। व्रतकर्तुः कार्यदृष्टचा तत्स्थितेरनुसारेणास्य व्रतस्य द्वादशदिनानि द्वादशाब्दानि वाऽनुष्ठानं विधीयते स्म जनैः। अस्य व्रतस्य संक्षेपेणान्वाख्यानं कर्णपर्वणि जातम्। तत्र हि--

यो वः पशुपतेश्चर्यां चरिष्यति स मोक्ष्यते।
पशुत्वाद् इति सत्यं वः प्रतिजाने समागमे।।
ये चान्येऽपि चरिष्यन्ति व्रतं मोक्ष्यन्ते तेऽप्युत।
नैष्ठिकं द्वादशाब्दं योऽब्दमर्धम् ऋतुत्रयम्।।
मासं द्वादशरात्रं वा सः पशुत्वाद् विमुच्यते।
तस्माद् परमिदं गुह्यं व्रतं दिव्यं चरिष्यथ[2] ।।

कैलासेऽतिआनन्देनोमया सहितस्य शिवस्याराधनं प्रायः समग्रे भारते तदानीन्तनसमयादारभ्य अद्यावधिजयते। स्वभावेन कर्मणा च शिवस्यानुवर्तनं विदधती अपि पराम्बा पार्वती दया-करुणा-वात्सल्यप्रभृतिमातृमुख्येषु गुणेषु शिवादप्यधिकां प्रतिष्ठां प्राप्नोति। महाभारते मानवसुलभगुणानां समाहारः सपत्नीकस्य शिवस्य दृश्यते। इयञ्च कल्पना सर्वथा सार्थक्यं भजन्ती मानवसमूहस्य कल्याणकारिणी सम्पद्यते। अतोऽस्याऽनुकरणं द्रोणानुशासनप्रभृतिपर्वसु दृश्यते।

उत्तरोत्तरं यद्यपि शिवशक्त्योः स्वरूपं महाभारतकालं यावत् सौम्यत्वमगात्, परं तस्योग्ररूपमपि देवब्राह्मणानां द्विषदां कृते प्रादुर्भवति। ईश्वरेच्छाऽतिक्रमणेन, पापानां च क्रोधेन कदाचिज्जागृतो शिवस्य संहारकरः क्रोधो न पुनर्निवर्तते। सर्वो हि लोकःशिवस्योग्ररूपाद् बिभेति। तथा च--

ईशानायाप्रमेयाय निहंत्रे चर्मवाससे।
तपो रताय पिंगाय व्रतिने कृत्तिवाससे।।

कुमारपित्रे त्र्यक्षाय प्रवरायुधयोधिने।
प्रपन्नार्तिविनाशाय ब्रह्मद्विट् संघघातिने[3] ।। इत्यादयः।

शिवस्य सौम्यासौम्य इति रूपद्वयं महाभारते बहुशः प्रदर्शितमस्ति। स्पस्टतश्च महाभारतेऽनुशासनपर्वणि एतन्निर्दिष्टम्। तद्यथा--

---

१. महा० वन०—८५।२५ श्लोकार्धः।  २. महा० कर्ण०—२५।२४-२५-२६ श्लोकाः।
३. महा० कर्ण०—२४।७०-७१।

द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः।
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः[१] ॥ इत्यादयः॥

एवञ्चान्येषामप्यत्रस्थानां श्लोकानां भावस्तथैवावगन्तव्यः।

महाभारतस्य कर्णद्रोणानुशासनपर्वसु त्रिपुरासुरस्य कथा द्रष्टव्या। तत्र हि ब्रह्मणो वरदानं लब्ध्वा असुरराट् सुवर्णरजताय सस्त्रयाणां नगराणां क्रमेण दिवोऽऽकाशपृथिव्याश्च संरचनां चकार। एताँल्लोकानेव ध्वंसयितुं स एव समर्थः योह्येकेनैव बाणेन त्रीन्नपि भिन्द्यात्। एषु नगरेष्वेकः सरो प्रवहति स्म येन जलेन युद्धे हता योद्धारो जीवन्ति स्म। एवम् अपराजेया असुराः पृथिव्यां दिवि च महोत्पातमुत्पादयामासुः, भूयोभूयो देवान् पराजितवन्तश्च। इन्द्रोऽपि अत्राक्रमणेऽसमर्थः। एवं ह्यस्मिन् संकटे काले इन्द्रादयो सर्वे देवा ब्रह्मणः सकाशं जग्मुः, ब्रह्मा च शिवेन साहाय्यं प्राप्तुं तान् प्रेरयामास। देवास्तपसा परमेश्वरं प्रतुष्टुवुः। ब्रह्मा च तेनासुराणां विनाशाय प्रार्थयामास, शिवेन चार्द्धशरीरवलसाहाय्येनैतत्कार्यं सम्पादनाय प्रतिवचनं प्रदत्तम्। एतत्कार्यस्य कर्तृत्वेनात्मनः पशुपतित्वेन गौरवमयाचत। विश्वकर्मा शिवायैकं रथं निर्ममे, यस्य शरीरं पृथ्वी, सूर्यचन्द्रौ रथचक्रे, चत्वारो वेदा अश्वा आसन्। यदा रथमारूढः शिवस्तदा तं साक्षात्कालं प्राहुर्जनाः। अनेनैव कारणेन लक्षणरूपेण 'कालरात्रिः' शिवधनुषो 'ज्या' इत्युच्यते। स्वयं प्रजापतिर्ब्रह्मा अस्य रथस्य सारथिः, विष्णुश्च बाणाः प्रवभूवतुः। तदनन्तरं ताः पुरः प्रति प्रयाणं चक्रे, अमोघैर्बाणैश्च ताः पुरो विभिद्य तासां ध्वंसं कृतवान्। एतस्मात् महामहिमकार्यात् त्रिपुरघ्न-त्रिपुरारिप्रभृतीनि नामानि अजायन्त शिवस्य। एतेन सर्वेभ्यो देवेभ्योऽप्यधिकं वैशिष्टयं महाभारते शिवस्य दत्तमित्यत्र मानागपि सन्देहावकाशो नास्ति।

एवं हि रामायणे महाभारते शिवस्य भृशं स्वरूपनिरूपणात् समग्रे भारते विशेषतश्चोत्तरभारते शैवधर्मस्य प्रचुरः प्रभावः परिकल्प्यते। दक्षिणभारते 'गुड्डीमल्लम्' स्थाने लिङ्गमूर्तिलाभात्, यस्य प्राप्तिकालः खीष्टाब्दीतः पूर्वं द्विशतवर्षाणि प्राङ्न्निधार्यन्ते[२]। एतदतिरिक्तं 'भीता' नाम्नि स्थाने ईशातः प्रथमशताब्द्याः पूर्वमेका अन्या लिङ्गमूर्तिः प्राप्ता। अस्यां पञ्चमुखस्य मनुष्याकारस्य शिवस्याकारः खचितः, पञ्चमं मुखञ्च शिरोभागे खचितम्। मध्यट्रावनकोरे 'चेमीकुलई' स्थाने शिवलिङ्गमूर्तिरुत्खननेन लब्धा। इत्थं विवेचनेन सुष्पष्टमिदं यत् प्रथमेशाखीष्टाब्दीवर्षपूर्वमेव आसेतुहिमालयं समग्रे भारतवर्षे आगमोपजीव्यो रुद्रः शनैः शनैः शिवपदवीमधिरूढः सन् सर्वत्रोपासनविषयो जातः। शैवधर्मः शैवसंस्कृतिश्चानुदिनं सर्वत्र प्राचलत् प्रासरच्च।

---

१. म० भा०—अनु०—१६१।३-६-७-८-९-१०-११-१२-१३-१४-१५।

२. गणपतिरावः—हिन्दू आइकानोग्राफी, भाग २ पृ० ६३—६६।

## पुराणेषु शैवागमः

निगमागमप्रामाण्याभ्युपगन्तृत्वात्पुराणानामपि प्रामाण्यम् । भारतीय-जीवनस्य समग्रा सुषमा पुराणेष्वेवाप्यते । तत्र शिवमुद्दिश्य 'शिवपुराणम्' देवीमुद्धिश्य 'देवीभागवतम्', विष्णुमुद्दिश्य 'विष्णुपुराणादिकञ्च' संगच्छन्ते । एवं हि तत्तद् पुराणेषु तेषां तेषां देवानां स्वरूपनिरूपणञ्च वर्तत एव, तथाचान्येषां देवानामपेक्षया तस्य वैशिष्ट्यमपि तत्र तत्र साधितम् । भगवतो लोकगुरोः परम-कारुणिकस्य शिवस्य विषपानं श्रूयते पुराणेषु । अस्याख्यानस्य विवेचनं प्रायो बहुषु पुराणेषु दृश्यते । तथाचाग्निपुराणे—

क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलं ह्यभूत् ।
हरेण धारितं कण्ठे नीलकण्ठस्ततोऽभवत्[1] ॥ इति ।

एवं हि कीदृशं लिङ्गमभीष्टमित्युद्दिश्य तत्र पुराणे—

वक्ष्याम्यन्यप्रकारेण लिङ्गमानादिकं शृणु ।
वक्ष्ये लक्षणजं लिङ्गं घृतजं बुद्धिवर्द्धनम् ॥
भूतये वस्त्रलिङ्गं तु लिङ्गं तात्कालिकं विदुः ।
पक्वापक्वं मृण्मयं स्यादपक्वात् पक्वजं वरम् ॥
ततो दारुमयं पुण्यं दारुजाच्छैलजं वरम् ।
शैलाद् वरं तु मुक्ताजं ततो लौहं सुवर्णजम् ॥
पूज्यो हरस्तु सर्वत्र लिङ्गे पूर्णार्चनं भवेत्[2] ॥ इति ।

एवं ह्यत्र पुराणे शिवार्चनस्य विविधविधयो निर्दिष्टा वर्तन्ते । एवं हि गणेशपुराणे, गरुडपुराणे, नीलमतपुराणे, ब्रह्मपुराणे, ब्रह्मवैवर्तपुराणे, ब्रह्माण्ड-पुराणे, मत्स्यपुराणे, मार्कण्डेयपुराणे, लिङ्गपुराणे, वाराहपुराणे, वायुपुराणे, विष्णुपुराणे, सौरपुराणप्रभृतिपुराणेषु शिवस्वरूपस्य तत्प्रभावस्य च विपुलं निरूपणं दृश्यते । तत्र च लिङ्गपुराणे शैवानां वैशिष्ट्यं सर्वातिश्रेष्ठतरमिति प्रतिपाद्यमानमिदमुच्यते—

अन्यभक्तसहस्रेभ्यो विष्णुभक्तो विशिष्यते ।
विष्णुभक्तसहस्रेभ्यो रुद्रभक्तो विशिष्यते ।
रुद्रभक्तात् परतरो नास्ति लोके न संशयः[3] ॥ इति ।

शिवोपासनायाः किं फलमिति तत्रैव पुराणे—

सर्वावस्थां गतो वापि मुक्तोऽयं सर्वपातकैः ।
शिवध्यानान्न संदेहो यथा रुद्रस्तथा स्वयम् ॥

---

१. अ० पु०—३ । ८-९ श्लोकार्धः । २. तत्रैव—५४।१-२-३-७ ।
३. लि० पु०—२ भागे, ४।२० ।

हत्वा भीत्वा च भूतानि भुक्त्वा चान्यतोऽपि वा ।
शिवमेकं सकृद् स्मृत्वा सर्वपापैः प्रमुच्यते[1] ।। इत्यादयः ।

इत्थं विचारणायां सम्यक् प्रतिभाति यत् पुराणेषु शैवागमस्य भूयस्त्वेन विमर्शः कृतो विद्यते । विविधाख्यानैः, कथाप्रकल्पैः, प्रतीकैश्च शिवतत्त्वस्य यन्निरूपणं जातं पुराणेषु तदुपेक्ष्य रुद्रस्वरूपविमर्शप्रक्रिया रामणीयकप्रतियोगिनी सेत्स्यतीति । पुराणेषु यादृशं एतत्तत्वमभिहितं तन्त्रागमग्रन्थेषु तदेव महता समारोहेण निरूपितमस्ति । पुराणानामेवेदं वैशिष्ट्यं यद् नार्यः शिवानुरूपमजरामरं मृत्युजयिनं पतिं कामयन्ते, नराश्च समस्तशुभगुणसम्पन्नां निग्रहानुग्रहसमर्थां समस्तसाधकसामग्रीसम्पन्नां पार्वतीसन्निभां पत्नीं कामयन्ते, चिरजीवी पतिः स्यादेतदर्थं शिवाराधनं कर्तव्यमिति कर्तव्यता सिद्ध्यति स्त्रीणामिति शम् ।

## काव्येषु शैवधर्मपरम्परा

काव्यपरम्परायाः ख्रीष्टाब्दद्याः प्रथमे शतके आविर्भावं मन्यन्ते आधुनिकारैतिह्यविदः । अस्मिन् काले बौद्धकवेरश्वघोषस्य नाम प्राथम्येन दृष्टिपथमवतरति । 'बुद्धचरितम्' नाम काव्यं भगवन्तं बुद्धमधिकृत्य प्रक्रान्तम् । राज्ञः कनिष्कस्यायं राज्यकालः । अत्र काव्ये भगवतः शिवस्य बहुवारं नाम समागतम् । यथा हि—

भवनमथ विगाह्य शाक्यराजो । भव इव षण्मुखजन्मना प्रतीतः[2] ।
विसिस्मिये तत्र जनस्तदानीं स्थाणुव्रतस्येव वृषध्वजस्य[3] ।। इत्यादयः ।

एवं हि महाकविरश्वघोषेण कतिपयवारं स्वग्रन्थे शिवनामोल्लेखनमकारि, येनेदं ज्ञायते यद् तदानीं शैवधर्मपरम्परा शिवस्वरूपश्च सामान्यतस्तादृशमेवासीद् यादृशं रामायणमहाभारतकालेऽऽसीदिति ।

भारतीयजीवने सः कालोऽतीवरमणीयो यस्मिन् सरस्वत्या वाग्विलासस्य कविकुलगुरोः कालिदासस्याविर्भावः समजनि । नाम्ना कर्मणा च कालिदासःशैव एवासीत् । तस्य रचना अद्यापि शैवागमस्य गौरवं वर्द्धयन्ति । तस्य काव्यानि शिवस्तुतिमङ्गलैर्नाटकानि च शिवस्तुतिभिरेव प्रारभन्ते । कालिदासरचनासु शिवस्य तदेव रूपं दृश्यते यस्य निरूपणमधुना तन्त्रे शैवागमे च दृश्यते । रघुवंशमहाकाव्यं श्रीरामचन्द्रमुद्दिश्य प्रक्रान्तम् । रामस्य विष्णोरवतारः । वैष्णवे चात्र क्रमे शिवशक्तिस्तुत्यैव ग्रन्थारम्भः । तथा च—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[4] ।। इति ।

---

१. लि०पु० २ भागे—५४।३४–३५ । २. बु० च०—१।८८ ।
३. तत्रैव—१०।३ । ४. र० म०—१।१ ।

लघुक्लेवरेऽस्मिन् श्लोके समासतो यन्निगदितं तस्य शैवागम एवोपजीव्यभूतः। अत्र श्लोके जगतः कारणत्वेन पार्वती शिवौ च जनकजननीत्वेन स्तुतौ। वागर्थयोस्तादात्म्यसम्बन्धः। शब्दातिरिक्तमर्थस्य कल्पनमेव न स्यात्। अर्थविरहितो न कोऽपि शब्दः स्थास्यति, 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति भर्तृहरिवचनात्। शब्दार्थयोर्यादृशं तादात्म्यं कालिदासस्येष्टं तादृशमेवागमशास्त्रे स्वीकृतमिति कालिदासस्य पूर्णशैवत्वं साधयति। विक्रमोर्वशीये नान्दीपाठे शिवः पुरुषरूपेण निरूपितः। स वेदान्तस्य ब्रह्म इव पृथिव्यां दिवि च व्याप्तः, मोक्षार्थिनस्तं ध्यानेन योगेन च प्राप्तुं समीहन्ते, परं सो भक्तियोगेन चानायासेन लभ्यः। तथा हि—

> वेदान्तेषु यमाहुरेकपुरुषं व्याप्यस्थितं रोदसि,
> यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः।
> अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिर्भिमृग्यते,
> स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु[1] वः॥

अत्र वेदान्तशब्दोल्लेखस्य विशेषार्थः। यतो ह्येकेश्वरवादिशैवागमस्तच्छिद्धान्तानुकूलः। अयमेव पन्थाः कालिदासस्यापीष्ट आसीदित्यत्र विसवादावकाशो नास्ति।

यथा अभिज्ञानशकुन्तले मङ्गलश्लोकः—

> या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री,
> ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
> यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः,
> प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः[2] ॥ इति ॥

अत्र श्लोके शिवस्याष्टमूर्तयो मूर्तरूपेण निरूपिताः। ईशः परमेश्वरः परमकारुणिकः सृष्ट्युपयोगिप्रकाशाख्यश्च शिवः पृथिव्यप्तेजोवाय्वाकाशसूर्यसोमहोतृरूपेणानुदिनं विश्वं रक्षति। स्वस्यापि रक्षकः सः स्यादिति तं स्तौति कविः। वस्तुतस्तु शिवः स्वयमेव प्रत्यक्षविषयो द्रव्यचक्षुषा न द्रष्टुं शक्यते। स च एभिर्मूर्ताष्टद्रव्यैरस्माकं सर्वेषां कृते प्रत्यक्षगोचरतां याति। एवं हि मालविकाग्निमित्रग्रन्थस्य मङ्गलश्लोकस्यापि भावः संगच्छते।

शैवधर्मस्य लोकविख्यातस्य रूपस्य दर्शनं कुमारसम्भवे मेघदूतग्रन्थे चावाप्यते। कुमारसम्भवे शिवपार्वतीविवाह-मदनदहन-स्कन्दोद्भवस्य चाख्यानं साङ्गोपाङ्गरूपेण दृश्यते। एभिराख्यानैरतीवकमनीयं महाकाव्यं कविना ग्रथितं कुमारसम्भवन्नाम। काव्येऽस्मिन् लोकाभिरामस्य शिवस्वरूपस्य वर्णनं जातम्, यत्र भगवाँच्छिवः शिवया सह कैलासे अमन्दानन्देनानुदिनं निवसति। अस्मिन् काव्ये

---

१. विक्रमो०—१।१।　　२. अभि०—१।१।

शृंगारस्य भक्तिभावनायाश्चानुपमं सामञ्जस्यं दृश्यते यत्र सहृदयानां हृदयं आनन्दभरेणान्दोलयति । महाकविः कालिदासः कुमारसम्भवमिति महाकाव्ये 'अस्त्युतिरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' इति उपक्रमेण हिमालयस्य स्वरूपं समुपस्थाप्य ततः स्ववर्ण्यविषयं प्रादुर्भावयति । कुमारसंभवे पार्वत्या यादृशी भक्तिः शिवं प्रति प्रदर्शिता तादृशी भक्तिर्नान्यत्र काव्येषु दृश्यते ।

मेघदूतकाव्येऽपि शिवः कैलासवासी चित्रितः, उत्तरमेघस्य प्रथमद्वितीय-श्लोकयोः स्थितिरलकायां कैलाससमीपगा विद्यते । अत्र काव्ये उज्जयिन्यां महा-कालकालेश्वरस्य विश्वविश्रुतमन्दिरं विद्यते, तस्य च महाकालस्य कथा संक्षेपेण निरूपिता विद्यते । तत्र संध्याया आरार्तिक्यं काले नृत्याङ्गनाः समागत्य स्वनृत्यं प्रदर्शयन्ति स्म । यक्षेण मेघमार्गनिर्देशनप्रकरणे पथो वक्रत्वे सत्यपि उज्जयिनीं गत्वा तत्र भगवतः शिवस्य दिवसावसानिकसंध्यायां मृदुगर्जनेन मृदङ्गतालेषु स्वतालसम्मेलनेन शिवार्चनं सम्पाद्य पुरस्कारस्वरूपेण तत्रत्य नृत्याङ्गनानां कृत-ज्ञतामयैः कटाक्षैरानन्दसन्दोहं प्राप्नुहि इति कथा वर्णिता । तथा च—

अप्यस्मिन् जलधर महाकालमासाद्यकाले,
स्थातव्यं तै नयनविषयं यावदत्येति भानुः ।
कुर्वन् संध्यावलिपटहतां शूलिनः श्लाघनीया—
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ।। इति ।

एवञ्च—

पादन्यासैः क्वणितरसनास्तत्र लीलावधूतैः,
रत्नच्छायारूचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वतो नखपदसुखान् प्राप्य वर्षाग्रबिन्दून्,
आमोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान्[१] ।।

एवं हि—

नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां,
शान्तोद्वेगस्तनितनयनं दृष्टभक्तिर्भवान्याः[२]।। इत्यादयः ।

इत्थं हि तस्मिन् काले उज्ज्यिन्यां प्राचीनशिवमन्दिरस्य सत्वात् तत्र हि नृत्यवादित्रैर्महाकालस्याराधनवर्णनेनैतत्कल्पनीयं भवति यत्तस्मिन् कालेऽतीवमहता समारोहेण तत्र शिवार्चनं भवति स्म । प्रथमख्रीष्टाब्दशताब्द्यां द्वितीयख्रीष्टाब्द-शताब्द्यां वा मृच्छककटिकनाम्नि रूपकरचना शूद्रककवेरस्ति । तत्र प्रथमांशस्य कश्चिद् भागं परित्यज्य अत्र ग्रन्थे शैवधर्मस्य भगवतः शिवस्य चानेके कथा—-प्रसङ्गोल्लेखाः लभ्यन्ते । तत्रैकं शिवस्य शिवेशानशङ्करशम्भुप्रभृतीनि नामानि यथा—

१. मे० दू० पू० मे०—३४–३५ । २. तत्रैव—३६वे श्लोकः ।

एशाशि वाशू शिलशि ग्गहिदा केशेशु बालेशु शिलोलुहेशु ।
आक्कोश विक्कोश लवाहिचण्डं शंभुं शिवं शंकलमीशल वा[1] ।। इति ।

षष्ठे सर्गे चात्र महादेवी स्वरूपे पार्वत्या अपि बारमेकमुल्लेखोऽस्ति । तद्द्वारा च शुम्भनिशुम्भवधकथां प्रति अपि संकेतो विहितः । तत्र हि—

अभअं तुह देउ हरो विण्हू बम्हा रवी अ चंदो च ।
हत्तूण सत्तुवक्खं सुभणिसुंभे जघा देवी[2] ।। इति ।।

भारतीयनाटचशास्त्रे शिवस्योपजीव्यता स्वीकृता । ग्रन्थादावेव ग्रन्थकृता ब्रह्मणः शिवस्य च सहैव स्तुतिः कृता । सा च—

प्रणम्य शिरसा देवौ पितामहमहेश्वरौ ।
नाटचशास्त्रं प्रवक्ष्यामि ब्रह्मणा यदुदाहृतम्[3] ।। इति ।।

नटराजः शिवोऽत्र ग्रन्थे प्रमुखः । स च नृत्यकलाया महानाचार्यः, कौशिकी वृत्तिश्च तमाश्रित्य तिष्ठति इत्युक्तं नाटचशास्त्रे—

दृष्टा मया भगवतो नीलकण्ठस्य नृत्यतः ।
कौशिकीश्लक्ष्णनैपथ्या शृङ्गाररससम्भवा[4] ।। इति च ।

ख्रीष्टाब्दस्य प्रथमतस्तृतीयशताब्द्यारनेका धातुमुद्राः प्राप्ताः, याभिः प्राचीनभारतवर्षस्य तात्कालिकं स्वरूपं ज्ञायते । तथा च शैवधर्मस्य शिवोपासनायाश्चानेके संकेताः प्राप्यन्ते तत्रास्माभिः । ईशायाः प्रथमशताब्द्याः प्राक्तनकुशाणराज्ञां सन्ति मुद्राः । 'वेम कैडफासिस' इत्यस्या द्वयोः सुवर्णमुद्रयोः पृष्ठभागे शिवश्चित्रं चित्रितम्[5] । उभयोर्मुद्रयोरुत्थितो शिवो दक्षिणकरे गृहीतत्रिशूलोऽङ्कितः । प्रथममुद्रायां शिववाहनं वृषस्तत्पार्श्वे अवस्थितो दर्शितः, द्वितीयायाञ्च भगवाँच्छिवः त्रिशूलातिरिक्तकमण्डलुव्याघ्रचर्मयुक्तकरश्चित्रितः, उभयोर्द्विबाहुः शिवः, रामायणमहाभारतमनुकरोति । एतदतिरिक्तन्तयोर्मुद्रयोर्यल्लेखस्तेनापि तस्य राज्ञः शैवमतानुयायित्वं प्रकल्पनीयं भवति, यतो ह्यत्र राज्ञ उपाधिः 'महीश्वरः' इति । अस्यैव राज्ञस्ताम्रमुद्रास्वपि सुवर्णमुद्रावत् शिवस्य चित्राङ्कनं जातम्, परन्त्वत्र वैशिष्टचमिदं यदत्र परितः शिरो भागे प्रकाशमण्डलमुत्कीर्णम् । आसां मुद्राणां समनन्तरं राज्ञः कनिष्कस्य मुद्राः प्राप्यन्ते । अस्यैकस्याः सुवर्णमुद्राया अनेकाषां ताम्रमुद्राणां च पृष्ठदेशे भगवतः शिवस्य चतुर्भुजरूपं निरूपितम् । तत्रापि शिरोभागे परितः प्रभामण्डलं, चतुर्बाहुषु त्रिशूलं, डमरुः, कमण्डलुः, पाशाश्च सन्ति[6] । अनेन चित्रेण सार्द्धं यो लेखः स यूनानदेशलिप्यां वर्तते, तस्य संस्कृतानुवादः 'ईशः' इति भवति ।

---

१. मृ० क० १।४१ । २. तत्रैव ६।२७ । ३. ना० शा० १।१ । ४. तत्रैव—१।४५ ।
५. लाहौरसंग्रहालये—केटलाग आफ़ साइन्स भाग १७ पृ० ३१-३३ ।
६. लाहौरसंग्रहालये केटलाग आफ़ साइन्स, भाग १८ पृ० १०६।१०८ ।

कनिष्कस्य केषुचिदन्यपणकेषु शिवसमीपे एवैकः स्थितो मृगोऽङ्कितः। मन्ये, संकेतोऽयं शिवस्य पशुपतिस्वरूपे अवतिष्ठते, यश्च सिन्धोरुत्खनस्य स्मरणमुत्पादयति, यत्र मुद्राणामधोभागे पुरुषदेवस्य पीठिकायामधोभागे च द्वौ हरिणौ प्रदर्शितौ। कनिष्कस्यैव कासुचिन्मुद्रासु द्विभुजस्य शिवस्याङ्कनम्, यत्र भगवत एकस्मिन् करे त्रिशूलम् अपरस्मिंश्च कमण्डलुः प्रदर्शितः, एतदपि 'लहुर' ( लाहौर ) संग्रहालय एव द्रष्टव्यम्।

कनिष्कस्योत्तराधिकारी हुविष्कनाम राजा बभूव, यस्य शासनकालःख्रीष्टाब्द्याः प्रथमशताब्द्युत्तरकालः द्वितीयायाश्चारम्भः काल आसीत्। अस्य कालस्य मुद्राष्वपि द्विभुजस्य चतुर्भुजशिवस्य च चित्राणि सन्ति अङ्कितानि। एतस्यापि प्रमाणं लाहौरसंग्रहालये सुरक्षितं वर्तते।

द्वितीय-तृतीयख्रीष्टाब्दशतकस्य शासनकालः कुशाणराजवंशानामस्ति। अस्मिन् काले हुविष्कस्योत्तराधिकारित्वेन 'वासुदेवस्य' मुद्रा गृह्यन्ते। अत्र द्विभुजस्यैव शिवस्याङ्कनं यथापूर्वं वरीवर्ति। तस्य प्रमाणं कालिकातानगरस्य संग्रहालये तत्रत्य कैटलागस्य ८४ पृष्ठे अवलोकनीयं विद्यते। वासुदेवानन्तरं कुशाणवंशे 'रनेस्को' राज्ञ राज्यकालः समागच्छति। तस्य मुद्राष्वपि पूर्ववदेव चित्रं चित्रितम्। ईशायास्तृतीयख्रीष्टाब्द्यां कुशाणवंशस्य 'सासानीवसु' राज्ञो मुद्राः प्राप्यन्ते। तत्र कस्याश्चिद् मुद्रायां स्त्रीदेवतायाः स्वरूपं चित्रितम्। तदनन्तरं वसोरधिकारिणस्तदुत्तरवर्तिसु वासुदेवमुद्रासु च द्विभुजशिवस्यैवाङ्कनं समजनि। अन्ते च 'होरमोज्द' द्वितीयस्य वराहस्य च मुद्रासु शिवस्य वृषभेण सहितं चित्राङ्कनं जातम्। एवमेभिः प्रमाणैर्ज्ञातुं शक्यते यदीशायास्तृतीयशताब्द्या यावत् सम्पूर्णे उत्तरे भारते शैवधर्मस्य विस्तार आसीदिति।

ईशाख्रीष्टाब्द्याश्चतुर्थशतकं भारते गुप्तवंशस्य साम्राज्यकालमस्ति। अस्मिन् हि काले भारतीय शैव-वैष्णव-बौद्ध-जैनप्रभृति समग्रधर्माणां पूर्णप्रतिष्ठा प्रचारश्चाजायत। धर्मप्राणा गुप्तवंशीयाः शासकाः स्वौदार्येण भारतीयानलिखान् धर्मान् परिरक्षितवन्तो वर्धितवन्तश्च ज्ञानेनाचारेण, संस्करेण, कलया चादिभिः भारतीयगौरवम्। अयमेव कालो भारते सुवर्णकालेनाभिधीयते। यद्यपि गुप्तवंशीया राजानो भूयस्त्वेनासन् वैष्णवाः, परं चन्द्रगुप्त-कुमारगुप्त-स्कन्दगुप्तप्रभृतीनि नमानि शिवपरकाणि। अतस्तेषां शैवत्वं सुतरां सिद्ध्यत्येव।

इत्थं पुराणानां कोश-काव्यानाञ्चाध्ययनेनेदं प्रतिभाति यत् समग्रे भारते बहोः कालादारभ्य शिवाराधनपरम्परा निरवच्छिन्ना प्रचलन्ती विविधरूपेणाद्यावधिरपि प्रचलति। अस्याः संस्कृतेः परः प्रभावो दृश्यतान्नाम, यदस्य देशस्य प्रतिनिधिभूता महापुरुषा राम-कृष्णादयो अपि शिवाराधका आसन्, तेषामसहायत्वे

सति विश्वसहायः शिव एव प्रभवति । अतः शैवधर्मस्य तत्परम्परायाश्च चमत्कृति-रेतेनैवोपर्युक्तकथनेन प्रकल्पनीयम् ।

शिवेन शक्त्या सम्बन्धतात्त्विकः सात्त्विकश्च । अत एव शिवतत्त्वेन यत् प्रकल्पनीयं भवति शक्तितत्त्वेनापि तदेव प्रकल्पनीयं भवतीति नात्र विसम्वादः। शक्त्या हीनस्य शिवस्य शवत्वात्तस्य पृथक् कल्पनं न कर्तुं शक्यते । अत्र भगवद्-पादशङ्कराचार्यास्तेषां सौन्दर्यलहरी नाम्नी रचना च प्रमाणरूपेण प्रस्तोतव्या भवति । शिवः शक्त्यायुक्त एव प्रस्पन्दने लोकसंरचनायां च प्रवृत्तो भवति। तथा हि—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं ,
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरञ्चादिभिरपि ,
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति[1] ।। इति ।

वस्तुतस्तु शक्त्यवस्थानं विना शिवकल्पना एव न समुदेति । निखिलस्य चराचरात्मकस्य जीवलोकस्य रचयित्री तत्र भगवती पार्वती एव शक्तिपदमलङ्कृत-वती सती प्रभवति इति सम्यग् जानन्त्येव तत्त्वैकरसिकाः साधनैकधनास्तान्त्रिकाः। अतः शक्तेः पक्षान्तररूपेणापरपक्षनिरूपणस्यावश्यकतैव नास्ति । शिवमुखेन शक्त्या अपि निरूपणं सम्यगवगन्तव्यम् । अतो नह्यत्र प्रकरणे शाक्ततत्वं पृथङ् निरूपितमिति सुविधयो विभावयन्तु ।

## पुराण-काव्योत्तरकाले शैवधर्मस्य स्वरूपम्

पुराणकालंकाव्यकालं च यावत् समग्रे भारते शैवशाक्तधर्मस्तत्सम्बन्धिन्यो-ऽराधनपद्धतयश्च मिथो वस्तुत अभिन्नाः सत्योऽपि तासां भिन्न भिन्नसम्प्रदायाः पुष्पिताः पल्लविताश्च संजाताः । भारतीया अन्तर्वाह्याचारा मानसाचाराश्च शिवशक्तिभावभरेण भाविताः संजाताः । विवाहसंस्कारादारभ्य दाहसंस्कारं यावत् शिवस्यावश्यकता समापतिता । नगरे नगरे, ग्रामे ग्रामे, देवालयेषु शिवा-लया देव्याःस्थानानि चावश्यकतया निर्मीयन्ते स्म । शैवधर्मे दर्शनस्य महत्त्व-मिदानीं बाहुल्येन समजनि । पुराणानां काव्यानाञ्चोत्तरकाले प्रायशश्च दशमखी-ष्टाब्दशताब्दिकाले शैवधर्मस्य तदाराधनप्रक्रियायाश्चोत्तरभारतीयशैवधर्मः, दक्षिणभारतीयशैवधर्मश्चेति द्वौ भेदौ समुत्पन्नौ । सदा स्वभाविकमिदं यद् यादृशो ह्याराधकस्य स्वभावः शीलं वा तादृशमेव तस्याराध्यस्य स्वरूपं भवति । अत उत्तरभारतात् दक्षिणभारते प्रसृतः शैवधर्म एकोऽपि सन् भिन्नप्रकृतिकदेशत्वात् जलवायोः संस्कराणाञ्च भिन्नत्वात् परस्परं भिन्नं भिन्नमिति समजनि उत्तर-भारते ।

---

१. सौ० ल०—१ ।

## उत्तरभारते शैवधर्मस्वरूपम्

गुप्तवंशीयशासका वैष्णवाः सन्तोऽपि शैवसम्प्रदायस्य समादरं कुर्वन्ति स्म। तदुत्तरवर्तिनोऽपि शासकास्तथैव समाचरितवन्तः। अस्य कालस्य शिलालेखेषु प्रायशो यत्रैकदेवस्य स्तवनं तत्रैवान्येषामपि देवानां स्तुतिर्भवति स्म। प्रमाणार्थं पञ्चचत्वारिंशदधिकपञ्चशतके ख्रीष्टाब्दीये (५४५ ई०) हरिवर्मनाम्नो राज्ञः 'सांगलोई' स्थानिके ताम्रपत्रे ताम्रपत्रदाता यद्यपि शैवः, शिवमेवसर्वश्रेष्ठमुत्कीर्त्य स्तौति, परं शिव-विष्णु-ब्रह्मभ्यस्त्रिभ्यो देवेभ्यः प्रणामं न विस्मरति[1]।

एषु शिलालेखेषु तात्कालिकी उपासनापद्धतिरपि स्फुटा भवति। सर्वेषां मतवादानां स्व स्व वादानुरोधेन तदनुकूलमन्दिराण्यासन्, यत्र नियमबद्धा अर्चका भवन्ति स्म। प्रायेण सर्वेषु शिलालिखेषु अस्या एव रीतेः समाश्रणं दृश्यते। एवं हि षष्ठसप्तमशताब्द्योः शिलालेखेभ्यो यदस्माभिर्ज्ञायिते तस्याः पुष्टिस्तात्कालिक्या साहित्यग्रामग्रचा सम्पद्यते। अस्यां सामग्रचां दण्डिनो बाणभट्टस्य च गद्यकाव्यानि सर्वातिशयमहत्त्वसाधकानि सन्ति। दण्डी ख्रीष्टाब्दस्य षष्ठशतकस्योत्तरार्द्धे बभूव। तस्य दशकुमारचरितात् तात्कालिक्या धार्मिकस्थितेः सम्यक् परिज्ञानं भवति। शैवधर्मस्याखिलदेशे पूर्णः प्रचारो व्यवहारश्चासीदित्यत्र ग्रन्थे विशेण प्रतिपादितमस्ति। अत्र ग्रन्थे देशे विभिन्नस्थानेष्ववस्थितानां शिवमन्दिराणां तत्रत्योपासनविधीनाञ्चोल्लेखो दृश्यते। पुराणेषु निर्दिष्टपन्थानमिव अत्र ग्रन्थेऽपि शिवार्चनं लिखितम्। तत्र कानिचिन्मन्दिराणि अतीव सन्ति प्रसिद्धानि। यत्र दूरदेशादायन्ति स्म श्रद्धालवो जनाः। एतदर्थं काश्याम् अविमुक्तेश्वमहादेवस्य स्थानम्; श्रावस्त्याञ्च त्र्यम्बकेश्वरस्य[2] स्थानं द्रष्टव्यमस्ति।

भगवत्या सरस्वत्या वाणीभूतस्य महाकवेर्बाणस्य 'हर्षचरितम्' 'कादम्बरी' चेति रचनाद्वे प्राप्येते। कविकुलगुरुः कालिदासवत् महाकविर्बाणभट्टोऽपि शैव आसीत्। सः कादम्बर्या मङ्गलश्लोकद्वये सर्वमाहात्म्यवतः स्वातन्त्र्यशक्तिमण्डितस्य शिवस्यैव क्रमश उत्पादक-पालक-संहारकशक्तिमत्वेन स्तवनं करोति। तद्यथा—

रजोजुषे जन्मनि सत्त्ववृतये स्थितौ प्रजानां प्रलये तमः स्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः[3]॥

कादम्बर्या महाकविर्बाणभट्ट उज्जयिन्यां विश्वविश्रुतस्य भगवतो महाकाल-

---

१. जयति ध्रुवबालेन्दु जटामुकुटमण्डलः। अनाद्यनिधनश्च शम्भुर्विश्वेशं जगतां पतिः··· विजयवैजन्त्यां स्वामिमहासेन मातृगणानुध्यानाभिषिक्तं ··· नमो हरिहरहिरण्यगर्भेभ्यो···। दृष्टव्यम्—हरिववर्मणः सांगलोई ताम्रपत्रे इ० आई० १, १४ तमे १६६ पृ०।

२. द० कु० च०—४।५।

३. का० कथा०—१।२।

कालेश्वरमन्दिरस्योल्लेखोऽकारि, मेघदूतकाव्येऽस्यैव मन्दिरस्य वर्णनं इतो बहोः कालपूर्वं कविकुलगुरुः कालिदासश्चक्रे। राज्ञ उदयनस्य राजमहिषी अपि तन्मन्दिरे पूजार्थं गच्छति स्म। पुनश्च बाणभट्टः शैवधर्मसम्बन्धिभिरखिलैः पौराणिकाख्यानै-र्निःशेषेण परिचित आसीदिति स्व रचनाद्वये तेन विविधशैवकथानामुल्लेखः कृत-मिति तत्र तत्र ग्रन्थावलोकनेन ज्ञायते[1]।

सप्तमख्रीष्टाब्दशताब्दया मध्ये राज्ञो हर्षवर्द्धनस्य काले चीनदेशीयः पर्यटकः 'ह्यून-साँग' इति नामा भारतभ्रमणाय आजगाम। तेन अत्रत्य भ्रमणानु-भवस्य लेखनिबन्धनक्रमे तावत् कालिकस्य धार्मिकावस्थानस्यापि विषये बहु चर्चि-तम्। भगवतः शिवस्य तन्मन्दिराणाञ्च यानि हि सर्वत्र भारते प्रसृतान्यासन् तद्-विषये स उल्लेखं कृतवान्[2]। साम्प्रतिकस्य कच्छप्रान्तस्य 'लांगल' स्थानस्य तेन नैकानि शिवमन्दिराणि वर्णितानि यानि च प्रस्तरमूर्तिभिस्तन्निखिलपरिवारैश्च सुविभूषितान्यासन्।

अष्टमनवमख्रीष्टाब्दयोरपि तथैव शैवधर्मस्य सम्यक् स्थितिः समासीत् यथा षष्टसप्तमशताब्द्योरासीत्। नवमशतकस्य 'प्रथमवैद्यनाथप्रशस्त्यां' देव्या दुर्गाया नाम्नाऽऽराधनम्, तत्स्वरूपे सौम्योग्रोभयस्वरूपयोश्च तत्र निरूपणं जातम्[3]। एवमन्यासु प्रशस्तिषु शिवस्याष्टमूर्तीनां लेखनं जातम्। ईशाख्रीष्टाब्द ८६७ तमस्य शतकस्य गुर्जरनरेशस्य 'दन्तिवर्मणः' एकस्मिन् शिलालेखे भगवतो बुद्धस्य स्तवनानन्तरमेकस्मिन्नेव श्लोके शिवविष्णवोः स्तुतिर्वर्णिता। एवमेव ख्रीष्टाब्देः ८६१ तमशतकस्य 'कर्कराज सुवर्णवर्णस्य' सूरतनगरस्य ताम्रपत्रे प्रथमं भगवतो जिनस्य स्तवनं ततश्च द्वितीये श्लोके कल्याणाय विष्णुशिवयोश्च प्रार्थना समजनि। एवमेव खजुराहो शिलालेखे संख्या पञ्चमे यस्य काल ईशाशताब्दया एकशतमेक-सहस्रं शतकमस्ति, परमेश्वरतत्त्वेन तत्र शिवस्य स्तवनं वरीवर्ति, तत्रैकस्यैव विष्णोर्बुद्धस्य जिनस्य चावताराः शिवरूपेणैव तत्र लेखे प्रदर्शिताः सन्ति[4]। अस्मिन्नेव शिलालेखे शिवस्य 'वैद्यनाथ' इत्युपाधिरपि दत्तोऽस्ति, यश्च शिवस्य प्राचीन भिषक् स्वरूपस्य स्मारकः प्रतिभाति।

द्वादशत्रयोदशख्रीष्टाब्दशतककालं यावत् शिवस्य प्रतिमाश्चतुर्दिक्षु समेषु स्थानेषु प्राप्यन्ते। विविधरूपेषु स्थिता स्ताः प्रतिमाः शिवस्य विविधोपासनपद्धतीः

---

१. ह० च०--१।२।

२. द्रष्टव्यम्—ह्यून-सांग की यात्रायें—बीलस्याङ्गलभाषानुवादः (ट्रूवनर ओरिएंटल सीरीज भाग २, पृ० ११४, २०२, भाग—२—पृ० ४४, ११९, १२७, २६२, २६३, २७६)।

३. लखमण्डलशिलालेखे—इ० आई० भागे २१, पृ० १४०।

४. तत्रैव—इ० आई० भागे १ पृ० १४८।

स्मारयन्ति । शिवस्य मिथोर्भिन्ना नाना प्रतिमा नानाकार्यानुरूपिण्योऽवर्तन्त यत्र कलाकाराः काव्यमयस्यार्धनारीश्वरस्य शिवस्य लक्षणसहितानां कल्पितानाञ्च चित्राणामङ्कनकमकार्षुः । भगवतः शिवस्य कल्याणकारिण्येका आकृतिर्दक्षिणा-मूर्तिनाम्नी, यत्रार्थस्य विद्यायाः कलायाश्चाधिष्ठातृदेवरूपेण भगवतः शिवस्य कल्पना समभवत्, यस्य ध्यानं जिज्ञासवः कुर्वन्ति । आसु प्रतिमासु भगवन्तं परितः पशूनां, सर्पाणाम्, यतीनां, देव्या वा अङ्कनं क्रियते, पृष्ठभूमौ च वन्यप्रदेशस्य चाङ्कनं निभाल्यते स्म । शिवपार्वत्योः परिणयप्रतीकेन भगवतः कल्याणशोभिन्य आकृतयो गृह्यन्ते । 'मूर्त्यष्टक' प्रतिमासु अष्टरूपेषु व्यक्तस्य शिवस्य चित्रणं कृतम् । 'महेश-मूर्तौ' कल्पितायां प्रतिमायां भगवतः स्रष्टृत्वेन, पालकत्वेन, संहारकत्वेन च चित्रणं संपन्नम् । एतद्विरहिताः काश्चन प्रतिमा भगवतो दार्शनिकरूपमपि प्रतिपादयन्ति । आसु प्रतिमासु 'सदाशिव' 'महासदाशिव' मूर्तयो भवन्ति स्म । इमाश्च प्रतिमा भगवतः शिवस्य सकल-निष्कलरूपयोः प्रतिपादिका भवन्ति स्म । अस्य भावस्यैका प्रतिमा 'एलीफेंटा' गुहायां वर्तते । काश्चन अन्या मूर्तयः शिवस्यैकेश्वरत्वं संसाधयन्ति । इमा अस्मसारमय्यो धातुमय्यश्च भवन्ति स्म । आसु प्रतिमासु सर्व-श्रेष्ठास्त्रिमूर्तिका सिद्धा मूर्तिर्यत्र ब्रह्माविष्णुश्च शिवस्योभयपक्षाभ्यां प्रादुर्भवन्तौ चित्रितौ ।

त्रिमूर्तिरर्द्धनारीश्वरमूर्तिभ्यां पार्थक्येन शिवस्यैकाऽन्या प्रतिमा भवति स्म यस्या नाम 'हर्यर्धमूर्तिः' आसीत् । अत्र प्रतिमायामेकार्धे शिवः, द्वितीयार्धे च विष्णु-श्चित्रितो विद्यते । 'बादामी' स्थानस्य कन्दरा-मन्दिरे एतादृशी मूर्तिः प्राप्ता । अन्यत्रापि इदृशी प्रतिमा पूर्वं प्राप्ता आसन् ।

शिवस्योग्ररूपं परिलक्ष्य अनेकाः प्रतिमा निर्मिमिरे । तत्र कासुचित्प्रतिमासु 'दंष्ट्रिनः' शिवस्य चित्रणं वाराहस्य इव निर्गतौ दंष्ट्रौ क्रूरताया द्योतकौ विभातः । शिवस्य क्रूररूपेषु भैरवरूपं सर्वविदितं सर्वत्रोपलब्धञ्चाद्याप्यस्ति । अत्र मूर्तौ भगवतोऽऽकृतिर्भयप्रदा, शरीरं दिगम्बरं, सर्पवेष्ठिता च भवति । मुखाकृति रौद्री कालस्य प्रतीकत्वेन विभाति । स्ववाहनेन कृष्णशुना सहितो देवो दण्डदानायोद्यतः कालस्यापरप्रतिमा इव परिलक्ष्यते । येन रूपेण त्रिपुरस्य पुरं नाशितं तद्रूपस्य त्रिपुरारेरपि क्वचिन्मूर्तिः प्राप्ता यया दानवमहासंहारकस्य तस्य रूपस्य आलेखनं संपन्नम् । शिवस्य कुत्रचिदघोरमूर्तीनां समवलोकनं, तत्र च कापालिकमुद्रायां सञ्चित्रितः । अत्र रूपेषु नीलकण्ठस्य, महाशूलधारिणः, कृष्णवर्णस्य, मुण्डमाला-मयस्य शिवस्यालेखनं संवृत्तम् । श्मशानभूमौ अघोररूपाः कापलिकाः शिवं पूज्यन्ते स्म । 'महाकाल' मूर्तिष्वपि कृष्णरूपेण शिवश्चित्रितः । एषु रूपेषु आसवमा-स्वादयतः, पार्वत्या आलिङ्गनं च विदधतः शिवस्यालेखनं सम्पन्नम्, येन तस्य विलासप्रियरूपस्यापि बोधः सम्पद्यते ।

शिवस्य उपर्युल्लिखितस्वरूपेषु भगवतः शिवस्य नटराजरूपो मूर्तिकारणामतीवप्रिय आसीत् । इयञ्च प्रतिमा लोकेऽपि लब्धप्रतिष्ठा आसीत् । ताण्डवमुद्रायां चित्रितो नटराजरूपः समग्रायां सृष्टौ तस्य नाट्यतया विद्यमानत्वं सूचयति । किम्बहुना, भावानां विचाराणाञ्च क्रियाकारित्वादिच्छाशक्तीनाञ्च जीवानामन्तःकरणेषु निरन्तरं विद्यमानान्नटराजमूर्तिर्मानवमात्रस्य हृदयावर्जिका समजनि। नटराजः शिवो जटामण्डितः, कृत्तिवासश्चतुर्भुजश्चास्ति । तस्य ललाटेऽर्धचन्द्रः, शिरसि गगाधारा च नृत्यति । क्वचित् क्वचिच्चास्मिन् रूपे 'गजः' दानवस्य पादतलेन मर्दनं चित्रितमस्ति, यस्य वधं विधाय सस्ताण्डवनृत्यमकार्षित्, यस्य च चर्म तेन स्ववस्त्रत्वेन धृतम् । इमाश्च नटराजमूर्तयोऽस्मसारममय्यो धातुमय्यश्च निर्मीयन्ते स्म प्राप्यन्ते स्म च समग्रे भारते चतुर्दिक्षु । इयता उत्तरभारते शैवधर्मस्वरूपं पर्यालोचितमग्रे दक्षिणभारते शैवधर्मस्य स्वरूपं पर्यालोचयिष्यते ।

## दक्षिणभारते शैवधर्मस्वरूपम्

प्राचीनकालत एव दक्षिणभारतस्य भोजनपानादिषु, वस्त्रभूषादिषु, संस्कारेषु चोत्तरभारताद् भिन्ना जीवनपद्धतिराचारपद्धतिश्चावलोक्यते । जलवायोर्भिन्नत्वादुत्तरभारताद्दक्षिणभारतं किञ्चिद् भिन्नतामावहति । दाक्षिणात्या द्राविडाः, उत्तरभारतीयाश्च आर्या उच्यन्ते । आर्यसभ्यतायाः संस्कृतेश्च प्रभावः शनैः शनैर्दक्षिणभारतेऽपि समापतितस्तथापि तत्रस्थाचाराः संस्काराश्च वैपुल्येन उत्तराद् क्वचित् क्वचिद् भिन्ना एव संजाता । यद्यपि वाह्यरूपेण समग्रैकतारूपेण चायं भेदोऽकिञ्चित्कर एवासीत्, परं आन्तरा भेदाश्चावश्यमेवाभूवन् ।

उत्तरभारते गुप्तवंशीयसाम्राज्यस्यावसानकाले दक्षिणभारते अनेके शक्तिमन्तः शासका अभवन् येन तत्रत्य जीवनपद्धतौ महद् वैषम्यं समपद्यत । धर्मक्षेत्रेऽपि तद्वैषम्यं स्वाभाविकम् । देशे शैवधर्मस्य प्रचुरः प्रचार आसीत् । भगवतः शिवस्याराधनाय अनेकानि मन्दिराणि निर्मितानि, येषु कानिचिदतीवभव्यानि आसन् । खीष्टाब्द्याः षष्ठशतकमारम्य त्रयोदशशतकं यावद्दक्षिणभारते वास्तुकलायाश्चरमोत्कर्षः समजनि । यत्र न केवलं 'मदुरै' 'एलोरा' स्थानि महान्ति मन्दिराण्येवापितु विविधानि सामान्यमन्दिराण्यपि तत्र सन्ति, यानि व्यक्तिविशेषेण संस्थाभिश्च वा निर्मितानि, तत्रत्यो व्ययभारं निर्वाहाय दानञ्च तत्र तत्र दत्तानि । एषु मन्दिरेषु भगवतः शिवस्य याः प्रतिमाः स्थापितास्ता लिङ्गाकृतयो मानवाकृतयश्च प्रायः सन्ति या न्यूनाधिक्येन उत्तरभारताकृतिसमाना एव भवन्ति स्म ।

दक्षिणभारतीयशैवमतावलम्बिनो जना धार्मिकभावनायामुत्तरेभ्यो भिन्ना अन्यधर्मेष्वनुदाराश्चासन् । ततस्तदानीं दाक्षिणात्या भक्त्या उत्साहेन चान्यमतमन्दिरेष्वसहिष्णवो अजायन्त । अतस्तत्र धार्मिकप्रकरणे विवदमाना जना दक्षिणापथदेशान् प्रतिद्वन्द्विताकेन्द्रमकार्षुः । खीष्टाब्द्याः प्रथमशतकेष्वेवात्रानेकेषाम्मतमतान्तराणां

प्रस्थापनं जातम्, परमन्ते शैवधर्मस्यैव स्थितिस्तत्र भूयस्त्वेन समजनीति विदन्त्येवेतिहासवेत्तारः ।

तत्र 'सम्बन्दर' 'अप्पर'[1] नामानौ प्रसिद्धौ शैवाचार्यौ बभूवतुः ख्रीष्टाब्द्याः सप्तमे शतके । एतौ जैन-बौद्धधर्माचार्यान् शास्त्रार्थे पराजितवन्तौ, चमत्कारञ्च प्रदर्श्य एतावन्यधर्मान् दक्षिणे कीर्तिमात्रशेषतां नीतवन्तौ । ततश्च 'मणिकवासगरं' नाम्ना अन्यः कोऽपि शैवाचार्यो बौद्धानाम्मूलोच्छेदनं विधाय शैव-शाक्तपरम्परां संस्थापनाय भृशं यत्नमकरोत्, तत्र देशे शैवधर्मस्य संरक्षणञ्चाकरोत् । एव्वनेकेषां नामानि 'पेरियपुराणमि' त्याख्ये ग्रन्थे प्राप्यते ।

## दक्षिणभारते शैववैष्णवानां स्थितिः

अधुना दक्षिणभारते शैववैष्णवमतानुयायिनां स्थितिः पर्यालोचयिष्यते । प्रारम्भकाले शैववैष्णवानां सम्बन्धः शोभन आसीदिति तदानीं सहिष्णुतायाः सत्त्वात् । पञ्चमख्रीष्टाब्दशतके तमिलदेशीयसाधकस्तत्र भवान् 'तिरुमूलर' नामा शैवागमानां संस्कृतभाषया तमिलभाषायामनुवादं कृतवान् । तदानीं शैवाः वैष्णवानां वैष्णवाश्च शैवानां तद्विचाराणाञ्चादरं कृतवन्तः, शिवे विष्णौ च तत्त्वतोऽभेदं संगिरन्ते स्म । तत्र वैष्णवाः 'आलवर' इत्युपाधिना सम्बोधिताः सन्तः शैवमतस्यालोचनं नाद्रियन्ते स्म, प्रत्युत शैवधर्मस्य माहात्म्यमेव स्वीकुर्वन्ति स्म । एकेन च 'पेयालवर' नामा वैष्णवेन तिरुपतिस्थाने भगवतः शिवस्य यथा स्तुतिः कृता, तथा च भगवतः शिवस्योन्मुक्ता जटा, उन्नतमुकुटः, देदीप्यपानः परशुः; प्रज्वलच्चक्रम्, शरीरमावेष्टयन्सर्पः, सुवर्णमेखला च[2] चकास्ति । एवं हि जलकल्लोलेन नददभिस्सरिद्भिः परिवृतो भगवान् नन्दीश्वरः शैव-वैष्णवोभे रूपे स्वस्मिन् समाकलितवान् । यद्यपि केचन आलवराः ( वैष्णवाः ) शैवसम्प्रदायस्यालोचका अपि समासन् परं तदानीन्तेषां संख्या अतीवाल्पीयसी सती क्वचिदपि शिवविरोध उग्ररूपेण तत्र न श्रूयते ।

साहित्यिकेष्वेतेषु प्रमाणेषु पुराणकालोत्तरं यावत् क्वचिदपि शिलालेखेषु शैववैष्णवमतेषु प्रतिद्वन्द्विता नावलोक्यते । षष्ठख्रीष्टाब्दशतकस्य वन-नृपति मल्लदेवनन्दिवर्मणः 'मुदायन्नुर' ताम्रपत्रे शिवविष्णोश्चैकत्र स्तवनं जातम्, तयोरुपासकानाञ्च परस्परं विरोधस्य कोऽप्यवकाश एव नास्ति तत्र । सप्तसप्तत्युत्तर सप्तख्रीष्टाब्दशताब्द्यां ( ७७७ ) 'पृथ्वीकोंग' नाम्नो राज्ञः 'नागमंगलवर' ताम्रपत्रेषु पूर्वं विष्णोस्तदनन्तरञ्चैकस्य शिवभक्तस्य 'विष्णुगोपस्य' प्रशस्ति-

१. ओरिजन एण्ड अरली हिस्ट्री आफ़ शैविज्म इन साउथ इण्डिया इति ग्रन्थाधारेण विषयोऽयमुपस्थापितः । ले०—श्री सी० वी० एन अय्यरः ।

२. सी० वी० एन० अय्यरः, ओरोजिन एण्ड अरली हिस्ट्री आफ़ शैविज्म इन साउथ इण्डिया, २१४ पृष्ठे ।

पद्यानि चर्चितानि। इमानि ताम्रपत्राणि जैनमन्दिरस्यैकस्य साहाय्यं दानाय लिखितानि। एकादशशतकस्य शोमेश्वरदेवप्रथमस्य 'बाल्गैन्वे' शिलालेखेऽपि आरम्भे भगवतो जिनस्य, ततश्च विष्णोःस्तुतिः कृता विद्यते। शिलालेखस्यास्य पङ्क्तेराशययस्तु—'महाराज्ञ इच्छया प्रभुर्नागवर्मा एकं मन्दिरं भगवतो जिनस्य, एकं विष्णोः, एकं शिवस्य, एकञ्च 'बानवसे' देशीय तपस्विनां सतां कृते निर्मापयामास[1] '। एतेन इदमनूभूयते यद् तदानीन्तने दक्षिणभारते सम्प्रदायकृतविरोधो धर्मशास्त्रीयव्यवहारे एवासीन्नतु लोकेषु। नृपतयः, यतयः, महापुरुषाः, नेतारश्च ईश्वरस्वरूपे मतभेदेषु आग्रहरहिता एव स्व स्वसम्मतसिद्धान्तेषु संलग्नाः शान्तभावा अजायन्त इति तत्र साहित्यिकैः प्रमाणैः शिलालेखादिभिश्चानुमीयते। मध्ये नास्तिकदार्शनिकेभ्य आस्तिकानामागमिकानाञ्च महान् संघर्षो जात इति पूर्वमेव मयात्र निबन्धे प्रतिपादितम्।

'पेरिय पुराणम्' इति ग्रन्थेन शैवमतस्याभिनवलक्षणानां दक्षिणभारते उदयो दरीदृश्यते यस्य प्रादुर्भावो न दृश्यते उत्तरभारते तदानीम्। औत्तरेभ्यो दाक्षिणात्या भवन्ति स्म भावुका इति पूर्वमेव समालोचितं मया। अतः स्वभावानुरोधेनैव भक्तेषु वर्णलिङ्गकृतभेदा निरस्ताः। अग्रे च अस्यैव प्रभावः पुष्टिं प्राप्य शैवेषु वर्णलिङ्गादिभेदान् निरस्य संस्थाप्य च समतादृष्टिं धर्मसाम्ये सर्वसाम्यस्य भावो व्यवहारभूमौ समापतितः। निकृष्टवर्णस्यापि जनस्योच्चभक्तिभावनायाः सत्वात् सर्वाधिकः समादरो दीयते स्म तदानीन्तनैर्जनैस्तस्य। 'पेरिय पुराणे' 'नयनार' भक्तानां विषये इदं प्रतिपादितं यदत्र सम्प्रदाये केचन ब्राह्मणाः, केचन वेल्लाल इति निम्नजातीयाः, केचन आदिवासिनश्चासन्। एकश्चादिवासिशैवो 'सुन्दरमूर्तिः' इति नामा निम्नवर्णीयः सन्नपि 'नयनारस्य सेरसमन पेरुमलेन' सार्द्धं भोजने कंचिदपि सङ्कोचं नाचरितः। एकेनान्येनोच्चवर्णस्थितेन नयनारभक्तेनैकया नर्तक्या सह विवाहः कृतः। व्याधवर्णस्य 'कन्नपा-नन्द' जातीयभक्तानां तावती एव समादरः प्रतिष्ठा च सम्प्राता आसीद् यावती उच्चकुलीनब्राह्मणानाम्। किं बहुना, पेरियपुराणाख्यानानुसारं ह्येकस्य ब्राह्मणस्य शैवभक्तस्य 'नाभिनन्द आफिगलः' इति नाम्नः सर्ववर्णस्पर्शदोषो यदा समापतितस्तदा भगवान् शिवस्तं स्वयमेव भृशं भर्त्सितवान्, स्वप्ने च दर्शनं विधाय 'तिरुवारुर' स्थाने च जन्म सत्त्वात् तत्रस्थानां सर्वेषां शैवत्वं एकत्वञ्चोपदिदेश।

हिन्दुजीवनपद्धतौ वर्णभेदपरम्पराया अतीवव्यापृतत्वात् सत्यपि शैवानां वर्णभेदविरोधे तस्या अकिञ्चित्करत्वाच्च तदानीमपि शैवानां परस्परं वर्णभेदविरोधव्यवस्था निष्फला सम्वृत्ता। केचन प्राचीनशैवाचार्या वर्णभेदविरोधिन्या-

---

१. सी० वी० एन० अय्यरः—ओरोजिन एण्ड अरली हिस्ट्री आफ् शैविज्म इन साउथ इण्डिया आई ए, ९ भागे, १७९ पृष्ठे।

रभिनवाया अस्या व्यवस्थाया अपि विरोधिन अवर्तन्त । अतोऽन्यसम्प्रदायानां, लोकपरम्पराणां, शैवसम्प्रदायस्यैव प्राक्तनाचार्याणाञ्च विरोधेन स्वसम्प्रदायकृतो वर्णविरोधः शैवानामपास्तः । अनेनैव हेतुना शैवाः क्वचिदन्यसमाजेषु तिरस्कार-दृष्ट्या दृश्यन्ते स्म । परमियं स्थितिर्दीर्घकालं यावत् न प्रचलिता, शनैःशनैः शैवेषु मध्ये समापतितेषु तेषु तेषु आचारविचारेषु परिवर्तनं जातम्, पुनश्चेतिहासे धर्मक्षेत्रे च शैवानां पुनस्तादृशी एव मान्यता समजनि यथा आसीत्पुरा काले ।

शैवसम्प्रदायेषु भक्तिभावनायाश्चरमोत्कर्षो जातः, शैवभक्तानां तत्सम्प्रदाये समाजे चातीवादरो दरीदृश्यते स्म । दक्षिणभारते कश्चन शैवसम्प्रदायो भगवतः शिवस्य दिगम्बरत्वात्तदानुकूल्यलाभाय 'दिगम्बरः' आसीत् । अस्यैव सम्प्रदाय-स्यानुगामिनो 'कापालिका' भवन्ति स्म, दिगम्बरत्वं चेन्द्रियनिग्रहस्य प्रतीकत्वेन मन्यन्ते स्म । एतत्सर्वमाख्यानं 'पेरियपुराणस्य' 'मुनिराय' नयनारकथया ज्ञायते । अस्मिन् सम्प्रदाये सदाशिवनामा ब्राह्मणः सिद्धिं समधिकृत्य अस्य पथो भृशं प्रचारं कृतवान्, कालेन चास्य सम्प्रदायस्य विस्तार उत्तरभारतेऽपि जातः ।

अस्मिन्नेवकाले शैवसम्प्रदाये अनेके भेदाः प्रादुर्बभूवुः । सम्प्रदायस्यास्य व्यापकत्वात् विभिन्नस्थानिकजनानां तत्सम्प्रदाये समावेशाच्च सम्प्रदायेषु मत-मतान्तराणि सम्भवन्त्येव । शैवोपसम्प्रदायस्य प्रायः प्रथमोल्लेखो महर्षिपतञ्जले-र्महाभाष्यादेवावगम्यते । तत्र हि महाभाष्ये 'शिवभागवत' स्योल्लेखः सम्पन्नः । ते हि स्वदेवस्य प्रतीकत्वेनैकां मालां समादाय गच्छन्ति स्म । अतोऽयं सम्प्रदायो-ऽतीवप्रचीन इति तत्र तत्र प्रमाणैरवगम्यते । महाभाष्यादतिरिक्ते क्वचनास्य सम्प्रदायस्यानुल्लेखान्मन्ये सम्प्रदायस्यास्य कालगते सति लोपः सञ्जातः ।

महाभारतस्य शान्तिपर्वणि पाशुपतशैवानामुल्लेखो दृश्यते[१] । तत्काले धर्म-पश्चाङ्गे पाशुपतधर्मस्य गौरवमयं स्थानमासीत् । अस्य सिद्धान्तस्य प्रकाशकः स्वयमेव भगवान् शिव[१] एवेत्यपि तत्र लिखितम् । शान्तिपर्वण एकस्मिन् स्थले 'शिवसहस्रनाम' स्तोत्रप्रसङ्गे पाशुपतसिद्धान्तस्य प्रकाशकः शिव एवेत्यभि-हितम् । अयञ्च धर्मो वर्णाश्रमधर्मानुकूलः प्रतिकूलश्चासीत्[२] । वैष्णवानां पाञ्च-रात्रसिद्धान्तोदयकाल एव मन्ये पाशुपतमतस्यापि प्रवृत्तिः प्रादुर्बभूव । यतो ह्युभयोः समालेखनं तत्र महाभारते सममेव जातम् । अस्य सम्प्रदायस्याद्याचार्यो लकुलिसन् ( लकुलीशः ) आसीत् । अनेनैव भगवतः शिवस्यावतारभूतेनात्र भूतले 'माहेश्वरमार्गः', 'पाशुपतयोगो' वा अशिक्षि । अयञ्च लकुलीशः शिवावतारः, भगवतः कृष्णस्य समकालिकश्चासीत् । 'सर्वदर्शनसंग्रहे' अस्याचार्यस्य स्मरणं

१. महा० शा० प० ३५९—६४ । मुम्बईसंस्करणम् ।

२. महा० शा० प० २८५ । कलकत्तासंस्करणम् ।

पाशुपतमताचार्येण कृतम्। खीष्टाब्दस्य ९७१ तमशतके नागराजमन्दिरस्य शिलालेखेन तथा अन्यैर्लेखैश्चास्य प्रमाण्यं पुष्णाति।

तदनन्तरं खीष्टाब्द्या द्वितीयशतके एकस्या मुद्राया लेखे कुशाणवंशीयो नृपतिः 'वेमकडफाईजिजि' नामा आत्मानं महेश्वरं कथितवान्, इदं पाशुपात-सम्प्रदायस्यैवापरन्नाम। अतस्तदानीमप्ययं सम्प्रदायः समुल्लसति स्म राज्य-संरक्षणञ्च लभते स्म। अतः पुराप्यस्य सम्प्रदायस्य स्थितिरासीदिति निर्वि-वादम्। वायुपुराणे लिङ्गपुराणे च पाशुपतशास्त्रस्य किदृश उल्लेख इति पूर्वमेव निरूपितम्। कापालिकानामपि पुराणकालं यावत् सुस्थितिः सम्पन्ना।

पुराणोत्तरकाले अनेकेषां शैवसम्प्रदायानामवस्थितेः प्रामाण्यं प्राप्यते। शिवलिङ्गं स्वशिरसि धारयितॄणां 'भारशिवानां' चर्चा पूर्वमस्माभिः कृता। सप्तमशतके खीष्टाब्दे चीनदेशीयपर्यटकेन ह्यूनसांगनामा समग्रस्य भारतवर्षस्य भ्रमणमकारि, स्व यात्रासंस्मरणे च तेनानेकस्थलेषु पाशुपतसम्प्रदास्योल्लेखः कृतः[१]। पौनः पुन्येन तत्र संस्मरणे तत्सम्प्रदायस्योल्लेखेन समग्रे भारते सम्प्रदाय-स्यास्य प्रभाव आसीदिति कल्पते। इमे च पाशुपता भस्मभूषिता मन्दिरेषु मठेषु च भूयस्त्वेन प्रतिष्ठापदवीमलभन्त इति कल्पनीयं भवति। ह्यूनसांगे-नैतेषान्नामानि 'भस्मधारिणः' इति कृतम्। ह्यूनसांगेन जटाधारिणां, दिगम्बराणाञ्च शैवानामुल्लेखोऽप्यकारि[२]। दिगवाससश्चेमे शैवा मन्ये, त एव, येषां दाक्षिणात्याभिलेखेषु चर्चा मया प्राक् कृता। काश्या यात्राप्रसङ्गे मुण्डीनां शैवानां चित्रणं तेन कृतम्। एते मुण्डिनः शैवसन्यासिनः काश्यामधुनापि राजन्ते। कापालिकानामपि स्थानद्वयमासीदिति ह्यूनसांगेनोल्लेखनं विहितम्ः। काश्यां केचन एतादृशा अपि शैवा आसन् ये स्वशिरसि अस्थिमालां मुकुटरूपेणाश्राय चलन्ति स्म[३]। एकत्र तेन एतादृशा अपि शैवास्तदानीमुपस्थापिता ये आभूषण-मिव गले मुण्डमालां धारयन्ति स्म[४]। ह्यूनसांगयात्रासंस्मरणे राज्ञः पुलकेशि-द्वितीयस्य भ्रातृपुत्रोः नागवर्द्धन एकस्मिन् दानपत्रे कापालिकमन्दिरस्योल्लेखः कृतवान्। अस्य मन्दिरस्य नाम कपालेश्वर इत्यासीत्, यत्र शिवमूर्तेः स्थापनं जातम्। अत्रैव केचन संन्यासिभक्ता अवस्थिता भवन्ति स्म येषां 'महाव्रती' इत्यपरसंज्ञया बोधो भवति स्म। मन्ये; कापालिकानामेव सौम्यनामान्तरमिदम्। अत्रत्यानां भक्तानां जीविकाव्यवस्था तत्रैव दानपत्रे कृता विद्यते। कपालेश्वर-स्यान्यस्यैकस्य मन्दिरस्य समालेखनं महासामन्तमहाराज्ञः सुन्दरसेनस्य 'निर्माण्ड-ताम्रपत्रे' अप्यस्ति, अस्य कालोऽपि खीष्टाब्दशताब्द्या सप्तमशतकमेवास्ति[५]।

---

१. ह्यूनसांग—भाग २।२७६, २७७, २८०, २८७ पृ०। २. तत्रैव—२।४५ पृ०।
३. तत्रैव—१।५५। ४. तत्रैव—१।७६।
५. आ० ई० ३।५७ पत्रसंख्यायां २८६ पृ०।

सप्तमशताब्द्या महाकविर्बाणभट्टस्य गद्यरचनया 'कादम्बर्यया' तात्कालिकशैवसम्प्रदायस्य प्रभावोऽभिव्यज्यते। काव्येऽस्मिन् पाशुपतशैवानामुल्लेखो जातः, ते हि चन्द्रापीडराज्ञः शुकनास इति नामामात्येन मिलितुं समागतवन्तः, ये हि रक्तवस्त्राणि धारितवन्तः। यद्यपि ह्यूनसांगेनैतेषामुल्लेखो न कृतस्तथाप्ययं सम्प्रदायः पाशुपतशैवानामेवासीदिति विसम्वादोऽत्र नास्ति। कादम्बरीग्रन्थकर्ता महाकविर्बाणभट्टः, उज्जयिन्याः साम्राज्ञी पद्मावती च सामान्येन शैवावास्ताम्, ययोराचाराः पौराणिकशैवस्येवासन्। अतः सप्तमशतकस्य कादम्बरीग्रन्थकाले केचन विशेषसम्प्रदाये दीक्षिता विचित्रवेशभूषाभिर्मण्डितास्तन्मार्गपद्धत्या आराधनतत्पराः शैवाः, अपरे च गृहस्थाश्रमे वर्तमानाः शिवं प्रधानदेवरूपेण मन्यमानाः सामान्यजनाः शैवा आसआसन्ति इत्युभयविधशैवानां स्थितिः प्रतिभाति।

अष्टमख्रीष्टाब्द्या महाकविर्भवभूतिः 'मालतीमाधवम्' इति ग्रन्थे कापालिकशैवानां चित्रणमुपस्थापयति[1]। कापालिकानां मन्दिराणि श्मशानभूमौ अवर्तन्त। अत्र नरबलिर्जायते स्म, येनैतत्सम्प्रदाय उच्चसाधनाकोटौ नाधिरोहति स्म। अतः सम्प्रदायो ह्येषः सामान्यजनेषु प्रतिष्ठापदं नालभत। परमेते कापालिका लोकोत्तरचमत्कारयुताः स्वसाधनया धन्या जायन्ते स्म यत्र सामान्यजनाः स्वकष्टवारणायागच्छन्ति स्म। भवभूतिकाले सम्प्रदायेऽस्मिन् स्त्रियोऽपि समागच्छन्ति स्म, तथा च तत्सम्प्रदाये स्वीकृतवेषभूषादिकमनुष्ठानपद्धतिं च धारयन्ति स्म। कापालिकेषु वर्णव्यवस्था तदा तिरोहिता अभवत्। इदं प्रायशो बहोः कालादेव भारतवर्षे दृश्यते यत् यद्यपि सनातनब्राह्मणधर्मरहितेषु अभिनवेषु सम्प्रदायेषु वर्णभेदभावनाव्यवस्थोन्मूलनाय तत्र तत्र भृशं प्रयासाः जातास्तथापि तत्र सनातनवैदिककर्मविरुद्धे आचारे च तत्सम्प्रदायस्यासाफल्यमेवावशिष्यते इति भूयो भूयो विचारणीयोऽयं विषयः।

समयेन सार्द्धमेवाभिनवानां शैवसम्प्रदायानामुद्भवो जायते स्म। नवमख्रीष्टाब्द्यामानन्दगिरिणा यदा 'शंकरविजय' नाम्नो ग्रन्थस्य संरचनां कृतवान् तदा बहवः शैवसम्प्रदायाः प्रादुरभूवन्। तत्र केचन सम्प्रदाया अतीव प्राचीना लब्धप्रतिष्ठाकाश्चेति प्रतीयन्ते। अत्र ग्रन्थस्याग्रे चतुर्थाध्याये पाशुपत-शैव-उग्र - कापालिक - भट्ट - जङ्गमप्रभृतीनां सम्प्रदायानामुल्लेखो जातः। एतेषां सम्प्रदायानां प्रतिनिधयो भगवता शङ्कराचार्येण शास्त्रार्थं चक्रिरे। तत्रैव ग्रन्थे विभिन्नशैवानां बाह्यचिह्नानामप्युल्लेखः समजनि। अत्र जङ्गमपदभाजः शैवाः प्राक्तना 'भारशैवाः' एवासन्, यतो हि तेऽपि स्वशिरसि शिवलिङ्गं धारन्ति स्म। पाशुपताः स्वशिरसि, नाभौ, भुजयोश्च शिवलिङ्गस्थचिह्नानि धारयन्ति

---

१. मालतीमा० ५१ तः ६, १३ तः ३४ श्लो०।

स्म । एवं ह्यन्येषां सम्प्रदायानामपि स्व स्व लिङ्गानि भवन्ति स्म । तेषाञ्चानेकसम्प्रदायानां के के सिद्धान्ता आसन्निति तत्र 'शंकरविजये' न लिखितम्, परमेते शैवा भगवता शङ्करेण शास्त्रार्थं कृतवन्तः । तत्वतः शैवानां सिद्धान्ताः शङ्कराचार्यसिद्धान्ताविरोधिन एवेति तत्र ग्रन्थे निरूपितम्, परमेतन्न युक्तम्, अद्वैतवादिनां शङ्कराचार्याणां मतभेदाः शैवेभ्यः शाश्वतिकाः सिद्धान्तकृताश्चेति नात्र विसंवादस्यावसरः । विद्यारण्यस्वामिकृतशङ्कराचार्यस्य अर्वाचीनेतिवृत्ते नीलकण्ठनाम्नः कस्यचन शैवस्य शिवसूत्रेषु टीकायाश्चर्चा वरीवर्ति, तेन ह्यद्वैतस्य 'तत्त्वमसीति' श्रुतिवाक्यस्य शङ्कराचार्यसाधितपथः समालोचनं कृतम् । आनन्दगिरेर्विचारानुसारेण भगवता शङ्करेण विविधशैवसम्प्रदायानां वाह्यलिङ्गेषु आक्षेपः कृतः । आत्मज्ञानं विना केवलमुपासनस्य स्वर्गसाधकत्वेन सत्त्वात् मोक्ष तस्यानुपयोगित्वम् । कापालिकानां विषये आनन्दगिरिणा स्वग्रन्थे विस्तरेण विचारितम् । शङ्करपादेन कापालिकानां साक्षात्कार उज्जयिन्यां सम्पन्नः यत्र ह्येतेषां प्राबल्यमासीत् । तच्चित्रणेन ज्ञायते यद् तत्रत्याः कापालिका जटाधारिणः, जटायाञ्च तेषां नवचन्द्रच्छटा भवति स्म, करे कपालानि च धारयन्ति स्म, भक्षयन्ति स्म ते मांसम्, पिबन्ति स्म च मदिरादिकम् । शिवस्य कापालिकभैरवरूपस्य च उपासनमेते कुर्वन्ति स्म । शङ्कराचार्य एतेषां भर्त्सनं कृतवान् । किञ्च, विद्यारण्यस्वामिग्रन्थानुसारन्तु तेषां कापालिकानां शङ्कराचार्येण मेलनं कर्णाटकदेशे समभवत्, यत्र च कापालिकानामाचार्यः क्रकचस्तेन सह शास्त्रार्थं कर्तुमागतः । तत्र ग्रन्थे आनन्दगिरिग्रन्थवदेव एतेषां कापालिकानां बाह्याभ्यन्तराचारस्य निरूपणं जातम् । एते हि कापालिकाःशस्त्रपाणयोऽप्यजायन्त, सामान्येऽपि रोषप्रसङ्गे ते तच्छस्त्रस्य प्रयोगायापि व्याकुलिता भवन्ति स्म । कर्णाटकदेशे एतादृशानां कापालिकानां प्राबल्यं विशेषतो वर्णितम् । ते च एकदा राजद्रोहमप्यकुर्वन् यस्य शमनं महताऽऽयासेन जातम् । विद्यारण्यस्वामिना भैरवनाम्नां कापालिकशैवानामपि समालेखनं कृतम्, एतैस्सह विदर्भदेशे भगवता शङ्करेण मेलनं जातम् । एतेषां प्रामाणिकः सिद्धान्तः 'भैरवतन्त्रमिति' नाम्नि ग्रन्थे निरूपितम् । अयमेवैतेषां मान्यग्रन्थ आसीत् ।

कृष्णमिश्रस्य 'प्रबोधचन्द्रोदयः' इति नाटकमस्ति खीष्टाब्द्या एकादशशतकस्य रचना । तत्र हि शैवधर्मस्य अन्येषाञ्च धर्माणामात्मानमनुयायिनमिति बोधयित्वा तद्धर्ममाध्यमेन जनान् वञ्चयतः खलानामुपहासो विद्यते । प्रबोधचन्द्रोदये शैवानां पाशुपतानाञ्चोल्लेखो विहितः, उभयोश्चान्यमतावलम्बीव चार्वाकस्याप्युपहासो जातः । एवं हि नाटकमात्रेष्वेकः कापालिकोऽप्यस्ति, तस्य चित्रणञ्चातीव विस्तरेण सम्पन्नम् । स च मुण्डमालां धारयति स्म निवसति स्म च स्मशानभूमौ, अश्नाति स्म च कपालभाजनेन, ख्यापयति स्म चात्मानं तत्त्वज्ञानिनम् । अस्य कापालिकस्य मुख्योपासनविधिर्नरबलिरेवासीत् । भैरवरूपस्य

शिवस्योपासका इमे नरवलेर्विभिन्नाङ्गानि भैरवाय प्रयच्छन्ति स्म । सद्यश्छिन्न-शिरसो यद्रुधिरं प्रवहति तेनैव ते पूजाकार्यं संपादयन्ति स्म । देवतायै मदिरार्पणं स्वस्मै चापि तत्सेवनं तसम्प्रदायानुगामिनां सामान्यकार्यमासीत् । कापालिकेन सह सहचरी 'कपालिनी' आसीत् । अस्यैव पक्षस्य 'मालतीमाधवम्' नाम्नि ग्रन्थे महाकविना भवभूतिना चित्रणं कृतम् ।

एकादशखीष्टाब्दशतकान्ते एषां शैवसम्प्रदायानामैतिहासिकसामग्रचो विविध-स्रोतेभ्यः समधिगम्यते । पाशुपतानामुल्लेखस्तु साहित्ये, शिलालेखेषु च प्रायशः सदैव भवति स्म येन च सिद्धचति यत् पाशुपताः शैवसम्प्रदायेषूत्तमा जायेरन् । त्रयोदशखीष्टाब्दशतके चित्रप्रशस्तौ आचार्य लकुलीशस्य सम्प्रदायस्यास्याद्याचार्य-रूपेण निरूपणं जातम् । तस्य चत्वारः पुत्राश्चतुर्णां शैवसम्प्रदायानां संस्थापका अभूवन्निति । ते च सम्प्रदायाः पाशुपतसम्प्रदायस्यैवोपसम्प्रदायत्वेनाजायन्त । प्रमुखयोः शैवपाशुपतसम्प्रदाययोश्चित्रणं सर्वदशसंग्रहे सम्पन्नम् । तत्रैव ग्रन्थे पाशुपतसम्प्रदायगतसिद्धान्तस्याप्युल्लेखः सर्वदर्शसंग्रहे जातः । कापालिकस्यावधू-तपथस्योल्लेखो यत्र तत्र साहित्यग्रन्थेषु, शिलापट्टेषु, अन्येष्वभिलेखेषु च भवत्येव । अवधूतेष्वेकः सम्प्रदायः 'कालमुखम्' इति नामा यःखलु स्वाग्रहस्य कृते प्रसिद्धः, परमस्य सम्प्रदायस्याद्या संज्ञा कारुकसिद्धान्ती' इत्यासीदिति सम्भाव्यते । वैष्णवा-गमाचार्यरामनुजानां समये 'कारुकसिद्धान्तीनां' स्थितिरासीत् । रामानुजाचार्या द्वादशखीष्टाब्द्यां समुत्पन्नास्तैश्चास्य सम्प्रदायस्याघोराणामुल्लेखः कृतः । सुरा-मांसादिभिः स्मशाने सिद्धिहेतवे एषु तपोरतेषु कापाल-कालमुखेषु च कश्चिद् विशेष-भेदः साधनेषु न भवति स्म इति तत्र तत्र तन्त्रग्रन्थालोडनेन ज्ञायते । सर्वदर्शनसंग्र हेऽस्य सम्प्रदायस्योल्लेखाभावादस्य स्थितिविषये शङ्का न कार्येति सुधीभिरुह्यम् ।

कालक्रमेण केचन सम्प्रदायाः कालमुखे समाविष्टाः, अवशिष्टेषु च केषुचिन्मतेषु मूलतः परिवर्तनं सम्वृत्तम्, परमद्यावधि केचन शैवसम्प्रदाया न्यूनाधिक्येन वर्तन्त एव । शैवसम्प्रदायेषूक्तानामेषां मुख्यानाममुख्यानाञ्च प्रसरः प्रामुख्येन दक्षिणभारत एव समजनि । दशमखीष्टाब्दशतकादारभ्य त्रयोदशशतकं यावत् कर्णाटकप्रान्ते विविधशिलालेखेषु आचार्यलकुलीशस्य तत्संप्रदायस्य चोल्लेखः सम्वृतः । एतेन सिद्धचति यदेतेषु कालमुखेषु दक्षिणभारते पाशु-पतानामासीत् प्रभावः । ९४३ खीष्टाब्दशतकस्यैकस्मिन् शिलालेखे मुनिनाथः 'चिल्लूकः' आचार्यलकुलीशस्यावतारत्वेनोपस्थापितः[१] । १०७८ खीष्टाब्द्य । मेकस्मिन् शिलालेखे एकस्यान्यस्य तपसः कृते लकुलीश इति संज्ञा संजाता[२] - द्वादशशतकस्यैकस्मिन् शिलालेखे सोमेश्वरसूरिर्लकुलीशस्य सिद्धान्तं पुनः

१. एपिग्राफिका कर्णाटिका—१२ भागे, ९२ पृ० ।

२. तत्रैव--७ भागे, सीकरपुरताल्लुके १०७ पृ० ।

प्रतिष्ठापितवान्[१]। १२८५ ख्रीष्टाब्दशतकस्यैकतमे शिलालेखे दातुर्लकुलीश-स्यान्यसम्प्रदास्य समर्थकत्वमिति परिपुष्णाति[२]। केचन विद्वांस अभिनवस्यास्य सम्प्रदायस्य लिङ्गायतसंज्ञात्वेन स्वाभिमतं वर्णयन्ति, परमेतन्न याथातथ्येन समीचीनम्। वस्तुतस्तु लकुलीश इति नाम्ना समग्रशैवसम्प्रदायस्यैतेषु शिला-लेखेषु वर्णनं जातम्। एकस्मिंश्च लेखे कालमुखानामपि लाकुलीशीति संज्ञा समजनि। अतः सम्भावनैषा सदासत्यतुलामधिरोहति यदत्र शिलालेखेषु सर्वत्र 'लाकुली' 'लाकुल' वेति सम्बोधनेन पाशुपतसम्प्रदाय एव नेष्टः, परमस्य शब्दस्यान्यशैवसम्प्रदास्य कृतेऽपि प्रयोगो जात इति नात्र विचिकित्सा। ९५८ ईशवीयशतके राष्ट्रकूटसम्राजः कृष्णतृतीयस्य दानपत्रे शैवसम्प्रदायस्योल्लेखो निश्चयेन कृतो विद्यते। दानपत्रेऽत्र प्रसिद्धविदुषः 'गंगशिवस्य' वर्णनं जातम्, स च शैवो वल्कलेश्वरे एकस्य शैवमठस्याधीश आसीत्। एतेनैतत्काले दक्षिणभारते शैव-सम्प्रदायस्य सुदृढा स्थितिरासीदिति सिद्धचति। १११७ शतकस्यास्य मैसूरप्रान्त-स्थे शिलालेखे यस्मिंश्च कालमुखानां गणना लाकुलीशेषु कृता, तेनेदं सिद्धचति यद् तदानीं कालमुखा दक्षिणभारतेऽप्यासन्। एवं हि ११८३ ख्रीष्टाब्दशतकस्यै-कस्मिन् शिलालेखे एकस्य नागशिवनाम्नः पण्डितस्योल्लेखः सम्वृत्तः, यश्चागमसि-द्धान्ते शैवतत्त्वज्ञाने चासीत्पारङ्गतः। एभिः प्रमाणैर्निःसंशयेनेदं वक्तुं शक्यते यद् द्वादशशतकान्ते दक्षिणभारते शैवसम्प्रदायां भूयस्त्वेन प्रचार आसीदित्यत्र शङ्काले-शस्यावसरो नास्ति।

## लिङ्गायता वीरशैवाश्च

उपर्युल्लिखितानां शैवसम्प्रदायानामतिरिक्तं दक्षिणभारते 'लिङ्गायत' 'वीरशैव' वेति शैवसम्प्रदायस्य प्रादुर्भावः समजनि; यश्चाग्रे सर्वशैवसम्प्रदायान् तिरस्कृत्य प्रतिष्ठापदमलभत। अस्य सम्प्रदायस्य प्रादुर्भावः कदा कथञ्च जातः, सम्प्रदायस्यास्याद्याचार्यः क? इति विषये अद्यापि विवादः प्रचलति। प्रख्यातो बसवाचार्यः सम्प्रदायस्यास्य प्रतिष्ठापकत्वेन न कल्पनीयः, प्रकृष्टप्रमाणाभावात्, परं तेनास्य महती प्रतिष्ठा स्थापिता राज्याश्रयश्च प्रापितः। एवं हचेकानन्द-रामैय्या महानुभावो यं च डॉ० फ्लीटमहोदयोऽस्य संप्रदायस्य संस्थाकत्वेनाङ्गी-करोति, अनयोर्लिङ्गायतवीरशैवसम्प्रदायोर्मंमहत्तमोऽऽचार्यः प्रचारकश्चासीत्, यः खलु प्रबलानर्हतान् दुर्बलयितुं सफलं यत्नमाचष्टे। विविधदृष्ट्या समीक्षणेऽपि प्राक्तनग्रन्थेषु शिलालेखेषु यासु कासु वा प्रमाणसम्पत्तिषु सम्प्रदायस्यास्य क्वचना-प्युनुल्लेखादस्य प्राचीनताया विषये संदेहः समुल्लसति। डॉ० भण्डारकरमहोदया

१. एपिग्राफिका कर्णाटिका —७ भागे, २ खण्डे ६४ पृ०।

२. तत्रैव—५ भागे, १३५ पृ०।

अप्यस्य सम्प्रदायस्य स्तम्भग्रन्थेषु स्थलाङ्गलिङ्गप्रभृतिपारिभाषिकशब्दानां प्रयोगेणास्य प्राचीनताया विषये शङ्कां प्रकटयन्ति[1]।

शैवसम्प्रदायेषु सूक्ष्मपरिवर्तनकारित्वेन लिङ्गायतानां स्थितिः समीक्षणीया। लिङ्गायता ह्यन्येषां शैवसम्प्रदायानां कुरीति-मिथ्याडम्बरप्रभृतिविषयेषु स्वविरोधं प्रदर्श्य परिस्कृतस्य, परिशुद्धस्य बुद्धिसङ्गतस्य चैकसम्प्रदायस्य प्रादुर्भावं प्राकार्षुरिति जानन्त्येव प्रायो विद्वांसः। शैवसम्प्रदायस्य मौलिकसिद्धान्तान् समाकलय्य प्रसृतोऽयं लिङ्गायतपन्था उत्तरोत्तरं विदुषां, साधकानां, विचारकाणाञ्चायासेनैको विशिष्टशैवसम्प्रदायः सम्वृत्तः। ये विद्वांस लिङ्गायतसम्प्रदायस्य व्यवस्थापकाः श्रूयन्ते तेषां संज्ञा 'आराध्या' इत्यासीत्, स्वसम्प्रदाये च ते महतीं प्रतिष्ठामलभन्त। शैवसम्प्रदायेभ्यः पार्थक्येन लिङ्गायतसम्प्रदायस्योत्पत्तिः कदा समजनीति विषये परमार्थत्वेन किञ्चिदपि वक्तुं न शक्यते। लिङ्गायता इतरशैवसम्प्रदायेभ्यो भिन्नाः, विभिन्नशैवसम्प्रदायेषु प्रचलितानां केषाञ्चनाचाराणां विरोधिनः, ब्राह्मणधर्मे चापि सर्वस्वीकार्यसिद्धान्तानामवहेलकाश्च संवृत्ताः। प्रमाणार्थञ्च ब्राह्मणधर्मे बालकानां यज्ञोपवीतसंस्कार आवश्यकः, परंलिङ्गायता ब्राह्मणबालकानामिव स्वसम्प्रदाये दीक्षितानां यस्य कस्यापि वर्णस्य बालकानां बालिकानाञ्च यज्ञोपवीतसंस्कारं कुर्वन्ति स्म, यज्ञोपवीतस्थाने विशिष्टे चैकस्मिन् सूत्रे ते शिवलिङ्गं धारयन्ति स्म। अतस्तेषां संज्ञा 'लिङ्गायत' इति संजज्ञे, एषां मूलमन्त्रस्तु 'ॐ नमः शिवाय' इत्येव न तु गायत्रीमन्त्रः। वर्णभेदवन्धनव्यवस्थान्तु लिङ्गायताः स्वसम्प्रदाये सिद्धान्तरूपेण स्वीकृतवन्तः। पुरा च केषुचित् शैवसम्प्रदायेषु वर्णभेदव्यवस्था न स्वीकृता, परं लिङ्गायता इदं दृढतया आवश्यके नच स्वीकृतवन्त यदत्र सम्प्रदाये दीक्षितानां जनानां वर्णभेदव्यवस्था न स्वीकार्या। तत्र समेषां परस्परं व्यवहारः सम्बन्धश्च भवितुमर्हति। एतेनास्य सम्प्रदायस्य ब्राह्मणधर्मविरोधित्वेनोदयः। यद्यपि मध्ये मध्ये ब्राह्मणधर्मविरोधात् सम्प्रदायेऽस्मिन् विरोधोऽप्यजायत, परमन्ते ब्राह्मणविरोध्याचाराणामेव प्रभावोऽवशिष्टः। ये च सम्प्रदायेऽस्मिन् वर्तमानाः सन्त अपि वर्णधर्मानुयायिनस्तेऽस्य सम्प्रदायस्योपसम्प्रदायिन एव संजाताः। लिङ्गायतैश्च तेषां संज्ञा विधर्मीति कृता।

लिङ्गायतानामन्यगुणेषु मांसमदिरादिभक्षणनिषेधेन सहैव आत्मसंयमस्य नियमा अनुपालनीया इत्येवात्र वैशिष्टयम्। विधवाविवाहस्यापि समर्थका लिङ्गायताः। अतो बाह्योपासनापेक्षया आन्तरोपासनस्य महात्म्यमत्र सम्प्रदाये स्वीकृतम्। धर्मप्रधानकार्येष्वप्यधिकाडम्बरस्य विरोधो लिङ्गायतसम्प्रदाये इष्टः, आत्मज्ञानसंसाधने हितस्य व्यवधानोत्पादकत्वात्। इत्थं हि दक्षिणे लिङ्गायताः प्रभूतप्रभावविभवाः सन्तोऽपि कालप्रभावेणात्र सम्प्रदाये ब्राह्मणवैदिकधर्मस्य

---

१. डॉ भण्डारकरः—वैष्णविज्म शैविज्म एण्ड माइनररिलिजन सिस्टम्स इन इण्डिया।

प्रभावो निपतितः, येन च शनैः शनैर्वर्णभेदव्यवस्थां तिरस्कृत्य लिङ्गायताः स्वयमेव वर्णभेदं प्रकुर्वाणा वर्णभेदेषु विभक्ताः। अद्यत्वे तु वर्णभेदा विराजन्ते लिङ्गायतेषु। वैदिकब्राह्मणसनातनधर्मस्य प्रभावाल्लिङ्गायता अपि स्वसिद्धान्तसमर्थनायाद्यत्वे पौराणिकप्रमाणानि वैदिकप्रमाणानि चाश्रयन्ते, लिङ्गोपासनस्य चाधारास्तत्रैव मृग्यन्ते च। सर्वमेतल्लिङ्गधारणचन्द्रिका नाम्नि पुस्तके प्रत्ययनायान्वेषणीयम्। तत्र हि लिङ्गोपासनस्य वैदिकत्वं साधनाय भृशं प्रयतितम्। एवं हि शिवोपासनस्य सहैव शक्त्युपासनस्य, गणपत्युपासनस्य चानेके सम्प्रदायाः प्रचलन्ति स्म भारते। न्यूनाधिक्येन च सम्प्रदायास्ते शैवसम्प्रदायसिद्धान्तानुगामिनो बभूवुः। अतस्तेषां पार्थक्येन विवेचनं न प्रस्तूयते। परमेतन्निश्चितं यद् यदा दक्षिणभारते शिवोपासनस्य प्राधान्यम्, तदैव वङ्गप्रान्तादौ शक्तिपूजयाः प्राधान्यम्, महाराष्ट्रादौ च गणेशपूजायाः प्राधान्यं दरीदृश्यते। इत्थं हि भारतीया संस्कृतिर्निगमागममूलिका सेदैवासीदिति न तिरोहितं प्रेक्षावताम्। उत्तरोत्तरं दार्शनिकपक्षस्य भारतीयजीवनपद्धतौ विकाशात्शैवसिद्धान्तस्यापि दार्शनिकपक्षाः प्रतिदिनं पुष्टिपदमप्राप्नुवन्नित्यपि प्रेक्षावद्भिर्न विस्मरणीयम्। नास्तिकदार्शनिकान् पराजित्य आस्तिकवैदिकदर्शनानां महानुद्धर्तारो भगवन्तः शङ्कराचार्या अद्वैतवादस्य प्रतिष्ठापनं कुर्वन्तोऽप्यन्ते शैवसिद्धान्तानेव स्वीकृतवन्त इति सौन्दर्यलहरीग्रन्थावलोकनेन सुदृढं विभाति।

देशे भोजनवसनभूषादिषु वैविध्ये सत्यपि विस्तृते भारते अत्रत्यसंस्कृतौ मौलिकतायाः सत्त्वात् परस्परं वयं भारतीया एकतां भजन्ते। अत्रेदं वैचित्र्यं यद् विचाराचाराराधनभेदेषु सत्स्वपि तत्वतः समेषां दर्शनानामेकलक्ष्यस्वीकारात् साधनाधारस्य भेदेऽपि लक्ष्ये ऐक्यात् न वियुज्यन्ते परस्परं भारतीयाः। अतो भारतीयजीवनपद्धतौ सत्स्वनेकविचारप्रभावेष्वन्ते भारतीयसनातनसंस्कृतेरेव कालक्रमेणावस्थितिर्दृश्यते। इयता समारम्भेण दक्षिणभारते शैवधर्मप्रभावो विमृष्ट इति शम्।

## कश्मीरे शैवधर्मस्वरूपम्

यदा हि दक्षिणेऽनेकेऽऽचार्याः महात्मानश्च शैव-शाक्तसम्प्रदायस्य प्रतिष्ठायामवर्तन्त तदैव पश्चिमे भारते कश्मीरेऽपि शैवधर्मस्य प्रचारो दृश्यते। इदमितिहासदृष्ट्या कथनमतीवकठिनं यद् कदा तत्र शैवधर्मस्य प्रभावः समजनि, परमतिप्राक्तनकालत एव हि तत्र शैवसम्प्रदास्य स्थितिः प्रतीयते। बहुप्राक्तनकालादेव कश्मीर उत्तरभारतीयाचारपद्धत्या प्रभावितोऽवर्तत, तथा च तत्र यानि यानि धार्मिकाण्यान्दोलनानि जायेरन् तेषां तेषामनिवार्यरूपेण प्रभावो निपतितः। काश्मीरिकेषु ख्रीष्टाब्दस्याष्टमशतके यदा च वसुगुप्तस्याविर्भावः समजनि, तदा कश्मीरे शैवागमस्यातीव प्रचारः प्रसारश्च दृश्यते। अतः काश्मीरिकेषु शैवागमस्य

प्रभावस्ततोऽपि बहुकालात्प्रागेवासीदित्यत्र न शङ्काया अवकाशः। शैवागमस्य सर्वा व्याख्याः काश्मीरिकेषु उत्तरभारतवदित्येव भवति स्म। काश्मीरे 'विरूपाक्ष-पञ्चाशिका' पुस्तकं षष्ठसप्तमयोः ख्रीष्टाब्दे प्राप्यते। अत्र शैवदर्शनस्य दार्शनिक-पक्षाः समासतो निरूपिताः सन्ति। एतेन कश्मीरे शैवागमसिद्धान्तप्रभावः षष्ठ-शतकादपि पूर्वमेवासीदीति सिद्धयति।

आचार्यशङ्करप्रादुर्भावकालः प्रायसो नवमख्रीष्टाब्दी सिद्धयति। तत्पूर्वं तन्त्रशास्त्रं प्रायसः सेश्वरसांख्यदर्शनवद् द्वैतवादी आसीत्। तत्र शिवशक्त्योर-विभागेन स्थितिः स्वीकृता। शिवं विना शक्तेः, शक्तिं विना शिवस्य कल्पनैव नासीत्। परं सत्याञ्चास्यां स्थितौ शङ्कराचार्यस्याद्वैतवादिसिद्धान्तस्य प्राब-ल्यात्तस्मिन् देशे सर्वत्र प्रचाराच्च तदानीं काश्मीरीयशैवदर्शनेऽप्यद्वैतविचारस्य प्रभावो निपतितः। कश्मीरे शैवदर्शनेऽद्वैतवादस्य प्रत्यभिज्ञादर्शनद्वारा प्रभावः कदा समजनि इति न निश्चयेन वक्तुं शक्यते। परमेतदपि युक्तिसहं यच्छङ्करा-चार्यकालात्प्रागपि कश्मीरेऽद्वैतवादस्य बीजमासीत् तत्प्रभावेणान्विता आगमा-चार्या मन्येऽद्वैतवादस्य स्वदर्शने स्थानं प्रायच्छन्निति। 'शिवशूत्रम्' शङ्करा-चार्यकालात्प्राक्कालिकमिति 'वसुगुप्त' इत्यागमाचार्यस्यैतिहासिकेतिवृत्तिवृत्ता-न्तादवगम्यते। अयमेवाचार्यः शिवशूत्रस्य कश्मीरे प्रचारं कृतवान्। स चैवास्य स्रष्टा गुरूपदेशादुपलब्धज्ञानस्य प्रचारयिता चेत्युभयमपि सम्भाव्यते। आचार्यवसुगुप्तेन शिवशूत्राणां व्याख्या अद्वैतवादिसिद्धान्तमिव कृतम्, स एव मन्ये; शिवसूत्रद्वाराऽद्वैतवादं कश्मीरीयशैवदर्शने स्थापितवानित्युपलब्धप्रमाणै-राचार्यचट्टोपाध्यानां 'कश्मीरीयशैव-धर्मः' इति पुस्तकेन चावगम्यते। अद्यत्वे यद् 'शिवसूत्रं' प्राप्यते तस्मात् सर्वथा भिन्नं तत्कर्तुर्नाम किञ्चिदपि प्रमाणाभावान्न ज्ञातुं शक्यते। आचार्यवसुगुप्तसिद्धान्तानां भूयस्त्वेन प्रचारस्तच्छिष्येनाचार्य 'कल्लटेन' स्वव्याख्याभिः स्पन्दकारिकाभिश्चाकारि। अद्वैतवादस्यास्य मतस्य स्थापनं आचार्यवसुगुप्तकल्लटौ चाकुर्वताम्, परमस्य समारोहेण स्थापनं प्रबलप्रमाणैः सत्तर्कैश्च निरूपणं 'शिवदृष्टिः' इति नाम्नि ग्रन्थे आचार्यसोमानन्दे-नैव कृतम्। अयञ्चाचार्यः कल्लटस्य समसामयिको वसुगुप्तस्य च शिष्य आसीत्। आचार्यसोमनन्दस्याद्वैतशैवसिद्धान्तपरम्परायाः शास्त्रीयदृष्ट्या पोषणं सम्वर्द्धनञ्च तच्छिष्येणाचार्य 'उत्पलेन' कृतम्। उत्पलाचार्यः 'प्रत्याभिज्ञा' सूत्राणां रचनां चकार, तत्सूत्राणां प्रत्यभिज्ञेति संज्ञया दर्शनस्यास्य संज्ञा 'प्रत्याभिज्ञादर्श-नम्' इति समजनि। सर्वदर्शनसंग्रहे अनेनैव नाम्ना अस्य दर्शनस्योल्लेखो जातः।

अत्रेदमवधेयम्—एकमद्वितीयं परं तत्त्वं शून्यवादिभिर्विज्ञानवादिभिश्च बौद्धैः, गौडपाद—शङ्कराचार्यप्रभृतिभिर्वेदानुगामिभिः, व्याडि-पतञ्जलि—

भर्तृहरि-पुण्यराज-हेलाराज-नागेशभट्टादिभिर्वैयाकारणैः, वैष्णवाचार्यवल्लभेन, माहेश्वरसूत्राणामागमानुसारिव्याख्यात्रा नन्दिकेश्वराचार्येण, शक्त्यद्वयवादिभिः काश्मीरशाक्तैः, शिवाद्वयवादिभिः शैवैश्च विभिन्नाभिर्युक्तिभिरूपायैश्च स्वीकृतं समर्थितञ्च। तत्र काश्मीराद्वैतशैवमतं मतभेदपुरस्सरं चतुर्धा विभक्तम्। तद्धि क्रमश: १—नन्दिकेश्वरदर्शनम्, २—प्रत्यभिज्ञादर्शनम्, ३—क्रमदर्शनम्, ४—कुलदर्शनञ्च। अत्र सर्वत्राद्वैततत्त्वस्य प्रतिपादनं सम्वृत्तम्। अत्र सर्वे परस्परमितिहास-आचार्य-ग्रन्थादिभिर्भिन्ना भिन्नाः सन्त अपि एकस्मिन् तत्त्वे सन्ति सन्निविष्टाः परस्परं पूरकाश्च। तदनुसारेण सूक्ष्मेक्षिकया समासेन निगद्यते किञ्चित्—

## १—नन्दिकेश्वरदर्शनम्

परमाचार्यनन्दिकेश्वरस्य ज्ञानमुपमन्युकृतायां नन्दीकेश्वरटीकामुपलभ्यते। नन्दिकेश्वरः शिवावतारः, स एव डमरुनिनादेन सनकादिसिद्धानुद्धर्तुं वैयाकरणानामुपजीव्यत्वेन पाणिन्यष्टाध्यायिप्रारम्भोपलभ्यमानं चतुर्दशसूत्रात्मकं वर्णात्मकं ज्ञानतत्त्वमुपादिदेश। चतुर्दशमाहेश्वरसूत्राणां तत्त्वार्थमजानाना व्याघ्रपादादयोऽऽचार्या नन्दिकेश्वरं तत्त्वज्ञं ज्ञानाय प्रार्थयामासुः। तामाश्रित्य तेन षड्विंशतिकारिकाभिस्तत्तत्वं एमुपदिष्टम्। महामहेश्वरेण नन्दिकेश्वरेण चतुर्दशमाहेश्वरसूत्राणां व्याख्यानं शैवाद्वैतमतस्थापनार्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थञ्च प्रकारद्वयमाचरितम्। नन्दिकेश्वरकारिकायामन्तिमः श्लोको वैयाकरणानां कृतेऽस्ति, अन्यच्च माहेश्वरसूत्रदार्शनिकव्याख्यानरूपम्। तद्धि—

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।<br>
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये[1]॥ इति।

नन्दिकेश्वरः पाणिन्युपदेष्टा। भगवान् भाष्यकारोऽपि नन्दिकेश्वरव्याख्यानं प्रामाण्येन स्वीकरोति। तद्यथा—'सोऽयमक्षरसमाम्नायो ब्रह्मराशिः[2]' इति। तत्रैव कैयटः समर्थयति—'ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीति[3]' शब्देन। नागेशभट्टाश्च स्वटीकोद्द्योते—'चतुर्दशसूत्री अनेकर्षीणां नानाविधार्थजिज्ञासानिवृत्तये शिवेन प्रकाशिता, तस्याश्च पाणिन्याद्युद्देश्यकमपि फलम्, अन्त्यवर्णचतुर्दशं पाणिन्याद्युद्देशेनैवोपदिष्टम्। इदञ्च तत्रैव स्पष्टम्[4]' इत्युक्तम्। किञ्च, 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः' इति चतुर्दशसूत्रोद्घोतव्याख्याने तेनोक्तम्। एतेन नन्दिकेश्वरः पाणिनेर्गुरुरासीति सिद्ध्यति।

---

१. नन्दिकेश्वरकारिका—२६।　　२. म० भा०—१।१।२।<br>
३. तत्रैव—प्रदीपटीका०।　　४. ऋ ऌ क्—उद्द्यो०।

## नन्दिकेश्वरमते दार्शनिविचारतत्त्वसारः

दर्शनानि ह्यस्य जगतस्तात्त्विकं रूपं किम् ? कुत इदम् ? किञ्चात्र निमित्तम् ? इत्यादीनि तत्त्वान्युद्दिश्य प्रवर्तन्ते। तत्राद्वैतशिवाचार्यास्तु—"तत्त्वतः परतत्त्वैकस्वरूपं सर्वमिदम्, परतत्त्वादेवोद्भवति, परस्य क्रीडाशीलत्वात्" इत्युच्यन्ते। नन्दिकेश्वरनयेऽत्राद्वैतवादे 'अइउण्'[1] इति प्रथमे सूत्रे 'अ' इति निर्गुणब्रह्मवाचकः, 'इकार' इति स्वातन्त्र्यापरपर्यायश्चित्कलावाचकः, 'उकार' इतीश्वरवाचकः, णकारश्चासीदिति क्रियावाचकः। एवञ्च परमयोगिनाम् अव्यतिरेकतुरीयासमाधौ निर्गुणतया प्रकाशमानो ब्रह्मापरपर्यायः शिवः प्रकाशविमर्शरूपोऽपि विश्वोत्तीर्णस्वरूपे न्यग्भावितविमर्शतया प्रकाशैकघनः 'अ' इति निर्दिष्टः। स एव न्यग्भावितप्रकाशतया चिति-सत्ता-विमर्श-स्वातन्त्र्यादिपर्यायः स्वशक्तिप्राधान्येन पश्यन्त्याद्या वाचः सकलजडात्मकं वाच्यं चाभासयन् विश्वरूप ईश्वर इत्युच्यते। एवं जगत्सृष्टिप्रसङ्गे स्वातन्त्र्यशक्तिप्रधानस्य विश्वस्य स्रष्टृत्वाभ्युपगमात् स्वान्त्र्यवादी नन्दिकेश्वर इति प्रतिफलति।

## काश्मीरीयशैवाद्वैतदर्शने नन्दिकेश्वरस्य प्रभाव

कश्मीरीयाद्वैतमते नन्दिकेश्वरप्रतिपादितस्य स्वातन्त्र्यवादस्यैव प्रभावो निपतित इति 'स्वेच्छया स्वस्य चिद्भित्तौ विश्वमुन्मीलयत्यसौ' इति नन्दिकेश्वरवाक्यस्य 'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति' इति प्रत्यभिज्ञाहृदयस्थक्षेमराजवाक्येनैक्यं सिद्ध्यति। अत्रैव स्वातन्त्र्यवादः, अद्वैतवादः, प्रत्ययवादः, निर्गुणसगुणयोर्ब्रह्मेश्वरयोरैक्यम्, षट्त्रिंशत्तत्त्वानि, तत्त्वोत्तीर्णः परः शिव इत्यादयो भावाः संगच्छन्ते।

सर्वाण्यद्वैतशैवदर्शनानि चतुःषष्ट्यागमाश्रितानि। धार्मिकशैवदृष्ट्या शैवागमाः शिवात् परम्परया आयाता तथा चानाद्या ईश्वरोक्तवेदवत्। तथापि कालेन सा परम्परा विच्छिद्यतेऽनुग्रहकारिणा शिवेन भूयः प्रचाल्यते च। अतो भाषामूलमागमानां वेदेभ्योऽर्वाक्त्वप्रतिपादनं निर्मूलम्। शैवागमाध्येतृपरम्परायां सत्ययुगादारभ्य कलियुगप्रारम्भिकांशपर्यन्तं स्वच्छन्द–लाकुल–अणुराज-अब्जज–बलि–वामन–विभीषण–रावण-राम-लक्ष्मण-सिद्ध-ऋषि-योगिप्रभृतयो निर्दिष्टाः। कलिप्रभावे विस्तृते शैवागमविद ऋषयो दुर्गमस्थानं गता। एवञ्च शिवशासनपरम्परा व्युच्छिन्ना। इयं शैवागमाध्येतृपरम्परा अभिनवगुप्तपादैः स्वीयतन्त्रालोके षट्त्रिंशाह्निके सिद्धागमाश्रमे वर्णिता।

सोमानन्दोऽभिनवगुप्तपादस्य परमेष्ठिगुरुरासीत्। अभिनवगुप्तपादाश्च—

---

१. माहे० सू०—१।

इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे
तिथिशशिजलधिस्थे मार्गशीर्षावशाने ।
जगति विहितबोधामीश्वरप्रत्यभिज्ञां
व्यवृणुत परिपूर्णां प्रेरितः शम्भुपादैः[1] ।।

इति वचनानुसारं पञ्चदशाधिकदशशततमे ईशवीयवर्षे ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीं समापितवन्तः । एवं चेशवीयदशमशतकमध्यजन्मनामभिनवगुप्तपादानां परमेष्ठिगुरुः सोमानन्द ईशवीयनवमशताब्द्यां समभूदिति सिद्ध्यति । अयं सोमानन्दः कलावद्वैतचतुःषष्टिशैवागमपरम्पराप्रथमप्रचालकात् त्र्यम्बकादेकोनविंश इत्यैतिहासिकदृष्ट्याऽद्वैतशैवागमप्रचार ईशवीयशतकप्रारम्भात् पूर्वमासीदिति युक्तिभिः साधयिष्यते । इमांश्चतुःषष्ट्यागमान् भगवान् शङ्कराचार्यो जानाति स्मानुसरति स्म चेति । तदुक्तम्—

चतुःषष्ट्यातन्त्रैः सकलमतिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना—
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम्[2] ।। इति सौन्दर्यलहरीश्लोकादवगम्यते ।

सोमानन्दोऽस्याः शैवागमिकविचारधाराया आणव-शाक्त-शाम्भव-प्रत्यभिज्ञाख्येषु चतुर्षूपायेषूर्ध्वतममन्तिममनुपायापरपर्यायं प्रत्यभिज्ञेति विश्रुतं स्वसमकालभाव्यद्वैतशैवप्रतिपादकवसुगुप्ताचार्याऽविदितं मोक्षोपायं प्रत्यभिज्ञेयमहेश्वरस्वरूपं च युक्तिभिः संसाध्य शिवदृष्टया प्रकटीचकार ईशवीयनवमशतके । अत एव शिवदृष्टौ प्रतिपादितं दर्शनं प्रत्यभिज्ञादर्शनमित्युच्यते ।

शिवदृष्टिप्रतिविम्बभूतामीश्वरप्रत्यभिज्ञाकारिकां, तदुपरि वृत्तिनाम्नीं टीकां, तस्या अप्युपरि विवृत्याख्यां टीकां सोमानन्दशिष्य उत्पलाचार्यो व्यलिखत् । अभिनवगुप्ताचार्याश्चोत्पलाचार्यरचनाया ईश्वरप्रत्यभिज्ञाया तद्विवृत्योपरि क्रमशो विमर्शिनी—विवृतिविमर्शिनीति च प्रसिद्धे द्वे टीके कृतवन्तः । इदमेव ग्रन्थपञ्चकं शिवदृष्ट्याख्यप्रकरणसहितं मुख्यतया प्रत्यभिज्ञादर्शनोपपादकमिति सर्वदर्शनसंग्रहे मधुराजयोगिकृतशास्त्रपरामर्शश्लोकमुद्धरता माधवेन स्वीकृतम् । तदुक्तम्—

सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ ।
प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः[3] ।।

---

१. सारस्वतीसुषमा—१८ वर्षे १-२ अङ्कौ, डॉ० कान्तिचन्द्रपाण्डेयः ७६ पृ० ।
२. सौ० ल०—३१ । ३. सारस्वतीसुषमा—१८ वर्षे १–२ अङ्कौ, ७७ पृ० ।

महामहेश्वराचार्याभिनवगुप्तपादानामनन्तरन्न कश्चन मौलिको ग्रन्थः प्रत्यभिज्ञाप्रतिपादकः समुपलभ्यते। अभिनवगुप्तकृतः श्रीतन्त्रालोकस्तु त्रयाणामप्यद्वैतशैवदर्शनानां क्रम-कुल-प्रत्यभिज्ञेतिविख्यातानां प्रतिपादनपरः।

एतदनन्तरं तच्छिष्यप्रशिष्यादिभिर्विरचिताः प्रत्यभिज्ञाविषयका ग्रन्था यथा—अभिनवगुप्तशिष्यक्षेमराजकृतः प्रत्यभिज्ञाहृदयमिति प्रसिद्धः प्रत्यभिज्ञादर्शनस्य संक्षिप्तो ग्रन्थः, योगराजकृता ( १०६० ई० ) परमार्थसारटीका, जयरथरचिता ( ११८० ई० ) विवेकनाम्नी श्रीतन्त्रालोकटीका, भास्करकण्ठकृता ( १७८० ई० ) ईश्वरप्रत्यभिज्ञाटीका भास्करीति प्रसिद्धा प्रभृतयः सन्ति प्रसिद्धाः।

यस्मिन् समये कश्मीरे प्रत्यभिज्ञादर्शनस्य प्रादुर्भावो अजायत तस्मिन्नेव काले भगवतः शङ्कराचार्यस्याविर्भावोऽप्यजायत। आचार्यशङ्करस्याद्वैतवादसिद्धान्तेन युक्तत्वादस्य दर्शनस्य महानभ्युदयः समभवत्। अस्यामेव प्रत्यभिज्ञादर्शनपरम्परायामाचार्याभिनवगुप्तस्यावतारः समजनि। अयञ्चाचार्य उत्पलाचार्यस्य शिष्यः। अनेन 'परमार्थसारः' इति ग्रन्थस्य संरचनं कृतम्। अन्येषामपि 'श्रीतन्त्रालोक' 'ईश्वरप्रत्यभिज्ञाविमर्शिनी' 'ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी' प्रभृति--व्याख्याग्रन्थानां प्रणयनं तेन कृतम्, परं परमार्थसारे सम्यक् प्रत्यभिज्ञादर्शनस्य तत्त्वनिरूपणात्तस्यात्र सम्प्रदाये महत् स्थानं वरीवर्ति। इत्थ ह्युत्पलाचार्यस्य प्रत्यभिज्ञासूत्रमभिनवगुप्तस्य च परमार्थसार इति ग्रन्थद्वयं काश्मीरीयशैवसिद्धान्तस्य प्रमाणिकमभूत्। महामहेश्वराभिनवगुप्तपादानां श्रीतन्त्रालोक इति ग्रन्थस्त्वाकरग्रन्थरूपेण सप्तत्रिंशदाह्निकं राजते। अत्र शैव-शाक्तदर्शनीयसमस्तसिद्धान्तानां सम्यङ्निरूपणमालोडलनञ्च सम्वृत्तम्। किं च, ध्वनिवाद्यलङ्कारिकेष्वानन्दवर्धनाचार्यादिविचारेषु प्रत्यभिज्ञादर्शनस्य तत्त्वं सन्निवेश्य तत्रापि स्वप्रज्ञायाः परिचयमुपपादितमस्ति। ध्वन्यालोकग्रन्थस्य 'लोचनम्' इति व्याख्यां निर्माय तत्र प्रत्यभिज्ञादर्शनस्य सम्यङ् निरूपणं विधाय दार्शनिकं स्वरूपं रसस्य सम्पादितम्। एवयमेव 'मालिनीविजयवार्तिकमि' त्यादौ स्वपक्षस्थापनपुरस्सरं शैवसिद्धान्तनिरूपणञ्चाचरितम्। महामहेश्वराचार्याभिनवगुप्तशिष्येन महाव्याख्याकारेण क्षेमराजेन'स्वरचनायां' शिवसूत्रविमर्शिन्यां आचार्यवसुगुप्तविरचितशिवसूत्राणां व्याख्यानं विन्नितम्। आचार्यः क्षेमराजोऽनेकान् 'प्रत्यभिज्ञाहृदयम्', 'स्पन्दसन्दोहः', 'स्पन्दनिर्णयः' प्रभृतीन् ग्रन्थरत्नान रचितवान्, तत्र प्रत्यभिज्ञादर्शनस्य विस्तृतं व्याख्यानञ्च विवृतवान्।

क्षेमराजानन्तरं प्रत्यभिज्ञादर्शने मौलिकग्रन्थग्रथनपरम्परा प्रायश अवरुद्धा। केवलमुपर्युक्तग्रन्थानां टीका-व्याख्यादय एवाभवन्। तत्र ग्रन्थेषु टीकाकर्तृषु प्रधान्येन 'योगराजः' अभवत्। आचार्याभिनवगुप्तस्यायं शिष्यः परमार्थसारग्रन्थस्य टीकां कृतवान्। एवं हि किञ्चितत्कालानन्तरं त्रयोदशख्रीष्टाब्दशतके जयरथेनाभि-

नवगुप्तशिष्येण तन्त्रालोकस्य टीकामटीकत। तदनन्तरं प्राधान्येन टीकाग्रन्थानामेव प्रणयनमजायत।

कश्मीरः शारदापीठमिति सुप्रसिद्धम्। प्रत्यभिज्ञादर्शनोत्थानसमये कश्मीरो बहूनां दार्शनिकविचारधाराणां संगमस्थानमासीत्। सम्राडशोकसमयादारभ्य (२७३ तः ३३२ ई० पूर्वम्) कश्मीरो बौद्धानां महत्केन्द्रमभूत्। इह कनिष्को बौद्धधर्मपुस्केषु परस्परविरुद्धांशान् संगमयितुं बौद्धपण्डितानामेकां महतीं सभामायोजितवान्। बौद्धमतसत्ता कनिष्कसमये (७८ तः १०१ ई० पू०) काश्मीरिकशैवानामरुन्तुदा सञ्जाता, यदा कनिष्कः सम्पूर्णां काश्मीरभूमिं बौद्धभिक्षुसंघाय प्रादात् तन्नेता नागार्जुनश्चार्थिकवैभवसहकृतं स्वीयं विचित्रबुद्धिवैभवं बौद्धधर्मप्रचाराय शैवधर्मोन्मूलनाय च प्रायौक्षीत्। नागार्जुनस्य तदनुयायिनां च शैवधर्मद्वेष्ट्रित्वं कल्हणकृतायां राजतरङ्गिण्यां वरदराजकृतशिवसूत्रवार्तिके चेत्थं सूचितम्—

नागार्जुनेन सुधिया बोधिसत्त्वेन पालिताः।<br>
क्रियां जीलपुराणोक्तामाच्छिन्दन्नागमद्विषः॥ (रा० त०) इति।<br>
नागबोध्यादिभिः सिद्धैर्नास्तिकानां पुरःसरैः।<br>
आक्रान्ते जीवलोकेऽस्मिन्नात्मेश्वरनिरासकैः[१]॥ (शि०सू०वा०) इति च।

पाणिनीयव्याकरणस्य दर्शनस्य चाध्ययनाध्यापनपरम्परां कल्हणानुसारं काश्मीरराजोऽभिमन्युः सम्भवत ईशवीयपूर्वचतुर्थशतकभवः समचालयत्। पुण्यराजो वाक्यपदीयद्वितीयाध्यायटीकान्ते राजानकशूरवर्मशशाङ्कनामानौ स्वगुरुपरमगुरू कीर्तयति स्म। हेलाराजो भूतिराजतनयोऽपरो वाक्यपदीयटीकाकृद् भूतिराजश्चाभिनवगुप्तपादानां गुरू आस्ताम्। अभिनवगुप्तपादं वैयाकरणसिद्धान्तसंवेतृतया नवं शेषं स्वीकुर्वन्तस्तदगुरवोऽभिनवगुप्तपाद इति नाम तस्मै प्रादुः।

न्यायदर्शनस्य तथाऽद्वैतवेदान्तदर्शनस्य काश्मीरे समीचीनः प्रचार आसीत्। न्यायसिद्धान्तमवलम्ब्य श्रीशङ्कुककृतस्य, वेदान्तसिद्धान्तानुसारं भट्टनायककृतस्य च रससूत्रव्याख्यानस्योपलम्भात्। अभिनवगुप्तः स्वीयकथामुखतिलके न्यायाभ्युपगतषोडशपदार्थान् प्रतिपादयति स्म, मालिनीविजयवार्तिके च वैशेषिकाभ्युपगतसमवायविशेषाभावान् दृढं समालोचयति स्म, ध्वन्यालोकलोचने चाभिहितान्वयवादान्विताभिधानवादमीमांसकसिद्धान्तौ च। एवमेव द्वैतसिद्धान्तवादिनो रामकण्ठादयो द्वैतशैवसिद्धान्तदर्शनं व्याचख्युः। नैषधचरितकर्ता श्रीहर्षो जयन्तचन्द्राज्ञानुसारं स्वनिबन्धं काश्मीरविदुषः प्रदर्शयितुं शारदाहस्ते च स्वीकृत्यर्थं समर्पयितुं काश्मीरं जगाम। अत ईशवीयपूर्वचतुर्थशतकादारभ्य द्वादशशतकपर्यन्तं काश्मीरस्य शारदापीठत्वं विविधदर्शनविचारधारासंगमभूमित्वं चाक्षतमासीत्। शङ्कराचार्यो

---

१. सारस्वतीसुषमा—शैवाद्वैतदर्शनम् १८।१-२, ७९ पृ०।

ऽपिमण्डनमिश्रप्रारब्धोन्मूलनं बौद्धमतं भारतीयप्रदेशान्तरेभ्यः समून्मूल्य ईशवीय-नवमशतकस्य द्वितीयदशके काश्मीरमगमत् संवर्धयितुं तत्रत्यदार्शनिकेष्वद्वैत-वेदान्ताद्वैतशैवागमज्ञानम्, प्रचारयितुं शैवाद्वैतविचारधारां दक्षिणामूर्तिस्तोत्रादि-द्वारा, प्रोत्साहयितुं काश्मीरविदुषोऽद्वैतशैवविषये बौद्धकृतानाक्षेपानपाकतुम्। सुरेश्वराचार्यश्च तच्छिष्यो व्याख्याद् दक्षिणामूर्तिस्तोत्रमद्वैतशैवागमानुसारं प्रयुञ्जन् शैवागमपारिभाषिकशब्दान्, आकर्षयन् तत्रत्यशैवानां ध्यानं मौलिक-शैवाद्वैतसिद्धान्तान् प्रति, दर्शयंश्चागमाश्रितशाङ्कराद्वैतस्य शैवाद्वैतसाम्यम्, प्रवर्धयंश्च शैवविदुषामुत्साहं दार्शनिकदृष्टया शैवागमानध्येतुम्।

एवं हि शाखा प्रशाखामाध्यमेनात्र कश्मीरे शैवाद्वैतं प्रचारप्रसारपदमधिरूढं सदधुनाऽपि कथञ्चिज्जीवितं तत्सिद्धान्तमनुकरोति। तदत्र दिङ्मात्रन्निर्दिश्य पुनः प्रत्यभिज्ञापथश्चर्चां विधाय एतत्क्रमः समापनीय इति।

तथा चात्र प्रत्यभिज्ञादर्शनसम्प्रदाये निष्कलं, परमस्वतन्त्रं, परशिवाद्वैत-तत्त्वमेव परमार्थेनावशिष्टम्, शक्त्यादीनां तत्रैव परशिवतत्त्वे लयो जातः। अत्र तत्त्वे चिच्छक्तिः, आनन्दशक्तिः, इच्छाशक्तिः, ज्ञानशक्तिः, क्रियाशक्तिरिति पञ्च-भेदाः शक्तेरवतिष्ठन्ते। शक्तिप्रभावादेवाभासरूपस्य जगत उत्पत्तिर्भवति। अयञ्चा-भासोऽद्वैतवेदान्तस्य विवर्तवाद इव संगच्छते। परमत्र केवलमिदमेव वैशिष्ट्यं यदायं विश्वप्रपञ्चः परमशिवसम्बन्धात् सदेव। वेदान्ते च पारमार्थिकावस्थायामि-दमसदिति निगदितम्, यतो हि जीवस्तत्वतः शिवांश एव। परमशिवः काल-नियति-राग-विद्या-कला इति पञ्चविधबन्धनैरात्मनो निष्कलं स्वतन्त्रस्वरूपं सम्प्रबाध्य सृष्ट्युपयोगित्वं सम्पादयति। अन्ते ज्ञानदशायामयं जीवः समस्तमलानपाकृत्य स्वरूपबोधनपरः सन् 'शिवोऽहमिति' भावापन्नः शिवरूपतां भजते। एतत्सर्वमत्रा-द्वैतदर्शनवज्ज्ञेयमिति सुधीनां कृते दिङ्मात्रनिर्देशनमेवालम्।

## बाह्यदेशेषु भारतीयशैवधर्मप्रभावः

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ इति मनुस्मृति-वचनात् भारतीयज्ञानस्यातिप्राचीनकालादेव गौरवात्तत्रत्या जना विभिन्नदेशेषु गत्वा जीवलोकानां हितकामनया स्वधर्मस्य प्रचारमकुर्वन्। वैदिक-रामायण-महाभारतादिसभ्यताया इतः सुदूरस्थितेषु देशेषु पुष्कलः प्रचारोऽजायत इति तत्र तत्राभिलेखैः शिलालिखैर्वावगम्यते। भारतवर्षस्यान्यसूदूरवर्तिभिः यूरप-अमरीकाप्रभृतिद्वीपैस्सार्द्धमेव विशेषतः पूर्वदिक्स्थितैर्देशैरुत्तरदिक्स्थदेशैश्चीनादि-भिश्च संश्लिष्टो व्यापारसम्बन्ध आसीदिति जानन्त्येवैतिहासिकाः। किञ्च, पूर्ववर्तिदेशेषु प्राक्तनकालादेव प्रवासिभारतीयानां संख्या प्रवाहमिव गच्छति स्म, तत्र तत्र हिन्देशिया, मलयेशिया, ब्रह्मा, थाईलैण्ड, सिंगापुर, श्याम, जावाप्रभृति-

देशेषु ते गत्वा तत्रैव न्यवसन् । एषां देशानां भारतवर्षेण सह गहनसम्बन्धेन भारतीयसंस्कृतेः दर्शनस्य च तत्र प्रभावाः निपतिताः । एषु प्रभावेषु तत्र शैवधर्मस्य प्रभावोऽप्यजायत । तत्र शैवधर्मप्रभावस्य का स्थितिरासीदिति कतिपयैः प्रमाणै-रेतत्साधयितुमुत्सहे ।

## नेपालदेशे शैवधर्मस्वरूपम्

भारतवर्षेण सम्पृक्ता नेपाल, तिब्बत, ब्रह्मा, सिंहलद्वीप (श्रीलङ्का) प्रभृतयः पूर्ववर्तिनो देशा अशोककालत एवैतद्देशप्रभावात् बौद्धधर्मप्रधाना अजायन्त । तत्र नेपालदेशं परिहृत्य यत्र च पुनर्ब्राह्मण (वैदिक) धर्मस्य प्रभावोऽजायत, सर्वे देशा-स्तावत् कालादारभ्याधुनापि बौद्धधर्मप्रधाना एवावतिष्ठन्ते । नेपालदेशे वैष्णव-शैव-महायानबौद्धसम्प्रदायाश्च दीर्घकालं यावत् तत्र प्रचलिता अभूवन् । चीनदेशीयो यात्रिणो 'ह्यूनसांग' कालं यावन्नेपाले इयमेवासीत्स्थितिः । परं शनैः शनैस्तत्र शैव-वैष्णवमतानां प्रभावादेव स धर्मस्तत्र स्थितः, बौद्धधर्मश्च ततोऽपगतः । शाक्तमतस्यापि तत्र नेपाले शैवमतप्रसारकालादेव प्रभावः समापतितः । अद्यत्वे नेपालदेशे देव्या बहूनि मन्दिराण्यवाप्यन्ते, तेषु भाटग्रामस्थो 'देवीभवानी' इत्याख्यं मन्दिरमतीवमनोहरं वर्तते । तिब्बते प्रभूततराणि शिवमन्दिराण्यवाप्यन्ते, तथा च तत्र शिवबुद्धयोर्मन्दिरद्वारेषु गणेशमूर्तयः प्राप्यन्ते । इतः पूर्वं हिन्दचीने ततः पूर्ववर्तिस्थानेषु च वहुप्राचीनकालत एव शैव-शाक्तधर्मस्य प्रचारोऽजायत । एतत्प्रमाणान्यपि तत्र भूयस्त्वेन प्राप्यन्ते । इमानि च प्रमाणानि शिलालेखेषु, प्रासादेषु, भित्तिचित्रेषु च विशेषतः प्राप्यन्ते । सर्वतोऽधिकानि प्रमाणानि हिन्दचीनभागस्य चम्पा-कम्वोजप्रदेशेषु ईशायाः ख्रीष्टाब्द्या प्रथमशतकादारभ्यैव लभ्यन्ते ।

हिन्द-चीनप्रान्ते शैवमतस्योल्लेखः सर्वस्यादौ चम्पाप्रान्ते 'चो-दिन्ह' शिला-लेखे दृश्यते । तथा च सः शिलालेखः—

"नमो देवाय । भद्रेश्वरस्वामीप्रसादात् अग्नये त्वा जुष्टं करिष्यामि धर्म महाराज श्रीभद्रवर्मणो यावच्चन्द्रादित्यौ तावत्"—इत्यादयः[१] ॥

चतुश्शतख्रीष्टाब्दकालं यावदत्र प्रान्ते शैवधर्मस्य दृढ़तरप्रचारोऽजायत, तदानीन्तनशाशकोऽपि तद्धर्मस्यानुयायी आसीत् । अत्र विशेषतोऽवधेयमिदमेव यदत्र शिलालेखे उपासनस्य यद्रूपं निरूपितं तन्न पौराणिकं न वा रामायणीयं महा-भारतीयञ्च किन्तु वैदिकन्तत् । अत्र शिलालेखे यज्ञस्यैकस्योल्लेखो यच्च राज्ञा भद्र-वर्मणा शिवोपासनार्थं कृतम् । मन्ये, तद् वैदिककर्मकाण्डमिव आसीत्, शिलालेखस्य भाषापि वैदिकमन्त्रान् स्मारयति । एभिः प्रमाणैस्तदानीन्तत्र वैदिकधर्मस्य प्रभुत्वमासीदिति संभवति ।

१. चोदिन्हशिलालेखः ४०० ख्रीष्टाब्दशतकस्य ।

## चम्पाद्वीपे शैव धर्मस्वरूपम्

भारते धर्मस्वरूपपरिवर्तनस्य प्रभावः सुदूरवर्तिष्वेषु देशेष्वपि निपतितः। अत्रैव चम्पा प्रदेशस्यैकस्मिन् शिलालेखे भगवन्तं शिवं भगवतीं शिवां च महेश्वर-शब्देन उमाशब्देन च व्यवह्लितवान् शिलालेखकारः। अत्रैव शिलालेखे ब्रह्मा-विष्ण्वोश्चोल्लेखोऽजायत। तथा हि—

'सिद्धं नमो महेश्वरम् उमां च प्र·····ब्रह्माणं विष्णुमेव च[१]'

ख्रीष्टाब्दस्य पञ्चमान्तशतकादारभ्य षष्ठशतकस्यारम्भकाले अत्रत्य शैवसम्प्रदायस्य स्वरूपं भारते पुराणकाले यादृशमासीत्तथैवागन्तव्यम्। तत्सामयिकस्य राज्ञः शम्भुवर्मणो 'माइसोन' इति शिलालेखे जगतः कारण-पालक-संहर्तृत्वेनैकं शुद्धं सर्वश्रेष्ठं सर्वज्ञश्च शिवस्वरूपन्निरूपितम्। यादृशं हि पुराणेषु वर्णनं तादृशमेव हीदं वर्णनमपि। यथा––

स्थित्युत्पत्तिप्रलयवशिनः शूलिनः समराणां·········
कृत्स्नं वेत्ति त्रिभुवनगुरुकारणं स्थाणुरेव[२]।

षष्ठशतकस्योत्तरार्द्धे प्रकाशवर्मणोः शिलालेखैः प्रतीयते यदैतद् कालं यावत्तत्र देशे लिङ्गोपासनस्य भूयस्त्वेन प्रचारो जातः, राज्ञाऽप्येकस्मिन् शिव-मन्दिरे शिवलिङ्गस्य प्रतिष्ठां चक्रे। अस्य राज्ञः शिलालेखे शिवः परब्रह्मरूपेण दृश्यमानजगतः कारणत्वेन च निरूपितः। तथा हि––

स्वाः शक्तिः प्रतियोग्यतामुपगतः क्षित्यादयो मूर्तयो,
लोकस्थित्युदयादिकार्यपरता ताभिर्विना नास्ति हि।
यो ब्रह्माविष्णुत्रिदशाधिपादिसुरासुरब्रह्मनृर्षिमान्यः,
तथापि भूत्यै जगतां नृत्यति श्मशान भूमावतिचित्रमेतत्[३]॥ इति।

अत्र शिलालेखे भगवतः शिवस्य कापालिरूपं निरूपितम्। यो हि भगवान् परमेशः ब्रह्मविष्णुप्रभृतिभिर्दैवैर्वन्द्यमानः स कथन्नामाशिववेशं दधाति? अत्रापि परमेशितुः शिवस्य शिवात्मिका लोकमङ्गलकारिणी इच्छैव कारणमिति शिलालेखकर्तुराशयः। अस्यैव शिलालेखस्याविरदूस्थैकस्मिन् प्रस्तरपीठे एकोऽपरोऽपि लेखःप्राप्तः, यस्मिन् किल धनाधिपकुबेरस्य शिवशखित्वेनोल्लेखः। पार्वतीं प्रति कुबेरस्य कदाचित्कुदृष्ट्या काणत्वमपि तत्र लेखङ्कने सम्वृत्तम्। तच्च यथा––

---

१. भद्रवर्मणो माइसोनशिलालेखः (पञ्चमख्रीष्टाब्दशतकस्य)।
२. शम्भुवर्मणो माइसोनशिलालेखः (षष्ठख्रीष्टाब्दशतकस्य)।
३. प्रकाशधर्मणो माइसोनशिलालेखः (षष्ठख्रीष्टाब्दशतकस्य)।

महेश्वरसखस्येदं कुवेरस्य धनाकरम् ।
प्रकाशधर्मा नृपत्तिः पूजास्थानमकल्पयत् ।।
एकाक्षिपिंगलेत्येष देव्या दर्शनदूषितः ।
संवर्धयत्वीशधनं पायाच्चाहि ततः सदा[1] ।। इति ।

एवं हि विक्रान्तवर्मणो 'माइसोन' शिलालेखे यस्योल्लेखकालः (६८७ ई०) सप्तासीत्युत्तरषष्ठशतकन्निगद्यते, तत्र खलु शिवस्याष्टमूर्तय उल्लिखिता सन्ति । तथा हि—

'ईशानस्याष्टमूर्तिः क्षतमभिलषितं रुप्यकोषेन्दुनादो.....[2]' इत्यादयः । इत्थं हि बहुविमर्शेनेदमेव प्रतिफलति यद् भारते यादृशं हि शैवधर्मस्य परिवर्तनं परिवर्धनं च तदा जातं तादृशमेव तत्रापि सुदूरेषु पूर्वदेशेष्वप्यजायत ।

ख्रीष्टाब्दस्य सप्तमशतकस्याभिलेखेष्वपि चम्पादेशे शैवधर्मस्य पूर्णप्रभुत्वस्य पुष्कलानि प्रमाणान्युपलभ्यन्ते । अतो विक्रान्तवर्मणो 'माइसोन-शिलालेखे' शिवस्य वाहनत्त्वेन वृषभस्योल्लेखः, उपमन्योस्तपसा शिवाशीर्वादस्य चोल्लेखस्तत्र सम्वृतः । तथा हि—

लोकानां परमेश्वरत्वसमं यतो नद्द्वाहनो.....
भुंक्तेऽद्याप्युपमन्युरिन्दुधवलं क्षीरार्णवं बान्धवैः ।.....
अष्टार्धब्रह्मधुर्यं सकलसुरमयस्य नन्दनं विष्टपानाम्[3] ।। इत्यादयः ।

अस्य शिलालेखस्य लेखनं कस्मिन् कालेऽभूदिति निश्चयेन न वक्तुं शक्यते, परं सप्तमख्रीष्टाब्दशतकमेवास्य कालः सम्भाव्यते । विक्रान्तवर्मणोऽनन्तरं 'विक्रान्तवर्मा द्वितीयो' राजा बभूव, सोऽपि शैवधर्मसमुपासक आसीत् । तस्य शिलालेखस्याष्टमख्रीष्टाब्दशतस्यारम्भकालोऽस्ति । तत्र च ब्रह्मविष्णवोश्च श्रेष्ठः शिव एव प्रदर्शितः । अस्मिल्लेखे ताभ्यां प्रतिनिधिदेवाभ्यां शिवचरणयोर्वन्दनं तत्र चित्रितम् । अष्टमशतकस्योत्तरार्द्धस्य राज्ञः 'सत्यवर्मणः' पो-नगरस्य शिलालेखे प्रथमं मुखलिङ्गानामुल्लेखोऽजायत । किञ्च, दैव्या गणपतेश्च प्रतिमयोस्तत्रोल्लेखः सम्वृत्तः । एतेनावगम्यते यदत्र एतत्कालं यावत् सगणस्य शिवस्योपासनस्य विधयः प्रचलिता अभूवन्निति ।

नवमईशवीयशतके 'ग्लाई लामोव' स्थाने राज्ञ 'इन्द्रवर्मणः' शिलालेखे त्रिपुरदाहस्योल्लेखोऽजायत । सितभस्मप्रभावसंवलितस्त्रिनेत्रश्च शिवो भक्ताननुरञ्जयति, ज्वलितेन तृतीयनेत्रेण हुङ्कारयुक्तेन पापान् विनाशयति, मृताश्च शिवभक्ता रुद्रलोकमधिगच्छन्ति इति सर्वत्र शिलालेखे लिखितम् । तथा हि—

१. प्रकाशधर्मणो माइसोनपीठिकालेखः ( षष्ठख्रीष्टाब्दशतकस्य )
२. विक्रान्तवर्मणो माइसो० शि० ( ६८७ शतकस्य )
३. तत्रैव—सं० २ ।

'अथ कालेन महता शम्भोः शक्तिपरायणात् ।
कीर्त्या च धर्मेण सता रुद्र लोकमगान्नृपः..... ।।

इत्युक्त्वा "जयति महासुरपुरत्रयावमर्दनविविधविक्रमोऽपि सितभस्मप्रभावयोगादिजपहुङ्कारनिर्मलतटशरीरप्रदेशश्च..... ज्वलितनेत्रत्रयज्योत्स्नो..... [१]" इत्याद्युक्तम् ।

नवमख्रीष्टाब्दशतकस्यैकस्मिन् शिलालेखे एकस्य शासकस्य निर्देश इत्थं जातो येन जैनशैवयोः समानरूपेण साहाय्यं कृतमिति सिद्धयति[२] । पूर्वप्रान्तानामेषां धार्मिकी सहिष्णुता सदैवादर्शोपस्थापिका समजनीत्यत्र शङ्कालेशो नास्ति । एवमेव नवमख्रीष्टाब्दशतकस्यैव 'इद्रवर्मणः' तृतीयस्य 'जयसिंहवर्मणः' प्रथमस्य शिलालेखा अपि प्राप्यन्ते । 'इन्द्रवर्मणः' तृतीयस्य शिलालेखे मुखलिङ्गानामुल्लेखो जातः, तत्रैव लेखे शिवसहचर्य्या देव्या अप्युलेखो जातः । तत्र हि—

श्रीमहालिङ्गदेवोऽयं स्थापितस्तेन तत्पितुः ।
स्थापिता च महादेवी श्रीमती मातरिप्रिया[३] ।। इत्याद्युक्तम् ।

दशमख्रीष्टाब्दशतकस्यारम्भे 'जयसिंहवर्मणः' प्रथमस्य 'वाङ् इयान्ह' शिलालेखे किञ्चिद् वैशिष्टयं दृश्यते । तत्र हि सुरभारत्या सार्द्धमेव तद्देशीय-( चम्पा ) भाषायामपि लेखोऽस्ति । संस्कृतभागे 'गुहेश्वरे' त्युपाधिना शिवस्योपमा कृता, देशीयभाषायां च मन्दिरार्थं स्वापत्यदानाय प्रेरणाप्रदायकाः शब्दाश्च तत्र प्रयुक्ताः सन्ति ।

एवमेव ९०९ ईशवीयशतकस्यैकः शिलालेखो भद्रवर्मणो द्वितीयस्य प्राप्यते, तत्र 'लिङ्गपुराण' मिव 'लिङ्गमहिम्नो' वर्णनं दृश्यते । शिलालेखस्यान्ते 'त्रिमूर्तीना' मुल्लेखः, यत्र च शिवस्य दक्षिणपक्षे ब्रह्मा, वामपक्षे च विष्णुरवस्थितौ स्तः । तथा च—

ततश्च दक्षिणे ब्रह्मा संस्थितो वामतो हरिः ।
इत्येकत्वमिमौ येन लभते यदनुज्ञया[४] ।। इत्युक्तम् ।

अस्यैव भद्रवर्मणो राज्ञ अस्मिन्नेव शिलालेखे शिवो भस्मपुञ्जे समासीनश्चित्रितः, यत्र तं सर्वे देवा नमन्ति । अस्यैव कालस्यान्यस्मिन् शिलालेखे यश्च 'रुद्रवर्मणः' तृतीयस्यास्ति, मदन-दहनकथां प्रति सङ्केतस्तत्र दत्तः । अस्य

---

१. इद्रवर्मणः ( प्रथमस्य ) ग्लाई-लामोवशिलालेखः ( ८०२ ईशवीयशतकस्य ) ।

२. निहारौ देवकुलौ द्वौ द्वे जिन शंकरस्योस्तयोः ।
( वकुलशिलालेखः, ८२९ ईशवीयशतकस्य ) ।।

३. इन्द्रवर्मणस्तृतीयस्य बो-मन्दशिलालेखः ( ८८९ ख्रीष्टाब्दशतकस्य ) ।

४. भद्रवर्मणो द्वितीयस्य हो–क्वे शिलालेखः ( ९०९ ईशवीयस्य ) ।

कालस्यैव इन्द्रवर्मणस्तृतीतस्य 'न्हन-विअं' शिलालेखे एकेन राज्यकर्मचारिणा तत्पुत्रेण चादौ शिवलिङ्गप्रतिष्ठापनस्य ततश्च ताभ्यामेव अवलोकितेश्वरस्य बौद्धविहारस्य स्थापनायाश्च तत्रोल्लेखः सम्वृतः। इत्थं हि नवम-दशमैकादश-शतकादौ अत्र प्रदेशे शैवधर्मस्य सम्यक् प्रभावो दृश्यते।

१०५० ईशवीयशतके 'परमेश्वरवर्मणः' प्रथमस्य शिलालेखेऽत्र प्रान्ते शक्ति-पूजायाः प्रभावो दृश्यते। अत्र लेखे जगदाम्बिकायै 'पराशक्ति' इति शब्दव्यवहारेण ततोऽभिन्नः शिवः निर्दिष्टः। सा 'चम्पु' नगरस्याधिष्ठात्रिदेवीति तत्र व्यवह्रितम्। तद्यथा द्रष्टव्यम्—

> या देवी सा श्रीमलदाकुठारा-
> रव्या शं हर मम तस्य भार्या।
> व्याप्नोति यो निखिलवस्त्वशुभं शुभं वा।
> नो लिप्यते रविरिवेद्धकला तदीया।
> देवो च चम्पुनगरप्रथिताभिधाना।
> या सा नताभिमतदा मम शं कुरु त्वम्[1]॥

इदं स्थानं हि देव्युपासनायाः प्रसिद्धतममासीदिति लेखेन प्रतीयते। अतश्चम्पाप्रदेशे शिवशत्युपासनायाः प्रभूतरः प्रभावो लक्ष्यते।

द्वादश-त्रयोदशईशवीयशतकेषु तादृशमेव शैवधर्मस्य स्वरूपं दृश्यते यादृशं पूर्वमासीत्। ११६३ तमस्य राज्ञ 'इन्द्रवर्मणश्चतुर्थस्य' माइसोन—मन्दिरस्यैक-स्मिन् शिलालेखे शिवस्य चतुर्मुखस्य पञ्चमुखस्य चोल्लेखः। अस्यैव राज्ञ अन्यस्मिन्नत्रत्यलेखे यश्च पूर्वलेखानन्तरं लिखितः, सः शिवस्तुत्या प्रारभते, परमत्र राज्ञा 'लोकेश्वरस्य' देव्या जयइन्द्राश्वयाश्च स्थापनाया लेखनं जातम्, अग्रिमे च वाक्ये राजानं शिवभक्तमिति संज्ञया विभूषितम्। एतनेदं प्रतिभाति यदत्र बौद्धशैवयोर्मिथो विद्वेशो नासीत्, राजानश्चाविशेषेण सर्वधर्माणां संरक्षका भवन्ति स्म। एवं हि बहुविमर्शेनेदं सम्यक् प्रतिफलति यद् तत्रत्यदेशे बहुकालादारभ्य ईशवीयाष्टादशशतकं यावत् शैवधर्मस्य पूर्णः प्रभावस्तत्रासीत्। इदानीमपि तत्रत्य गृहाणि मन्दिराणि चातीतस्य शैवधर्मस्यानरूपं गीतं गायन्ति।

इत्थं हि हिन्द-चीनभागस्य धार्मिकपरिस्थितेर्ज्ञानं शिलालेखैरेव जायते। ये खलु तत्रत्याः प्रासादाः, अन्यानि च पुरातात्त्विकप्रमाणानि तत्रत्त्यानि, तैस्तेषां शिलालेखानामेव पुष्टिर्भवति। यदा च वयं चम्पादेशात्पूर्वं गच्छामस्तदाऽस्मभ्यं ज्ञानाय प्रमाणभूतानीमान्येव भवनानि प्रतिमाश्च भवन्तीष्टसाधकानि। अद्यापि तत्रैतादृशानां शिलालेखानामभावो नास्ति। एतादृशेषु द्वीपसमूहेषु यवद्वीप (जावा)

१. परमेश्वरवर्मणः प्रथमस्य पो-नगरमन्दिरस्य शिलालेखः ( १०५० ईशवीयः )।

एव प्रमुखतां भजते। अतश्चम्पादेशादनन्तरमत्र यवद्वीपस्य धार्मिकस्थितिविषये विविच्यते किञ्चिद्—

## यवद्वीपे शैवधर्मस्वरूपम्

यवद्वीपे बहोः कालात्पूर्वमेव ब्राह्मणधर्मस्य प्रभाव आसीत्। पञ्चमख्रीष्टशतके यदा चीनीयो यात्री 'फाह्यान' तत्रागच्छत् तदा ब्राह्मणधर्मस्यैव प्रभूततरः प्रभावस्तत्रापश्यत्। तस्यैव यात्रासंस्मरणशब्देषु बौद्धमतस्य तत्र प्रभावो लेशतोऽपि नासीत्[1]। सप्तमख्रीष्टाब्दशतके 'तुकमस' स्थाने एकस्मिन् शिलालेखतले शैव-वैष्णवचिह्नानि दृश्यन्ते। तत्र मध्ये यवद्वीपे 'तजांगल' स्थाने अगस्त्यगोत्रस्यैकेन ब्राह्मणेनैकस्य शिवमन्दिरनिर्माणस्य कथोल्लेखः। इदं हि मन्दिरं 'भारतीय कुंजररकोण' स्थाने निर्मितं मन्दिरमिव निर्मितम्। एतेनेदं सुस्पष्टं कल्प्यते यद् तदानीं दक्षिणभारतेन सह यवद्वीपस्य प्रगाढतरः सम्बन्ध आसीत्।

यवद्वीपे शैवमतप्रचारस्य प्रथमं प्रमाणं 'दिएंगउच्चसमस्थल' स्थाने सप्तमशतकस्यानेकानि शिवमन्दिराणि सन्ति। तेषामाकृतयो दक्षिणभारतीय 'पागोडा' इव सन्ति। एषु 'चण्डीश्रीखण्डी' मन्दिरस्य मूर्तिषु शिवब्रह्मविष्णुमूर्तीनामङ्कनं जातम्। अष्टमशतकस्योत्तरार्द्धस्य नवमशतकस्यारम्भस्य वा 'चण्डी बनोना' ख्यमेकं मन्दिरं शिवस्यान्यदस्ति, यस्मिन् किल शिव-ब्रह्म-विष्णुमूर्तीनामुत्कीर्णनं गणपतिचित्राङ्कनेन सहैव जातम्। अत एतत्कालं यावदत्र गणेशोपासनस्य प्रचलनमप्यजायत। अस्मिन्नेव देवालयेऽगस्त्यस्य महर्षेः प्रतिमैकाऽस्ति, यस्या नामकरणं कल्पान्तरे 'शिवगुरुः' इति पदेनाभवत्। यवद्वीपे अयमेव शैवधर्मस्य प्रचारमकरोदिति मान्यता प्रतिफलति। अस्मिन् काले अगस्त्यगोत्रोद्भवेन केनचिद् ब्राह्मणेन तत्र यवद्वीपे शिवमन्दिरं निर्मापितम्, तस्मिन्नेव काले तेन तत्र शक्तिमन्दिरमप्येकं स्थापितम्, यस्मिन् दुर्गामूर्तिः प्रतिष्ठापिता, सा च प्रतिमा इदानीं 'हालैण्ड' देशस्य 'लीउन' नगरस्थसंग्रहालये वरीवर्ति। सर्वविधशस्त्रैः सज्जिताया अष्टभुजाया दुर्गायाः प्रतिमैषा परमरमणीया। एतेन तत्र अष्टम-नवम-ईशवीयशतकयोः शक्त्युपासनस्य यवद्वीपे प्रचलनं कल्प्यते।

यवद्वीपे सर्वप्राचीनं शिवमन्दिरं 'चण्डी लो-रो-जंगरंग,'' इत्याख्यं वर्तते। इदञ्च नवमशतकान्तस्य स्वगौरवाय इत्यनेन प्रसिद्धं प्रसिद्धबौद्धवैभवस्य 'बोरोबुदूर' इत्यनेन तुल्यमस्ति। अत्र मध्यस्थं शिवमन्दिरम्, उद्यच्छिवप्रतिमायाश्चत्वारो भुजा वर्तन्ते। अष्टभुजा दुर्गा महिषासुरवधरता चित्रिता। अद्याप्यस्याः प्रतिमायाः पूजा भवति। एतत्कालिकी एकाऽपराऽपि कांस्यनिर्मिता शिवप्रतिमा प्राप्ता या चाधुना 'एक्सेनस्य' संग्रहालये वर्तते। अस्यां प्रतिमायां शिवस्त्रिनेत्र-

१. फाह्यान :—यात्राऽध्यायः—४०।

श्चतुर्भुजः, कमण्डलुपाणिः, भुजासु सर्पैर्वेष्टितोऽङ्कितः। एतेन योगिराजरूपस्य शिवस्य यवद्वीपे उपासनमासीदित्यवगम्यते निश्चयेन।

दशमैकादशद्वादशख्रीष्टाब्दशतकेषु यवद्वीपेऽऽसीत्प्रभूततरः शैवमतप्रचारः। यद्यप्यस्य कालस्य भवनादिकानि प्रायश एतादृशानि न प्राप्यन्ते, येन तदानीन्तत्र शैवधर्मप्रचारः प्रमाणितो भवेत्, तथापि त्रयोदशशतके प्रमाणानां भूयस्त्वेन प्राप्तेः सत्वात् शैवधर्मस्य प्रचुरता सम्यगासीदित्यवगम्यते। यवद्वीपस्य पूर्वभागे 'चण्डीकिदन' नाम्न एकं शिवमन्दिरं प्राप्यते येन पूर्वभागेऽपि तद्देशे शैवधर्म-प्रचार आसीदित्यवगम्यते। अस्मिन् काले भैरवरूपस्यैका प्रतिमा प्राप्यते, यत्र च दंष्ट्रैर्मुण्डमालाभिश्च श्वारूढो भैरवोऽस्ति। नैतादृशी प्रतिमा भारतेऽपि प्राप्यते। शिवस्याभिनवरूपस्यायं विकासो यवद्वीपे दृश्यते। शिवगणपतिमूर्तीभ्यां सहैवैकस्या महिषमर्दिन्याः प्रतिमा अपि प्राप्यते। एतेनैतद्रूपस्य यवद्वीपे विशेषतः पूजा-प्रचलिताऽऽसीदित्यवगम्यते।

यवद्वीपे त्रयोदशशतके 'मजफिट्' साम्राज्यस्याभिवृद्धिः श्रूयते। प्रख्यातः सम्राट् 'कृतनगरः' अस्यैव वंशस्य लब्धप्रतिष्ठः समभवत्। साहित्यस्य कलायाश्चा-श्रयप्रदाताऽयं सम्राट् तन्त्रमार्गे दीक्षितस्तान्त्रिकविचारेष्वपि सम्पन्नः। अत्र द्वीपे पुराकालत एव बौद्ध-शैवमन्दिराणि सहैव निरमीयन्त। उभौ लब्धप्रतिष्ठा-कावजायताम्। तात्कालिके एकस्मिन् ग्रन्थे बुद्धाभिन्नः शिवश्चित्रितः[१]। अत्र द्वीपे शिवे बुद्धे च तत्त्वतोऽभेद एव दृश्यते।

चतुर्दशईशाशताब्द्यां 'सिम्पिङ्ग' स्थाने शिवविष्णवोः संयुक्तैका प्रतिमा प्राप्ता, येन शैववैष्णवधर्मयोः परस्परमभिन्नत्वं संगच्छते। तत्रैव स्थले सौम्य-रूपाया देव्या अप्येका प्रतिमा प्राप्ता, एतादृशी च प्रतिमा अद्यापि प्रायो दुर्लभ-तमेति शम्।

## बालि-सुमात्राद्वीपेषु शैवधर्मस्य स्थितिः

बालिद्वीपे शैवधर्मप्रचारविषये प्राक्तनाभिलेखाभावात् निश्चयेन काल-निर्धारणं न कर्तुं शक्यते। निश्चयेनैतद् विषये नवमशतकादनन्तरं प्रमाणान्यु-पलभ्यन्ते। एतैः प्रमाणैः प्रायो वक्तुमिदं शक्यते यद् हिन्द-चीन, चम्पा, यवद्वीपेषु च प्रचलितस्य शिवाराधनस्येव बालिद्वीपेऽपि भारतीयसंस्कृतेः प्रभावः प्राक्तनकालत एव समजनि। अत्र द्वीपे शिवस्य सर्वप्राचीनप्रतिमा अष्टमख्रीष्टाब्दशतकारादभ्य दशमईशवीयशतकस्यान्तं यावत् प्राप्यते, या च चतुर्भुजा, रूपेण सौम्या अस्ति। एतदतिरिक्तं लिङ्ग-योनिमुद्राणां चिह्नानि भूयस्त्वेन बालि-द्वीपे प्राप्यन्ते, येन शैवधर्मस्य लोकप्रियता तत्रानुभूयते[२]।

१. 'सङ्गहिआंग कामहयनिकन' पुस्तके।

२. ष्टुटरहाइम-इण्डियन इन्फ्लुएन्स आन ओल्ड बालिनीज आर्ट--पृष्ठ ३०।

पुरातत्त्वाभिलेखादतिरिक्तः साहित्यिकाभिलेखोऽपि बालि-द्वीपे प्राप्यते। एषु शिव-दुर्गा-गणेशादिदेवानां स्तुतयः प्राप्यन्ते, याश्च भारतीयपुराणपथम-नुसरन्ति। एतैः प्रमाणैर्बालि-द्वीपे शैवधर्मप्रचारस्य स्थितिः सम्यक् प्रस्फुटति। यैर्ग्रन्थप्रमाणैस्तत्र शैवधर्मस्थितिः साध्यते तेषां संकलनं फ्रान्सदेशीयः प्रसिद्धो-विद्वान् 'श्रीलेवी' चकार[1]।

एवं हि पूर्वीयद्वीपमण्डलेषु मलयप्रायद्वीपेषु च शैवधर्मविस्तारस्य स्थिति-स्तत्रत्याभिः शिव-शक्ति-गणेशमूर्तिभिराकलयितुं शक्यते। सुमात्राद्वीपं परिहृत्य अन्यद्वीपेष्वभिलेखानां न्यूनतया क्रमबद्धस्य तत्र शैवैतिह्यस्य विवरणमशक्यम् दातुम्। सुमात्राद्वीपे च हिन्द-चीनभागे चम्पा-यवद्वीप-बालिद्वीपानामिव शैवधर्मस्य बहोः कालात् प्रभावोऽवगन्तव्य इति विभावनीयं सुधीभिः।

१. लेवी—संस्कृत टेक्सट्स् फ्रॉम बालि।

# द्वितीयोऽध्यायः

## नागेशाभिमतः सृष्टिप्रक्रियायाविमर्शः

'सृज्'धातोः कर्माणि क्तिन् प्रत्यये कृते सृष्टिपदं दृश्यप्रपञ्चपरमिति संपद्यते। प्रकर्षेण प्रथमतो वा क्रिया प्रक्रियेति। तत्र यद्यपि दर्शनेष्वात्मतत्त्वस्य चर्चैव प्राधान्येन भवति, तथापि तदुपयोगितया सृष्टिविचारस्यावश्यकताऽपि समापतत्येवेति विचिन्त्य नागेशभट्टेनवैयाकरणसिद्धान्तलघुमञ्जूषाग्रन्थे सृष्टिप्रक्रियाया वर्णनं कृतम्। तत्र वाक्यपदीयग्रन्थे सृष्टिप्रक्रियाया यद् वर्णनं समुपलभ्यते तदेव शाब्दिकनये सिद्धान्तरूपेण अनादिनिधनं व्यापकं चिद्रूपं वेदान्तवेद्यं ब्रह्म 'वाग् वै ब्रह्म' इत्यादि श्रुतिबलेन शब्दरूपतयाऽभ्युपेत्य तत्र जगतो विवर्तोपादानत्वमेवाविद्याशक्तिसहकृतकालशक्तेश्च सहकारित्वं स्वीक्रियते।

नागोजिभट्टास्तु वैयाकरणलघुमञ्जूषाग्रन्थे शक्त्याश्रयनिरूपणे यादृशं सृष्टिप्रक्रियाया वर्णनं विहितन्तदुच्यतेऽग्रे—

'प्रलये नियतकालपरिकानां सर्वप्राणिकर्मणामुपभोगेन प्रक्षयाल्लीनसर्वजगत्का माया चेतने ईश्वरे लीयते। लयश्चायमपुनः प्रादुर्भावफलको नात्यन्तिको नाशः, उत्तरसर्गानुपपत्तेः। नाऽपि सर्वथाऽभानम्, प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः। किन्तु सुप्तेव तिष्ठति, कार्यप्रवृत्यभावात्। स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद् बलाद् भासमानाप्यभातप्रायैवेति।

अत्र प्रलयशब्दस्य टिप्पण्यां रत्नप्रभाकृता महामतिना महामहोपाध्याय पं० सभापतिशर्मोपाध्यायमहोदयेन च—

प्रलयो नाम-त्रैलोक्यनाशः। स च चतुर्विधः, नित्यः, प्राकृतः, नैमित्तिकः, आत्यन्तिकश्चेति। तत्र नित्यः प्रलयः सुषुप्तिः, तस्या सकलकार्य्यप्रलयरूपत्वात्। धर्माधर्मपूर्वसंस्काराणाञ्च तदा कारणात्मनाऽवस्थानम्। तेन सुषुप्तोत्थितस्य न सुखदुःखाद्यनुभवानुपपत्तिः, न वा स्मरणानुपपत्तिः। नन्वन्तः कारणस्यापि तदानीं कारणात्मनाऽवस्थानात् प्राणनक्रियाऽनुपपत्तिरितिचेन्न, अन्तःकरणे ज्ञानशक्तेः क्रियाशक्तेश्च सत्त्वेन तदानीं ज्ञानशक्तेर्नाशेऽपि क्रियाशक्तिवैशिष्ट्यसत्वात्। प्राकृतलयस्तु—कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यनाशः। यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्मसमाप्तौ विदेहकैवल्यन्तदा तल्लोकवासिनामपि तेन सह विदेहकैवल्यम्।

तदुक्तम्—

> ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे।
> परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम्[1]।। इति।

एवं तल्लोकवासिभिः सह कार्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डान्तर्वर्तिनिखिललोकान्तर्वर्तिस्थावरादीनां भौतिकानां भूतानाञ्च प्रकृतौ मायायां लयः। कार्यब्रह्मणो दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयो नैमित्तिकः प्रलयः। ब्रह्मदिवसश्चतुर्युगसहस्रपरमितः कालः प्रलयकालो दिवसकालपरिमितः। तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्ष इत्यादिना प्रतिपादितम्।

पुनश्च मञ्जूषायाम्—ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। इदमेवशक्तितत्वम्। तस्य बिन्दोरचिदंशो बीजम्, चिदचिन्मिश्रोंऽशो नादः। चिदंशो बिन्दुरिति। अचिच्छशब्देन शब्दार्थोभयसंस्काररूपा अविद्योच्यते।

अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयम्, वर्णादिविशेषरहितम्, ज्ञानप्रधानम्, सृष्ट्युपयोग्यवस्थाविशेषरूपम्, चेतनमिश्रम्, नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव 'रव' 'परा' आदिशब्दैर्व्यवह्रियते—

> 'बिन्दोस्तस्माद् भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत्।
> स एव (रवः) श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते[2]।।

इत्युक्तेः। एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते। ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः, तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दम् 'परावाग्' इत्युच्यते। तदुक्तं हरिणा—

> अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
> विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[3]।। इति।

एवं ह्यस्याः पराख्यवाच एव पश्यन्त्यादिक्रमेण स्थूलशब्दा उत्पद्यन्ते। तत्र मध्यमाशब्दाः स्वमात्रश्रव्याः, वैखरीशब्दास्तु परश्रव्या अपीत्यादिरूपेण शब्दसृष्टिः स्फुटमुक्तं लघुमञ्जूषायाम्। अर्थसृष्टिस्तु पूर्ववदेव बोध्या। यतश्चैतन्मतेऽपि पराख्यवाचः सर्वशब्दतदर्थोभयोपादानत्वं स्वीकृतमेव वैयाकरणसिद्धान्त-लघुमञ्जूषायाम्।

---

१. कूर्मपु०—अ० १२। २. प्रपञ्चसा० तं०—१।४३। ३. वा० प०—१।१।

## नागेशाभिमतसृष्टिप्रक्रियायास्तान्त्रिकसृष्टिप्रक्रियात्वम्

तत्र यश्चोपर्युक्ता महामहिमनागेशोपाध्यायानुमता सृष्टिप्रक्रिया न सा वाक्यपदीयाऽनुगता, अपितु तन्त्रालोक-तन्त्रसार-प्रपञ्चसार-शारदातिलकादितन्त्रग्रन्थानुमोदितैवेति क्रमेण संक्षेपेण चैकैकं निरूप्यते।

तन्त्रशास्त्रानुसारी चायं सृष्टिक्रमो यथा सूर्याभिमुखदर्पणे तदन्तः प्रविष्टकिरणादुभयकिरणसंकलनारूपस्तेजो बिन्दुविशेषः कुड्यादौ प्रादुर्भवति, तथा प्राप्तादृष्टवशात् स्वान्तः संहृतविश्वसिसृक्षया प्रकाशरूपं ब्रह्म स्वीयां शक्तिमवलोकयितुं तदभिमुखीभूय तदन्तस्तेजो रूपेण प्रविश्य शुक्लबिन्दुभावमयते, ततस्तस्मिन् बिन्दौ रक्तरूपा शक्तिः प्रविशति। तेषां संमिश्रो विन्दुरुच्छूनो भवति, स च बिन्दुः समष्टिरूपेणैको व्यष्टिरूपेण दौ भवतः, तत्र शुक्ल इन्दुः, रक्तोऽग्निरिति बिन्दुद्वयात्मकत्वाद् विसर्ग इति च व्यवह्रियते। तत्र समष्टिबिन्दो रवित्वम्। एवं च कामाख्यो बिन्दुः, विसर्गः, हार्धकला (हार्दकला) चेति त्र्यवयवक एकः पदार्थोऽणादिप्रत्याहारवत् 'कामकले' त्युच्यते। इदमेव च समस्तसृष्टिबीजम्। एतन्मूलभूतं ब्रह्म तुरीयं बिन्दुरित्युच्यते। इयमेव प्रकाशविमर्शमयी पराशक्तिः पञ्चभूतात्मिका निरन्तरं वृद्धिद्वारा पञ्चदशसंख्याकमात्राक्षरतिथ्यभिमानदेवतास्वरूपिणी संजाता। तत्रायं क्रमः—

'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः' इति रीत्या प्रकाशाख्य एक एव परमेश्वरः, तस्य शक्तिर्विमर्शाख्या, सा च पञ्चधा भवति। सैव अ इ उ ऋ ऌ इति पञ्चात्मना व्यवस्थिता। पुनरपि आ ई ऊ ॠ ॡ इत्येवं संकलनया दश। तत ए ओ ऐ औ अं इति पञ्चदश, विसर्ग इति षोडशस्वराः, कादयो पञ्चवर्गाः पञ्चविंशतिः। यरलवाश्चत्वारः, शषसहाश्चत्वारः, क्षकारेण सह पञ्चाशन्मातृकाः सम्पन्नाः।

एवं हि तन्त्रागमशास्त्रे भगवता परमशिवेनैवास्य नानाब्रह्माण्डजातस्य जगतः सृष्टिः समुत्पन्ना, पुनश्च तस्मिन्नेव विलीयते। शिवस्येच्छामात्रेणायं प्रपञ्चोऽभिव्यज्यते। तस्यां दशायामपीदं विश्वं तस्मादभिन्नमेव। तदुक्तम्—

यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः।
तथा हृदयबीजस्थः विश्वमेतच्चराचरम्[1] ॥ इति।

यद्यपि शिवः स्वतन्त्रस्तथापि सृष्टिदशायां सः पशुभावापन्नः स्वस्वातन्त्र्यशक्तिबलादेतच्चराचरं जगद्रचयति, नानारूपेषु चात्मानमभिव्यज्यते। यथा एको हि गगनस्थः सूर्योऽनेकस्थलेषु प्रतिबिम्बितो भवति तद्वदेव सोऽभिव्यज्यते।

---

१. श्रीतन्त्रा० भूमिका—आचार्यकृष्णानन्दसागरः, ४ पृ०।

सत्यामप्यस्यां स्थितौ परमशिवस्य मूलरूपे किञ्चिदपि विकारो नायाति, यश्च परिवर्तनमिवाभाति तन्निखिलं प्रतीतिमात्रविषयकमेव ।

परमशिवः स्वस्मिन् सदा पूर्णः, तदर्थन्न कंचिद् वस्तुनोऽपेक्षा । अत्रेयं जिज्ञासा जागर्ति यद् प्रपञ्चरहितः सदा शुद्धो बुद्धो निर्ममः शिवः सृष्टिप्रपञ्चे कथं प्रभवति ? कोऽत्र हेतुः ? किञ्च कारणम् ? अस्योत्तररूपेण महामहेश्वराचार्योऽभिनवगुप्तः प्रवदति श्रीतन्त्रालोके—विश्वं शिवस्य लीलाविलासभूमिः । तत्रानन्देन क्रीडार्थं लोकानुग्रहार्थञ्च सस्तत्र प्रभवति । तदुक्तम् —

विमलकलाश्रयाभिनवसृष्टिमहाजननी
भरिततनुश्च पञ्चमुखगुप्तरुचिर्जनकः ।
तदुभययामलस्फुरितभावविसर्गमयं
हृदयमनुत्तरामृतकुलं मम संस्फुरतात्[1] ।। इति ।

अत्र महामहेश्वराचार्यजयरथेन स्वविविवेकटीकायामुक्तम्—'मम आत्मनो हृदयं' जगदानन्दादिशब्दवाच्यं तथ्यं वस्तु, सम्यक् देहप्राणादिप्रमातृतासंस्कारन्यक्कारपुरःसरसमावेशदशोल्लासेन दिक्कालाद्यकलिततया 'स्फुरतात्' कालत्रयावच्छेदशून्यत्वेन विकसतादित्यर्थः । तच्च कीदृक् ? इत्युक्तं 'तदुभय' इति । 'तत्' आद्यार्धव्याख्यास्यमानं च तत् 'उभयं तस्य यामलम्—तयोर्यद्यामलं रूपं स संघट्ट इति स्मृतः' इति वक्ष्यमाणनीत्या शक्तिशक्तिमत्सामरस्यात्मा संघट्टः, ततः 'स्फुरितभावः' परानपेक्षत्वेन स्वत एवोल्लसितसत्ताको योऽसौ 'अत एव विसर्गोऽयमव्यक्त ह कलात्मकः' इत्युक्त्या कुलाकुलोभयच्छटात्मकहकारार्धार्धरूपो 'विसर्गो' बहिरुल्लिलसिषास्वभावः सः प्रकृतिर्यस्य तत् । अत एवाह 'अनुत्तरामृतकुलम्' इति' ।

एवञ्चाग्रे सः प्रतिपादयति—'इहाद्वयनये हि भगवानेव स्व स्वातन्त्र्यमाहात्म्यात् आभासमात्रसारतया स्वाव्यतिरिक्तमपि व्यतिरिक्तत्वेनेव जगत् आभासयति, इत्यनन्यापेक्षिणः स्वातन्त्र्यस्यैव जगद्वैचित्र्यनिमित्ततत्त्वमुक्तम्, अविद्यावासनादीनां भेदाभेदविकल्पोपहतत्वात् जगद् वैचित्र्यनिमित्तत्वाभिधानानुपपत्तेः । अत एव भगवतश्चिदाद्यनन्तशक्तिसंभवेऽपि तत्फुरणमात्रत्वात् तासां तस्या एव प्राधान्यात् इहाभिधानम्' इति ।

तथा च—

सृष्टिसंहारकर्तारं विलयस्थितिकारकम् ।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ।। इत्युक्तम् ।

१. श्रीतन्त्र०–१।१ ।

किञ्च--

स्वातन्त्र्यशक्तिः क्रमसंसिसृक्षा क्रमात्मता चेति विभोर्विभूतिः।

तदेव देवी त्रयमन्तरास्तामनुत्तरं मे प्रथयत्स्वरूपम्[1] ॥ इत्युक्तं श्रीतन्त्रालोके। एतेन भगवतः 'स्वातन्त्र्यरूपा शक्तिः' यस्यासौ अनन्तशक्तिर्भगवान् शिवः 'क्रमस्य' देशकालात्मनो विश्ववैचित्र्यस्य सर्गस्य सम्यग्भेदेन 'शिसृक्षा' जगत्सृष्टिनिमित्तं पारमेश्वरी इच्छाशक्तिः 'क्रमात्मता' भेदप्रधाना सती तत्तदनन्ताभाससंभिन्नं संकुचितात्मरूपं नरत्वम्, इत्येवं येयं नरशक्तिः शिवात्मिका 'विभोः' भगवतः परस्यानुत्तरस्य प्रकाशस्य 'विभूतिः' तत्तस्फुरणात्मत्वेन ऐश्वर्यं 'तदेव' क्रमेण तत्स्फारसारत्वात् समनन्तरोक्तस्वरूपं 'देवीत्रयं' परप्रकाशात्मकत्वात् 'अनुत्तरं' 'स्वं' सर्वकर्तृत्वादेरसाधारणं रूपं 'प्रथयत्' तत्तद् भेददशोदयेऽप्यतिरोदधत् ममात्मनः 'अन्तरास्ताम्' ऐक्यात्म्येन स्फुरतादिति व्याख्या सम्पद्यते।

यः खलु प्रकाशनक्रियायां कर्ता परप्रमात्रात्मानुत्तरशब्दाभिधेयः प्रकाशः सः सर्वस्य प्रमातृप्रमेयात्मनो विश्वस्य प्रकाशत्वं प्रकाशमानतां प्रयच्छति स्वात्मैकात्म्येनावभासयति। न हि विश्वं नाम प्रकाशमानत्वात्तदतिरिक्तं किञ्चित्सम्भवति। तदतिरेकाभ्युपगमे ह्यस्य प्रकाशमानत्वायोगाद् भानमेव न स्यात्। तदुक्तं ग्रन्थे —

यः प्रकाशः स सर्वस्य प्रकाशत्वं प्रयच्छति।
न च तद्व्यतिरेक्यस्ति विश्वं सद्वावभासते ॥
अतोऽसौ परमेशानः स्वात्मव्योमन्यनर्गलः।
इयतः सृष्टिसंहाराडम्बरस्य प्रदर्शकः[2] ॥ इति।

इह हि विश्वस्य वाच्यवाचकात्मना द्विधा अवभासः, तत्र 'प्रकाश एव प्राधान्येन वाच्यात्मविश्वरूपत्वेन परिस्फुरति' इति विश्वचित्प्रतिबिम्बत्वोट्टङ्कनेनोक्तम्। विमर्शोऽपि तत्तदनुत्तरानन्दाद्यामर्शात्मनोदेति इति परामर्शोदयक्रम उच्यते —

अकुलस्यास्य देवस्य कुलप्रथनशालिनी।
कौलिकी सा पराशक्तिरवियुक्तो यया प्रभुः[3] ॥ इति।

अयम्भावः—इह खलु पूर्णः शिवशक्त्यादिप्रतिनियतव्यपदेशासहिष्णुरनाव्यः परपरामर्शात्मा अनुत्तरः, प्रकाश एव परन्तत्त्वम्, स एवं च स्वस्वातन्त्र्याद्विश्वमवबिभासयिषुः प्रथमं शिवशक्तिरूपतां स्वात्मन्यवभासयति। एवं हि पूर्णपरसम्वित्तत्त्वलक्षणात् कुलात् यदन्यदवभासितं शिवलक्षणमकुलम्, तस्य प्रकाशैकरूपत्वेन द्योतमानस्य सा परा विश्वापूरणस्वभावा कुलस्य शाक्तप्रसरात्मनो जगतो यत्प्रथनं तेन शालते तच्छीला। अत एव कुले भवं अकुलात्मकौलं

---

१. श्रीतन्त्रा०—१।५। २. तत्रैव०–३।२-३। तत्रैव—३।६७।

तद्यस्यामन्तस्तादात्म्येनास्तीति 'कौलिकी शक्तिः', यया समनन्तरोक्तरूपः प्रभुरवियुक्तस्तदव्यभिचरितस्वभाव इत्यर्थः। एवं चाकारलक्षणं कुलं शरीरमस्य इत्याद्यवर्णोऽप्यभिहितः।

## श्रीतन्त्रालोकानुसारिसृष्टिक्रमः

तथा च तान्त्रिकसृष्टिप्रक्रियायाः विषयस्तन्त्रालोके भङ्ग्यन्तरेण निरूपितः। तत्र हि प्रकाशस्वरूपस्य बिन्दोः प्रकाशेनैव सर्वं प्रकाशते। तत आविर्भूतायाः पश्यन्त्यास्तस्मिन् विन्दौ प्रतिविम्बितत्वम्। यथा मुखस्य दर्पणे प्रतिबिम्बितत्वं तथाऽस्य शब्दस्य नभसि प्रतिविम्बमस्ति। यथा दर्पणसम्मुखीभावे एव मुखस्य तत्र प्रतिबिम्बं गृह्यते, तथैव यत्र श्रोत्राकाशस्य सान्निध्यं तत्रैव श्रोत्राकाशरूपे नभसि तस्य प्रतिबिम्बं दृश्यते।

तथा चास्यां सम्विदि सर्वं विश्वं प्रतिबिम्बतो भवति। स्वातन्त्र्यं हि विमर्शः, स चास्य प्रकाशस्य मुख्यः स्वभावः। न हि निर्विमर्शः प्रकाशः सम्भवति। स एव प्रतिभानुत्तरादिशब्दैरभिधीयते। तस्यैव भगवतः परमेश्वरस्य प्रकाशरूपया चिच्छक्त्या, स्वातन्त्र्याभिधयाऽऽनन्दशक्त्या, आनन्दचमत्कारात्मिकया इच्छाशक्त्या, आमर्शात्मिकया ज्ञानशक्त्या, सर्वाकारोपयोगिन्या क्रियाशक्त्या च जुष्टस्याष्टैश्वर्यात्मकमूर्तेः परिपूर्णस्य शिवशक्त्यादिभेदाऽसहिष्णोर्विश्वमवविभावयिषोः प्रथमं शिवशक्तिरूपताऽऽत्मन्येव भासते। स एवानुत्तरो हृतादनाहृताच्च शब्दात् सदा द्योतमानो योगिभिरनुभूयते सामाधौ। तस्य परैव शक्तिः सृष्टिचिकीर्षया इच्छाज्ञानक्रियारूपाणि गृह्णाति।

सा चेच्छाशक्तिः—

> अनुत्तरानन्दचिति इच्छाशक्तौ नियोजिते।
> त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम्[1] ॥ इत्युच्चते।

तथा चानुत्तराख्यः प्रकाशो बिन्दुः स्वातन्त्र्याख्ये विमर्शाभिधे विसर्गे विपरिणमते। तदुक्तम्—'विसर्गस्तस्य नाथस्य कौलिकीशक्तिरुच्यते' इति। एवं ह्युक्तं मूले—

> अस्यान्तर्विसिसृक्षासौ प्रोक्ता कौलिकी परा।
> सैव क्षोभवशादेति विसर्गात्मकतां ध्रुवम्[2] ॥ इति।

> विसर्ग एव तावान्यदाक्षिप्तैतावदात्मकः।
> इयद्रूपं सागरस्य यदनन्तोर्मिसंततिः[3] ॥ इति च।

---

१. श्रीतन्त्रा०—३।९४–९५ श्लोकांशौ। २. तत्रैव—३।१३६–१३७ श्लोकांशौ।
३. तत्रैव—३।१४५।

तथा च बिन्दो रूपद्वयम्, अकारोऽनुस्वारश्च । विसर्गस्यापि उभयी वृत्तिः, विसर्जनीयो हकारश्चेति । एतौ चाकारहकारौ अविभक्तभावेन शिवशक्त्यात्मकौ सदावभासेते । स एवानुत्तर आनन्दशक्तिमभिव्यञ्जयन्नाकाररूपं धत्ते । तस्य शिसृक्षातः परामर्शस्योदये इच्छाशक्तिरिकारः । ईशत्री सैवेच्छा ईकारः । उन्मिषन्नुकारः । यदा ज्ञेयापेक्षया ज्ञानमूनं भवति तदा उकारस्योदयो भवति । तथा चैतदेव विमर्शात्मकं परार्शषट्कं बीजपदेनोच्यते । तथा चोक्तम्—

स्वराणां षट्कमेवेह मूलं स्याद् वर्णसन्ततौ ।
षड् देवतास्तु ता एव ये मुख्याः सूर्यरश्मयः[१]।। इति ।

तथा च 'स्वरा एव सर्ववर्णानां मूलकारणमि' त्युक्तनीत्या षट्कमित्यकारादूकारान्तम्, एवकारेण स्वरान्तराणां व्यवच्छेदः, तेषामप्येतत्स्फारमात्रमेव हि रूपमित्याशयः । एवमेषां षण्णामेव वर्णान्तराभिव्यञ्जने प्रकाशरूपत्वमित्युक्तं स्यात् । अतश्च प्रकाशरूपत्वादेव एषामन्यत्र 'षड्देवतात्मकं सूर्यरश्मित्वम्' अप्युक्तमित्याशयेनाह 'षड्देवते' त्यादयः ।

एवं हि—

आसामेव समावेशात् क्रियाशक्तितयोदितात् ।
सम्विदो द्वादशप्रोक्ता यासु सर्वं समाप्यते[२] ।। इत्युक्तम् ।

अयंभावः—तासामेव षण्णां सम्विदां क्रियाशक्तितयोदितेन परसंघट्टेन द्वादश सम्विदः प्रोक्ताः—षष्ठवर्जं सन्ध्यक्षरादिरूपोपग्रहात्स्वरद्वादशकात्मनावभासिता इत्यर्थः । एतास्वेव सम्वित्सु वक्ष्यमाणनीत्या प्रमेयादिक्रमेण परमात्रन्तमवस्थितत्वात् । अतोऽतिरिक्तस्य चाभावात् सर्वस्य परिपूर्तिः 'यासु सर्वं समाप्यते' इति । इयदेव च मुख्यं शक्तिचक्रम्, अत्रैवोक्तवक्ष्यमाणनीत्या शक्त्यन्तराणामन्तर्भावात् ।

एवं च 'शक्तयोऽस्य जगत्सर्वमि'ति परात्रिंशिकोक्तरीत्या अ आ इ ई उ ऊ इत्येतेषामेव सर्वं जगत् शक्तिरिति । एवं चेयमिकाररूपा अक्षुब्धा क्षुब्धा च दीर्घरूपा इच्छाशक्तिः रेफलकारोभयेच्छायाधारित्वाद् ऋ ॠ ऌ ॡ इत्येतद्वर्णचतुष्टयरूपं धत्ते ।

अस्मिन् ऋकारादिचतुष्टये क्षोभोदयाभावाद् वर्णान्तरोत्पत्यभावान्न बीजत्वम् । क्षोभाधारत्वाभावाद् योनित्वाभावस्यापि निश्चयाद् बीजयोनिवैलक्षण्यमेषाम् । एवं इच्छोन्मेषशक्तिभ्याम् इकारौकाराभ्यामनुत्तरानन्दयोः संघट्टे एकार ओकारश्च सम्पद्येते । एवमेव यदा अनुत्तरानन्दशक्ती वृद्धिप्ररोहावाप्नुतस्तदा एकारयोगे ऐकार, ओकारयोगे औकारश्च सम्पद्येते । उक्तञ्च—

---

१. श्रीतन्त्रा०—३।१८४–१८५ श्लोकांशौ ।　　२. तत्रैव—३।२५०–२५१ श्लोकांशौ ।

इच्छैवानुत्तरानन्दयाता शीघ्रत्वयोगतः ।
वायुरित्युच्यते वह्निर्भासनात् स्थैर्यतो धरा[1] ।।

एवं ह्यत्रोक्तरीत्या य–व–र–ल–वानामन्तःस्थानां वायुसूर्यधरावरुणरूपाणामुदयः । अत्रोन्मेषस्यापि ग्रहणाच्चतुष्कोद्भूतौ न किञ्चिद् बाधकम् । सैवेच्छाशक्तिः स्वोष्मणा स्वात्मस्वातन्त्र्यप्रेरणात्मना बहिर्भाव्येन श ष स त्रितयात्मना स्फुरति । विसर्गस्यैव यथा स्थूलेन हकारात्मना स्थितिस्तथैवानुत्तरादयः कादिसान्तत्वेनावभासन्ते । एतदर्थं श्रीतन्त्रालोकस्य निर्दिष्टं प्रकरणमवलोकनीयम्[2] ।

एवं हि— अनुत्तरात् पञ्चात्मनः कवर्गस्य प्रसवः, एवमिच्छाशक्तेश्चवर्गस्य । द्विरूपाया ऋ ऌ इत्येवं रूपं प्राप्ताया इच्छाया एव टतवर्गोत्पत्तिः । उन्मेषात् तवर्गोत्पत्तिः । तथा च क् ष् संयोगात् क्षकारोत्पत्तिः । एवं सति पञ्चविंशतिः स्पर्शाः, चत्वारोऽन्तस्थाः, चत्वार ऊष्माणः, षोडशस्वराः संकलिताः सन्तः क्षकारेण पञ्चाशद् वर्णाः संजाताः । तत्रानुस्वारविसर्गौ स्वरेषु गणनीयाविति षोडशस्वराः संपद्यन्ते । तदुक्तम् —

अकाराज्जात आकार इकाराद् ई इति स्मृतः ।
ऊकारश्च उकाराद् स्याद् ऋकाराच्च नपुंसकम् ।।
एकारैस्वरश्चैव ओकार औकार एव च ।
अंकारश्च अनुस्वारः अः विसर्ग इति स्मृतः[3] ।। इति ।

तथा च —

अनुत्तरानन्दभुवामिच्छाद्ये भोग्यतां गते ।
सन्ध्यक्षराणामुदयो भोक्तृरूपं च कथ्यते[4] ।। इति ।

अयमाशयः— यद्यपीच्छादीनां स्वापेक्षया भोक्तृत्वमस्ति, तथापि अनुत्तरापेक्षया एषां भोग्यता—विश्रान्तिमेति, तदा संध्यक्षराणामुदयः—सृष्टिर्भवेत् । 'अनुत्तरानन्दभुवाम्' इति बहुवचननिर्देशो व्यक्त्यपेक्षो ज्ञेयः, स चोदयो भोक्तृप्राधान्ये एवानुत्तरेच्छादिसंघट्टमयत्वाविशेषेऽपि अन्तः स्थानां संध्यक्षरेभ्योऽयमेव विशेषो यत्संध्यक्षराणि गुणीभूतेच्छाकानि अनुत्तरप्रधानानि, अन्तःस्थास्तु गुणीभूतानुत्तरा इच्छादिप्रधाना इति, एवमनुत्तर एव एकः पारमार्थिको भोक्तेति सिद्धम् । स हि स्वप्रकाशत्वात्मनि प्रमेयत्ववार्तामपि न सहते इति तस्य कथं भोग्यत्वं भवेत् । इच्छादिकं पुनर्भोग्यमेवेत्यस्य भोग्यत्वम् इति ।
श्रीतन्त्रालोके टीकायाञ्चोक्तम्—

षडेव हि स्वरा मुख्याः कथिता मूलकारणम् ।
ते च प्रकाशरूपत्वाद् विज्ञेयाः सूर्यरश्मयः ।।

---

१. श्रीतन्त्रा०—३।१५७ । २. तत्रैव—३।१४८–१४९ ।
३. तत्रैव टीका०—३।२२२ । ४. तत्रैव—३।१८९–१९० श्लोकांशौ ।

एवञ्च मूले—

इच्छाशक्तिश्च या द्वेधा क्षुभिताक्षुभितत्वतः ।
सा विजातीयशक्त्यंशप्रोन्मुखी याति यात्मताम् ।।
सैव शीघ्रतरोपात्तज्ञेयकालुष्यरुषिता ।
विजातीयोन्मुखत्वेन रत्वं लत्वं च गच्छति[1] ।। इत्युक्तम् ।

अन्यच्च—

तदुन्मेषशक्तिर्द्विरूपा वैजात्यशक्तिगा ।
वकारत्वं प्रपद्येत सृष्टिसारप्रकर्षकम्[2] ।। इत्यादय उक्तम् ।

अत्रानेन विधिना शब्दसृष्टावर्थसृष्टौ च पञ्चाशद्वर्णा एवास्य अनन्तकोटिब्रह्माण्डस्य निबन्धने क्षमा इति तत्र तत्रावलोकनेन प्रतिपादनीयं भवतीति शम् ।

## मातृकाचक्रविवेकानुसारेण सृष्टिक्रमः

मातृकाचक्रविवेकस्य तन्त्रसाहित्ये विशिष्टतमं स्थानं वरीवर्ति । तत्र यादृशं हि सृष्टिप्रक्रियाया निरूपणं जातं तस्य संक्षेपतो रूपमग्रे निरूप्यते मया—

पञ्चभ्यो भूतेभ्यः क्रमशः पञ्चानां वर्गाणामुत्पत्तिः । अर्थात् कण्ठ्यतालव्यमूर्धन्यदन्त्यौष्ठ्यात्मका वर्णाः क्रमश आकाशवायुतेजोजलपृथिवीसम्बन्धिनः । तथा चैतन्मते 'लं' जलबीजम् । 'वं' धराबीजमित्यायाति । परं टीकायां स्वीयसंस्कारानुसारं 'वं' जलबीजं 'लं' तु पृथिवीबीजमित्युक्तम् ।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः इतीमे स्वरा निर्दिष्टाः । इकारोकारयोः संकुचद्रूपौ यकारवकारौ, ऋलृवर्णयोः संकुचद्रूपौ रलौ च निर्दिष्टौ । अकारस्य संकुद्रूपः कवर्गः, इकारस्य चवर्गः, अकारस्य टवर्गः, लृकारस्य तवर्गः, उकारस्य पवर्ग इति । ऊष्माण इत्यनेन शषसहा वर्णा उक्ताः । तथा चोक्तम्—'श्लिष्टं पुरः स्फुरितसद्वयकोटिलक्षरूपं परस्परगतं च समं च कूटम्'[3] इति ।

उक्तेन तथ्येन लक्षौ उक्तौ । तथा चैतन्मते षोडशस्वराः, पञ्चविंशतिः स्पर्शाः, चत्वारोऽन्तःस्थाः, चत्वार ऊष्माणः, द्वः स्पृष्ट लकारः । कूटस्थः क्षकार इति संकलनया एकपञ्चाशद् वर्णाः निर्दिष्टाः सन्ति । तथा चायं संयोजनक्रमः—( १६ + २५ + ४ + ४ + २ = ५१ ) इति वर्णाः ।

उपर्युक्तविवेचने अकारादीनां संकोचे कवर्गादय उत्पद्यन्ते इति यदुक्तं, तन्न समीचीनम्, हयरलवानां तैर्बीजत्वस्वीकारेण स्वोक्त्यैव विरोधात् । अनुत्तराद् अल्पमात्रतोऽधिकमात्रवर्णोत्पत्तिस्वीकाराच्च ।

---

१. श्रीतन्त्रा०—३।१५४ -१५५ । २. तत्रैव०—३ । १५६ ।
३. मा० च० वि०— १२१ पृ० ।

किञ्च, संकूचद्रूपः कवर्ग इत्युक्त्या लयस्यैव प्रतीत्या न हि अधिकमात्रेभ्यो वर्णेभ्योऽल्पमात्रवर्णानामुत्पत्तिरिहाभिप्रेता ।

## वरिवस्यारहस्ये सृष्टिक्रमः

अत्रेदं तत्त्वम्--तान्त्रिकप्रक्रिया हि 'इच्छामि', 'जानामि' इत्यादावुक्तं पुरुषान्तर्भासमानं स्फुरणान्वयिज्ञानमेव प्रकाशाभिदं ब्रह्म । तच्च सर्वज्ञत्वसर्वेश्वरत्वसर्वकर्तृत्वपूर्णत्वव्यापकत्वादिशक्तिसंवलितम् । तस्य चानन्दरूपांश एव स्फुरणं, परा, अहंता, विमर्शः, ललिता, भट्टारिका, त्रिपुरसुन्दरीत्यादिपदैर्व्यवह्रियते । तत उक्तं विरूपाक्षपञ्चाशिकायां विश्वशरीरस्कन्धे--

ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति ।
एतेऽहंतायाः किल पर्यायाः सद्भिरुच्यन्ते[1] ।। इति ।

एतेन पराहंतामन्तरेणेदंताया असंस्फुरणादहमिदमोः ससम्बन्धिकत्वादिदं पदगम्यस्य दृश्यस्याहंतारूपशक्त्या तद्विशिष्टब्रह्मणा वा जन्यत्वम् । तच्च दृश्य तत्परिणाम एव, 'तस्यां परिणतायां तु न कश्चित् पर इष्यते' इति वामकेश्वरतन्त्रात्, 'वाचारम्भणं विकारः' इत्यादिश्रुतीनां तत्रैव स्वारस्याच्च । शक्तिशक्तिमतोरुपादानोपादेययोरत्यन्तमभेदः, न पुनरौपनिषदादिवत् भेदाभेदौ । अत एव 'सर्वं खल्विदं ब्रह्म' समानाधिकरण्यमभेदे, न पुनर्बाधायाम् । अद्वैतश्रुतयः सर्वा अप्येतदभिप्रायिका एवाविरुद्धाः । सर्वप्रमाणमूर्धन्यया श्रुत्या तदनुसारितन्त्रैश्चाद्वैते कथिते, तद्विरुद्धत्वेन भासमानः कार्यकारणयोर्भेदांश एव कल्पितः, आस्तां न पुनः सर्वोऽपि प्रपञ्चः । 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिष्वपि भेदांशस्यैव निषेधो न प्रपञ्चस्य । 'एकमेवाद्वितीयम्' इत्यादौ श्रूयमाणो भेदवत्प्रपञ्चाभावोऽपि विशेषणाभावप्रयुक्त एव । अत एव भामत्यां हाटकमकुटग्रन्थे भेदस्यैव हाटकन्यूनसत्ताकत्वं न मकुटस्योक्तम्, परिणामस्य परिणामिसमानसत्ताकत्वावश्यिकत्वात्, । 'मायामात्रमिदं द्वैतम्' इत्यत्रापि द्वैतशब्देन भेदस्यैव मिथ्यात्वमुच्यते, न पुनर्भेदवतः; तथात्वे तु प्रतियोगितासम्बन्धेन जगत इवानुयोगितासम्बन्धेन ब्रह्मणोऽपि भेदवत्त्वस्य सत्त्वात् सदसद्भ्यामभावो निरूप्यत इति न्यायसिद्धत्वाविशेषान्मिथ्यत्वापत्तेः । ततश्च श्रुतेरपि परिणामवाद एव सम्मतः सिद्धचति । भगवता व्यासेनापि 'प्रकृतिश्च [प्रतिज्ञादृष्टान्तानुपरोधात्, इत्यस्मिन्नधिकरणे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञां मृद्घटनखनिकृन्तनादिदृष्टान्तम् 'बहु स्यां प्रजायेय' इत्यभिध्योपदेशादिकं चानुसंदधानेन परिणामवाद एवाभिप्रेतः, कण्ठरवेणोक्तश्च 'आत्मकृतेः परिणामात्' इति सूत्रे । भाष्यकारैरपि तत्र विवर्तवादानुसारेण व्याचक्षाणैरपि सौन्दर्यलहर्याम् 'मनस्त्वं व्योम त्वं……' इत्यादि

१. विरू०--१।८ ।

श्लोके 'त्वयि परिणतायाम्' इत्यनेन स्वाभिमतः परिणामवाद एव स्फुटीकृतः। तदुक्तं वरिवस्यारहस्ये—

स जयप्ति महान् प्रकाशो यस्मिन् दृष्टे न दृश्यते किमपि।
कथमिव तस्मिञ्ज्ञाते सर्वं विज्ञातमुच्यते वेदे॥

नैसर्गिकी स्फुरत्ता विमर्शरूपास्य वर्तते शक्तिः।
तद्योगादेव शिवो जगदुत्पादयति पाति संहरति॥

सावश्यं विज्ञेया यत्परिणामादभूदेषा।
अर्थमयी शब्दमयी चक्रमयी देहमय्यपि च सृष्टिः[१]॥ इति।

परममहामहेश्वरा भास्कररायार्याः स्वकीये वरिवस्यारहस्याख्ये ग्रन्थे सर्वसृष्टिप्रचारिकां विमर्शाख्यां चिद्रूपिणीं त्रिपुरसुन्दरीमेव सर्वसृष्टिकारिकां मन्यते। सा च त्रिपुरसुन्दरी वामा-ज्येष्ठा-रौद्री-अम्बिका (अनुत्तरांशभूता) इच्छा-ज्ञान-क्रिया-शान्ता (ऊर्ध्वावयवा) एता अष्टशक्तयः परासहिता नव संख्याका सत्यो मातृका पदेनोच्यन्ते। ततः स्रष्टव्यपदार्थानालोच्य 'तदैक्षत बहु-स्यां प्रजायेय[२]' इति श्रुतिरीत्या तादृशमीक्षणमेव प्रवृत्तिनिमित्तीकृत्य तस्यां पश्यन्तीतिपदं प्रवर्तते। तदवयवाश्च वामादयो उपर्युल्लिखिता अष्टशक्तय। एवं च वामाशिखा—ज्येष्ठारूपा सा त्रिपुरसुन्दरी ज्ञानाक्रियेच्छात्मिका ब्रह्म-विष्णवीशरूपिणी। सैव व्यष्टि-समष्टिभेदेन नवविधा भिद्यमाना सती ततो नवनादा जाताः[३]। ते च चिणीति प्रथमः, चिणिचिणीति द्वितीयः, घण्टानादस्तृतीयः, शङ्खनादश्चतुर्थः, पञ्चमस्तन्त्रीनादः, षष्ठस्तालनादः, सप्तमो वेणुनादः, अष्टमो भेरीनादः, नवमो मृदङ्गनादः, तत्समष्टिश्च नादध्वन्यादिपदवाच्या नातिसूक्ष्मा परावत् नातिस्थूला वैखरीवत्; अतो मध्यमाख्या मातृका। ततो नवभिर्नादैः अकचटतपयशलाख्यवर्गनवकवती वैखरी मातृका समुत्पन्ना। एवं हि प्रथमतृतीयकूटे—अष्टादशवर्णात्मके, मध्यमकूटं तु चतुरधिकम्; इति संहत्याष्टपञ्चाशद्वर्णात्मिका विद्येति सिद्धम्। यद्यपि बिन्दुविनिर्मुक्तानामष्टानामेव नादसंज्ञा मन्त्रशास्त्रे उक्ता, तथापि व्यवहारसौकर्याय तत्सहितानामेव सात्र व्याख्यातेति ध्येयम्। तदुक्तमष्टपञ्चाशद्वर्णमातृका ग्रन्थे—

प्रथमेऽष्टादशवर्णा द्वाविंशतिरक्षराणि मध्ये स्युः।
प्रथमेन तुल्यमन्त्यं संघातेनाष्टपञ्चाशत्[४]॥ इति।

---

१. व० र०—१।३-४-५। २. तैत्ति० उ०—२६।
३. व्यापिकासमनोन्मन्य इति द्वादशसंहृतिः।
विद्वादीनां नवानां तु समष्टिर्नाद उच्यते॥ (व० र० १।१३)
४. व० र०—१।१४।

इदं वाणीचतुष्टयं यथा स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमभेदात्तथैव तद् वाच्या अर्था अपि तथा तथोन्नेया इति। एवमत्र ग्रन्थे गायत्रीमन्त्रमाध्यमेनाखिलवर्णराशेः स्वरूपनिरूपणं कुर्वद्भिर्भास्कराचार्यैर्वर्णानां कालः, उत्पत्तिस्थानयत्नानि, स्थितिस्थानरूपमाकाराणि, उच्चारणकालः, त्रयाणां कूटानां स्थितिः, प्रत्यक्षरस्वरूपम्, बिन्द्वादीनां स्वरूपम्, अवस्थापञ्चक-शून्यषट्काः, सप्तविषुवन्नामानि च निरूपितानि। ततश्च जपादीनां विधयः, अर्थज्ञानस्यावश्यकतादयो विषया निरूपिताः सन्ति अत्र ग्रन्थे इति सुधीभिर्विज्ञेयमिति शम्।

## प्रपञ्चसारप्रक्रियया सृष्टिविचारः

समस्तागमसारसंग्रहोपनामके प्रपञ्चसारे पूर्वं तावत् प्राणिकर्माभिन्नमायाऽवच्छिन्नस्य ब्रह्मणो घनीभावः, ततो विचिकीर्षा, ततोऽव्यक्तम्, ततोऽव्यक्तो रवः, ततः पश्यन्ती, ततो मध्यमा, ततो वैखरी इति क्रमः प्रदर्शितः। ग्रन्थारम्भे मङ्गलमाचरता ग्रन्थकृता—

अकचटतपयशाद्यैः सप्तभिर्वर्णवर्णैर्विरचितमुखवाहापादमध्याख्यहृत्का।
सकलजगदधीशा शाश्वता विश्वयोनिर्वितरतु परिशुद्धिं चेतसः शारदा वः[1]॥

इति पद्येन वर्णोपन्यासस्तन्मूलिकाया अखिलसंसारसारभूतायाः शारदायाश्चेतसः परिशुद्धये स्तुतिः कृता। सर्वसाक्षिणी चिद्रूपिणी सर्वाधिष्ठानसमर्था शारदेव विश्वयोनिः सकलजगतः कलाभिः कारणं भवति, जगच्च कार्यमित्यवशिष्यते। तथा च ग्रन्थस्थमङ्गलप्रसङ्गे—स्थूलसूक्ष्मकारणसामान्यसाक्षिलक्षणः पञ्चविधोऽस्य प्रपञ्चसारग्रन्थस्य विषयः। तत्र वैखरीतदर्थात्मकं विराड्रूपं स्थूलं विषयमाह ग्रन्थस्य पूर्वभागेन। आद्यैरितिपदम् आद्यैः काद्यैश्चाद्यैरित्यादिप्रकारेण प्रत्येकं सम्बध्यते। मातृकाक्षरन्यासस्थानं वदन् विराजोऽवयवक्लृप्तिमाह—विरचितमुखवाहेत्यादिना। मध्यशब्दः पवर्गन्यासस्थानार्थः। आख्याशब्देन त्वगादिधातव उक्ताः। आख्यायन्त एभिरिति। हृच्छब्देन हृत्स्थबुद्धिवाचिना ज्ञानक्रियाशक्त्यात्मकः प्राणस्तत्कारणभूता मायाशक्तिश्चात्राभिहिता। कशब्देन सुखार्थेन परमात्मोक्त इति। यादिन्यासस्थानानि तेषां याथात्म्यं यादिन्यासस्थाने धात्वादियोगः सर्वमन्त्रजपादेः शेषतया न्यासश्च सूचितः[2]।

एकदा क्षीरसागरे अनन्तशेषसैय्ययां। विराजिते भगवति विष्णौ देवाः स्वस्तुतिभिस्तं तोषिताः। प्रसन्नो हरिर्दुःखनिवेदनाय देवानादिदेश। तदाजो भगवांश्चन्द्रमौलीश्वरश्च—

---

१. प्रपञ्च०—१।१ ( कालिकाताप्रकाशनम् ) पूर्वार्द्धम्। २. तत्रैव—व्याख्यायाम्।

स्वस्मिन् प्रसीद विश्वेश के वयं केन भाविताः।
किं मूला किं क्रियासर्वमस्मभ्यं वक्तुमर्हसि[1] ॥ इति पृष्टवन्तौ।

प्रश्नस्योत्तरं ददता भगवता उक्तं यद्—

इति पृष्टं परं ज्योतिरुवाच प्रमिताक्षरम्।
यूयमक्षरसम्भूताः सृष्टिस्थित्यन्तहेतवः ॥
तैरेव विकृतिं यातास्तेषु वो जायते लयः[2] ॥ इति।

प्रमिताक्षरेषु श्रीविष्णुश्चराचराचरात्मकं जगतः कारत्वेनाक्षराणीति प्रोक्तवान्। प्रमिताक्षरश्चात्र क इति जिज्ञासायां 'प्रकर्षेण मीयते ज्ञायते मिनोति जानाति प्रमिनोति परिच्छिनत्तीति' क्रमेण प्रकृतिपुरुषकालाः प्रमिताः। प्रमितानां वाचकमक्षरं तदभिन्नं प्रमिताक्षरं परा वाक्। सतत्वं हकारमित्यर्थः। तस्य बीजबिन्दुनादरूपेण प्रकृत्यादिवाचकत्वं द्रष्टव्यम्। अहमेलनरूपेण वा तत्र प्रकृतिरुपादानम्, इतरो निमित्तमिति शार्ङ्गिणोऽभिप्रायः।

एवं हि अक्षरसम्भूतमेव चराचरमितिप्रतिपादयन्—

मूलार्णमर्णविकृतीर्विकृतेर्विकृतीरपि।
तत्प्रतिभिन्नानि मन्त्राणि प्रयोगांश्च पृथग्विधान् ॥
वैदिकांस्तान्त्रिकांश्चापि सर्वानित्त्थमुवाच ह।
प्रकृतिः पुरुषश्चैव नित्यो कालश्च सत्तम ॥
अणोरणीयसी स्थूलात् स्थूला व्याप्तचराचरा।
आदित्येन्द्वग्नितेजोमद्यद्यत्तत्तन्मयी विभुः[3] ॥ इत्याद्युक्तम्।

अत्र हकारो हि अकारहकारात्मा। तयोश्चाद्यन्ताक्षरयोः प्रत्याहारग्रहणन्यायेन, गृहीतेतरवर्णयोर्नादाकाररूपेण, बुद्धिप्राणरूपेण, ज्ञानक्रियाशक्तिरूपेण, प्रकाशविमर्शरूपेण, चिदानन्दरूपेण वा सर्ववर्णाद्यनुगमात् सर्वशब्दार्थसमष्ट्यात्मकपरावागात्मत्वेन सर्वात्मत्वात् प्रकृतिपुरुषकालात्मत्वं नित्यत्वञ्चावगन्तव्यम्। वाचकमक्षरं साक्षान्नारायणो वेदमूर्तिः। तस्य वाच्यानि निखिलान्यक्षराणि। प्रकृतिपुरुषकाला आकारोकारमकाराः। हकाररेफमाया वा। ते नित्या वक्ष्यमाणप्रयोगेषु नियमेन प्रयोज्या इत्यर्थः। सत्तम इति योगौचित्येन बिन्द्वादियोगः सूचितः।

अणोरणीयसीस्थूलादित्यस्य व्याख्यानन्तु मूलाधारगतत्रिकोणमध्ये परमाणोरपि अणीयसी प्रकृतिर्ध्येयाकाराकारेणेत्यर्थः। ततस्तस्याः प्रभारूपेण आकाशादेरपि उकारश्चिन्त्य इत्याह स्थूलादिति। ततः सर्वं जगत् मकारेण

---

१. प्र२० पूर्वार्द्धः—१।१६।  २. तत्रैव—१।१७-१८।
३. तत्रैव—१।२०-२१-२२।

मज्जनीयमित्याह—व्याप्तेति । आदित्येत्यादिना—चिदग्निव्याप्तसौषुम्नमार्ग-मणिपूरकानाहताज्ञाब्रह्मरन्ध्रेषु अग्निसूर्यसोमब्रह्मधामानि सञ्चिन्त्य सर्वानुगतां कुण्डलिनीं ध्यायन् क्रमेण विलाप्य बिन्दुनादादिना व्यापिन्यादिद्वारेण विभुर्भवे-दित्यर्थः ।

एवं हि कालतत्त्वात्मिका प्रकृतिः कालतत्त्ववेत्रा परम धाम्ना भगवतैव ज्ञायते । उक्तञ्च—'सा तु कालात्मका सम्यक् मयैव ज्ञायते सदा'[1] इति । अयं भावः—कालस्याऽपरस्य पञ्चदशधा भिन्नस्यापि आत्मा कालात्मा प्रभुः । तेनोन्मनीरूपेण कालेन माया पञ्चदशकालाभिमानिनी सम्यगभेदेन ज्ञायत इत्यर्थः । लवस्त्रुटि-कला-काष्ठा-निमेष-मात्रा-नाडिका-मुहूर्त्ताहोरात्र-मास-संवत्सर-युग-कल्प-महाकल्प-परार्ध-कालपर्वाणि, अकारोकारमकार - बिन्दु-कला-निरोधिका-नाद-नादान्तशक्तिव्यापिनी व्योमरूपान्तनादानाश्रिता समनीलक्षणप्रणवमात्रासु मूला-धारमारभ्याद्वादशान्तं व्यवस्थितासु सञ्चिन्त्य क्रमेण संहृत्य अकालकलिकायामु-न्मन्यां व्यवस्तिठेतेत्यर्थः ।

एवं हि दिव्यवर्षशतात्मकं हि कमलयोनेर्ब्रह्मणोऽवस्थानम् । तावत्कालं कमलनाभेर्विष्णोरेको निश्वासः । तथा च—

त्वदायुर्मम निश्वासः कालेनैव प्रचोद्यते ।
स विजानाति विपाकांश्च तस्यां सम्यग्व्यवस्थितान् ॥
सोऽन्वीक्ष्य त्वादृशामायुः परिपाकं प्रयच्छति ।
प्रकृतेश्च क्वचित्कालो विकृतिं प्रतिपादयेत्[2]

त्वदायुर्मम निश्वास इति पदेनाहोरात्रपक्षसम्वत्सरादियोगान् श्वासोच्छ्वा-सस्थान् दर्शयति । श्वासस्याऽऽयुषोऽपि तद्रूपत्वात् कालेनैव प्रचोद्यत इति । अहोरात्रादियोगे साक्षितया सत्तामात्रेणात्मा प्रेरको ध्येयः, न तु कालमध्यव-र्तितयेत्युक्तम् ।

कालः कर्मापेक्षया प्रेरक एव केवलमित्युक्तं पूर्वस्मिन् व्याख्याने तत्कथं प्रलये सर्वसंहारादित्याशङ्क्य प्रलयेऽपि सूक्ष्मरूपेण कर्मणामवस्थितिमीश्वरस्य सर्वज्ञतां चाह स विजानातीत्यादि । स च कालः प्रकृतौ विकृतिमुत्पादयति । तदुक्तम्—

सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तदा ।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम् ॥
कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥

---

१. प्रप० पू०—१।२८ श्लोकार्द्धः । २. तत्रैव—१।३९-४० ।

स बिन्दुनादबीजत्वभेदेन च निगद्यते ।
तद् विस्तारप्रकारोऽयं यथा वक्ष्यामि साम्प्रतम्[१]।।

तथाचेयं प्रकृतिः तत्त्वात्मकतामन्तर्मुखतामपरित्यज्यैव क्वचिद्देशे बिन्दुताम्, क्वचित् बहिर्मुखतया सृष्ट्युन्मुखकर्माविभक्ततया तरङ्गमूलभूतसूक्ष्मवायुव्याप्तसमुज्वलनवत् किञ्चित् स्थौल्यं प्राप्नोति । परिपक्वकर्मभेदात् घनीभावस्तदर्थं व्यापारो विचिकिर्षा । बिन्दुः कर्माभिन्नं रूपम् । एवं हि परस्मादुत्पन्नस्य प्रकृतितत्त्वस्योत्तरसृष्टिनिर्वाहार्थम् इच्छासत्त्वादिरूपतां कालशब्देनोच्यते । तेन भिद्यमानः सम्बध्यमानो विभज्यमानश्च । न हि चित्सम्बन्धं विना चिद्रूपस्य ज्ञानादिरूपत्वं सम्भवति । इच्छादीनामेकैकस्य मायातच्छक्तितद्गतप्राणिकर्मविषयभेदेन त्रिरूपतां स्थूल-सूक्ष्म-परत्वमवाप्यते ।

अत्र बिन्दुपदमीश्वरपरम् । नादस्तस्य चिन्मिश्रं रूपं पुरुषाख्यम् बीजमचिदंशः । एतन्मन्त्रावृत्तिसमये स्वानुभवेनानुगन्तव्यम् । अत्र स्वरूपस्थेन वक्ष्यति हि शब्दावगम्यमर्थमिति ।

उक्तक्रमेणार्थरूपस्य प्रकृतितत्त्वस्य सृष्टिमभिधाय एतामेवार्थसृष्टिशब्दसृष्टित्वेनाऽप्याह अत्र शब्दार्थभेदाभावादिति । तथा च—

बिन्दोस्तस्माद् भिद्यमानाद्रवोऽव्यक्तात्मको भवेत् ।
स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते ।।
अव्यक्तादन्तरुदितत्रिभेदगहनात्मकम् ।
अहन्नाम भवेत्तत्त्वं महतोऽहङ्कृतिस्तथा ।।
भूतादिकवैकारिकतैजसभेदक्रमादहङ्कारात् ।
कालप्रेरितया गुणघोषयुजा शब्दसृष्टिरथ शक्त्या[२] ।।

बिन्दुः परमपुरुष एव इति पूर्वमेव निरूपितम् । तस्माद् बीजरूपयोक्त—प्रकृत्या सम्बध्यमानात् उभयाभेदलक्षणो देदीप्यमानः परापश्यन्त्यात्मको रवोऽभवत् । स रव एव च कुण्डलिन्यादिशब्दैरभिलप्यते । सोऽयं रवः कारणबिन्दुतादात्म्यापन्नत्वात्सर्वगतोऽपि व्यञ्जकयत्नसहकृतपवनवशात् प्राणिनां मूलाधारे व्यज्यते । तदिदं कारणबिन्द्वात्मकमव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं परावागित्युच्यते ।

तथाचेत्थमव्यक्ताद्रवात् ज्ञानसत्त्वप्रधानः परिणामो महत्तत्त्वः समुत्पन्नः । इत्थं हि महत्तत्वादहं तत्त्वं समजनि । तस्य च ईक्षितुस्तदभिमानिनोऽहङ्कारस्तमः प्रधानः परिणामोऽभूत् । एवं हि भूतादिकवैकारिकतैजसभेदक्रमादहङ्कारात् कालेन प्रेरिता गुणाः सत्त्वादयः, घोष उपर्युक्तो रवः शब्दब्रह्म, शक्तिस्तत्व-

१. प्रप० पू०—१।४१-४२-४३ । २. तत्रैव—१।४४-४५-४६ ।

संज्ञा, एवं च तया धराप्रभृतीनि भूतानि उत्पन्नानि, शब्दाद्व्योम इत्याद्युक्त्या आकाशस्य सम्भवः ।

तथा च पञ्चतन्मात्राभिस्तत्तन्महाभूतान्युत्पद्यन्ते । यथा हि—

शब्दाद् व्योमः स्पर्शत्वेन वायुस्ताभ्यां रूपाद् वह्निरेतै रसाच्च ।
अम्भांस्येतैर्गन्वतो भूर्धराद्या भूताः पञ्चस्युर्गुणोनाः क्रमेण[१] ।। इति ।

एवं हि पञ्चीकरणप्रक्रियया पञ्चतत्त्वानि परस्परं मिलितानि सन्तीति प्रतिपादयन् प्रपञ्चसारतन्त्रे—

व्योम्निमरदत्रदहनस्तत्रापस्तालु संस्थिता पृथिवी ।
सचराचरात्मकानि तानि तस्यां जातानि सर्वभूतानि[२]।। इत्युक्तम् ।

एवं चेन्द्रियाणि, मनः प्रभृतीनि पञ्चविंशतिस्तत्त्वानि जायन्ते । समस्त-जगतः कारणानि गुणतत्त्वानि, देवाः, श्रुतयः, स्वराः समरुताः, सवैश्वानराश्च लोकाः, तिस्रो वृत्तयः, जाग्रदाद्या याजनाद्या वा अवस्थाः, योगस्थानभूताः सुषुम्ना-चित्रावज्राख्या नाड्यो जायन्ते । अन्ते च भगवत्प्रेरणयैव –

एष सर्गः समुत्पन्न इत्थं विश्वं प्रतीयते ।
विश्वप्रतीतौ हि यतः प्रपञ्चस्त्ववगम्यते[३] ।। इत्युक्तम् ।

अनया रीत्या विश्वस्य तत्त्वत्रयात्मकस्य वेद्यस्य प्रतीतौ साक्षिणी सती सृष्टिराविर्भवति, यतोऽनाहतशिवात् प्रपञ्च आरोपितो भवति । एवञ्च सः परमशिवः सर्वतत्त्वरूपोऽवगन्तव्य इति विभावनीयं सुधीभिः ।

तन्त्रागमशास्त्रेषु सृष्टिक्रमस्यास्य सङ्गतिः कथं सङ्गच्छत इत्युत्कण्ठा-मुच्यते––"सा सत्त्वसंज्ञा चिन्मात्रा ज्योतिषः' इत्यत्र चिन्मात्रज्योतिः शब्दाभ्यां अधिष्ठानसाक्षिलक्षणो अनाहतशिवशक्तिरूपो अकारलक्षितार्थो कथ्यते । तत्त्व-संज्ञेति आहतशिवोऽकारवाच्यार्थः । 'अभ्येति बिन्दुताम्' इत्यन्तेन आहतशक्तिः क्षकारवाच्या । 'स बिन्दुर्भवति त्रिधे' त्यनेन इच्छाक्रियाज्ञानलक्षणानि इह स वाचकानि सदाशिवेश्वरशुद्धविद्यातत्त्वानि । एतच्छुद्धतत्त्वपञ्चकं वैष्णवे तत्त्वे वासुदेवादिशब्दवाच्यमित्येव विशेषः । षोयरलवाश्च तत्र वर्णाः परमेष्ठि-पुंविश्वनिवृत्तिसर्वात्मसहिताः । विद्यातत्त्वान्तरं शैवे मायातत्त्वं स्वरूपाच्छादन-विक्षेपात्मकम् । शुद्धपञ्चके त्वाच्छादनं नास्ति । तस्येश्वररूपत्वात् विद्याव-त्त्वेन । मायादिकं तु जीवोपकरणभूतम् । एकैव शक्तिरन्तर्मुखतया विकसन्ती विद्यादितत्त्वरूपिणी बहिर्मुखतया सङ्कुचन्ती मायादितत्त्वरूपिणी । तदुपहितः शिव एव जीव इति तेषां सिद्धान्तः । मायाविक्षेपे कालपरिच्छेदे हेतुः । कालतत्त्वं तत एव । देश-काल-कर्मफलादिनियतहेतुरीश्वरेच्छा एव नियतितत्त्वम् । कला-

---

१. प्र० पू०––१।४७ । २. तत्रैव—१।५२ । ३. तत्रैव—१।६० ।

त्वेवं परिच्छिन्नस्य पशोः किञ्चित्कर्तृत्वशक्तिः। तस्यैव किञ्चिज् ज्ञत्वशक्तिर-शुद्धविद्या। तस्याः पूर्णमन्यता रागतत्त्वम्। एतत् षट्कविशिष्टः परमशिवो जीवः, तदेव पुरुषतत्त्वम्। अस्य च सप्तकस्य षादिमान्ता वर्णाः। वैष्णवतन्त्रे तु जीवतत्त्व एव एतत् सर्वमन्तर्भूतम्। पुरुषात्परं शैवे प्रकृतितत्त्वं पशोः सुखदुःख-मोहलक्षणं भकारवाच्यम्। वैष्णवे प्राणतत्त्वेन गता प्रकृतिः। 'बिन्दोः तस्माद्-भिद्यमानादि' त्यनेनैतत्तत्त्वगणमुक्तम्।

अयम्भावः—बिन्दुः शिवः, तस्मादाहतशिवशक्यादिरूपादेवमुक्तेन प्रकारेण मायादिरूपेण भिद्यमानात् परिणम्यमानात् अभिन्न एवो वाचकांशो वाच्येन सह अव्यक्तात्मकः प्रकृतितत्त्वात्मकोऽभवत्। स एवः प्रकृतितत्त्वपर्यन्तः शब्दब्रह्मेति कथ्यते इति। महदादिकं तु सर्वत्र समानमिति।

'निवृत्तिसंज्ञा चे' त्यत्र शाक्तमपि तत्त्वं निवृत्ति-प्रतिष्ठा-विद्या-शान्ति-शान्त्यतीत-बिन्दु - कला-निरोधिका - नाद- नादान्तशक्तिव्यापिनीव्योमरूपानन्ता-नाथानाश्रिता समन्युन्मनी लक्षणं सूचितम्। 'स्युः' पञ्च शक्तयः। नादकलादि-भूताश्च त्रयोदशस्युरिति हि तस्यार्थः। नादो नाद एव, कला बिन्दुः, तावादिभूतौ येषामिति विग्रहः।

इत्थं शैवतत्त्वलक्षण एष सर्गः समुत्पन्नः। विश्वं प्रमेय-प्रमाण-प्रामातृ-रूपात्मविद्या शिवतत्त्वरूपा प्रतीयते। 'प्रमा प्रमाता प्रमितं च विश्वम्' इति हि लिङ्गसूक्तवाक्यम्। तत्र मायान्तं मेयरूपमात्मतत्त्वम्, सदाशिवान्तं ज्ञानरूपं विद्यातत्त्वम् आहतशिवान्तं प्रमातृरूपं शिवतत्त्वमवगन्तव्यमित्यलम्।

## शारदातिलकसम्मतसृष्टिक्रमः

शारदातिलके सृष्टिप्रक्रिया तु प्रायस्तथैव निर्दिष्टा यथा प्रपञ्चसारे। तथा-चाग्रे यथाग्रन्थं विविच्यते किञ्चित्—

अस्याखिलजगतः सर्वस्वभूतो निग्रहानुग्रहपञ्चकृत्यसमर्थः शिवः प्राणिषु कृपया करुणाविष्टः सृष्टिलीलां चिकिर्षुः स्वनिर्गुणस्वरूपमुत्सृज्यात्मानं सगुणं व्यवस्थापयति। निर्गुणावस्थायां विकारराहित्येन सृष्टेरभावो बोध्यः। उक्तं हि प्रयोगसारे—

नित्यः सर्वगतः सूक्ष्मः सदानन्दो निरामयः।
विकाररहितः साक्षी शिवो ज्ञेयः सनातनः॥ इति।

नारायणीयेऽपि—

निष्क्रियं निर्गुणं शान्तमानन्दमजमव्ययम्।
अजरामरमव्यक्तमज्ञेयमचलन्ध्रुवम् ॥
ज्ञानात्मकं परं ब्रह्म स्वसंवेद्यं हृदि स्थितं।
सत्यं बुद्धेः परं नित्यं निर्मलं निष्कलं स्मृतम्॥ इत्याद्युक्तम्।

सृष्टौ प्रवृत्तः शिवः सगुणः सकलश्च भवति। सकल इति शब्दस्य व्याख्या तु कला प्रकृतिस्तत्सहित इति। सांख्यनये सत्त्वरजस्तमसां साम्याऽवस्था प्रधानापरपर्याया प्रकृतिः। अत एव सगुण इत्युक्तिः। कला इत्यस्याद्वैतवेदान्तेऽविद्या, शिवतन्त्रे च शक्तिरित्युच्यते। तथा हि प्रयोगसारे नारायणीये चोक्तम्—

तच्छक्तिभूतः सर्वेशोऽभिन्नः ब्रह्मादिमूर्तिभिः।
कर्ता भोक्ता च संहर्ता सकलः स जगन्मयः॥ इति।

अतः—

सच्चिदानन्दविभवात्सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः॥
परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिता[1]॥ इत्युक्तम्।

अयम्भावः--सृष्टिमुच्यते सच्चिदेति। अविद्याशबलितत्वेन जडत्वेऽपि कथं तस्य सृष्टिकर्तृत्वमित्याशङ्कां वारयति--सच्चिदानन्दविभवादिति पदेन। अनेनाविद्योपहितत्वेऽपि तस्य न स्वरूपहानिरित्यर्थः। सकलाच्छक्तिसहितात् शक्तिरासीदिति योजना। ननु शक्तिसाहितादेव पुनः कथं शक्तिरासीदिति चेत्सत्यम्। या अनादिरूपा चैतन्याभासेन महाप्रलये सूक्ष्मा स्थिता तस्याः गुणवैषम्यानुगुणतया सात्त्विकराजसतामससंस्रष्टव्य प्रपञ्चकार्यसाधने या उच्छूनाऽवस्था सैवोपचारादुत्पत्तिः। इयं च सदुत्पत्तिवादिसांख्यमतमाश्रिय शारदातिलककारस्योक्तिः। तदुक्तं प्रयोगसारे--

तस्माद्विनिर्गता नित्या सर्वगा विश्वसम्भवा॥ इति।

वायवीयसंहितायामपि--

शिवेच्छया पराशक्तिः शिवतत्त्वैकतां गता।
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव॥ इत्युक्तम्।

पाञ्चरात्रेऽपि--

एवमालोक्य सर्वादौ सच्चिदानन्दरूपिणीम्।
समस्ततत्त्वसङ्घातमस्फूर्त्यधिष्ठानरूपीणीम् ॥
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान्॥ इति च प्रोक्तम्।

तस्या एव नादबिन्दू सृष्ट्युपयोगावस्थारूपौ। तदुक्तं प्रयोगसारे—

नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी।
शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता॥
सैव सर्वक्षमा तेने ..... ... ..... ..... ..... ..... ...॥ इत्यादयः।

---

१. शा० ति०—१।७-८।

प्रपञ्चसारकाराचार्यास्तु—

> सा तत्त्वसंज्ञा चिन्मात्र ज्योतिषः सन्निधेस्तथा।
> विचकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुताम्[1] ॥ इत्याहुः।

अन्यत्रापि—

> अभिव्यक्ता पराशक्तिरविनाभावलक्षणा।
> अखण्ड परचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः ॥
> समस्ततत्त्वभावेन विवर्तेच्छा समन्विता।
> प्रयाति बिन्दुभावं च क्रिया प्राधान्यलक्षणम् ॥ इत्युक्तम्।

अत एव वक्ष्यमाणशैवतत्वेषु शुद्धानां पञ्चानामेव ग्रहणम्। अत्र यद्यप्यन्यैर्ग्रन्थकृद्भिर्नादावस्था नोक्ता, तथापि शारदातिलकग्रन्थकर्तुस्तारस्य सप्तात्मकत्वं सूचयितुमेतदुक्तिः। कालतत्त्वं प्रस्तूवद्भिराचार्यैः सूचितैव नादावस्था। यदाहुः—'रवात्मन्यथो' इत्यादयः। भुवनेशीस्तुतावप्याचार्यैः—'नमस्ते रवत्वेन तत्त्वाभिधाने' इत्युक्तम्।

एवं ह्रीच्छासत्त्वादिरूपतया बिन्दोस्त्रैविध्यं परशक्तिमथादिशब्देनेरितं साक्षात् परशक्तिमयः। अतः पश्चात्तदवस्थात्मकत्वमेवोक्तम्। अथवा—परः शिवः, तन्मयः शक्तिमयः। एवमुभयात्मक इत्यर्थः। 'बिन्दुः शिवात्मकः' इति वक्ष्यमाणत्वात्। असौ त्रिधा भिद्यते। एतौ नादबिन्दू प्रथमोक्तनादबिन्दूभ्यां भिन्नौ तत्कार्यरूपौ ज्ञेयौ। तस्मादुक्तञ्च—'स बिन्दुर्भवति त्रिधा' इति।

बिन्द्वादेर्भेदत्रयस्य परम्परास्वरूपमुच्यते—

> बिन्दु शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः।
> समवायः समाख्यातः सर्वागमविशारदैः ॥
> रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत।
> वामा ताभ्यः समुत्पन्ना रुद्रब्रह्मरमाधिपाः ॥
> स ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः[2] ॥ इति।

तथा सति बिन्दुः कारणरूपः शिवात्मकः, बीजं शक्त्यात्मकं कार्यरूपम्, नादस्तयोः शिवशक्त्योर्मिथः सम्पृक्तः। एषां परस्परमविनाभावेनोत्पत्तेः सत्वात्समवायात्मकत्वम्। समवायश्च समवेतत्वाद्विष्ठत्वाच्च सम्बन्धः क्षोभ्यक्षोभकभावलक्षणः सृष्टिहेतुः सम्बन्धविशेषः। एतच्च सर्वागमविशारदैः शिवाचार्यैरिष्टम्। एवं हि तस्माद् बिन्दोः रौद्री, यतस्तस्य शिवमयत्वम्, अतोऽन्वर्थताऽपि। नादाज्ज्येष्ठेत्यादिना—मध्योच्चारितत्वेनान्वर्थत्वं ज्ञेयं, बीजाद् वामा अजायतेति। तस्य शक्तिमयत्वात् अन्वर्थत्वम्। उक्तञ्च प्रयोगसारे—

---

१. प्रप० सा०—१।४१।  २. शा० ति०—१।९-१०।

बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः ॥
रौद्री बिन्दोः समुद्‌भूता ज्येष्ठानादादजायत ।
वामा बीजादभूच्छक्तिस्ताभ्यो देवास्त्रयोऽभवन् ॥ इत्यादयः ।

सज्ञानेति शब्देन सज्ञाने इच्छाक्रिये तदात्मानस्तेन रुद्रब्रह्मरमाधिपाः क्रमेणेच्छाशक्ति-क्रियाशक्ति ज्ञानशक्तिस्वरूपाः, एते च वह्नीन्द्वर्कस्वरूपिणो रुद्रब्रह्मरमाधिपाः शब्दसृष्ट्यन्तर्गता निरोधिकाऽर्धेन्दुबिन्दुरूपाः, शक्तेरेवावस्थाविशेषा ज्ञेयाः । एषामिच्छाक्रियाज्ञानात्मत्वं तु शक्तिः, उत्पन्नत्वात् । वक्ष्यति च—'इच्छाज्ञानक्रियात्मासौ' इत्यादि । ईश्वरप्रत्यभिज्ञायामपि—

यदिच्छन्ति तज्ज्ञातुं कर्तुं वा स्वेच्छया क्रियाः ।
अनन्तरं हि तत्कार्यज्ञानदर्शनशक्तिता ॥
ज्ञानशक्तिस्तदर्थं हि योऽसौ स्थूलः समुद्यमः ।
सा क्रियाशक्तिरुदिता ततः सर्वं जगत्परम् ॥ इत्युक्तम् ।

यतः पुनस्तेषां वक्ष्यमाणत्वात्ततो रुद्रसमुद्‌भवस्ततो विष्णुस्ततो ब्रह्मा इति । अन्यथा पूर्वापरविरोधोऽपि स्यात् । शारदातिलककारमतेन शारदैव ब्रह्मविष्णुवीशरूपमादधाना समुल्लसतीत्युक्तम् । यथा—

शब्दार्थभाविभुवनं सृजतीन्दुरूपा
या तद् बिभर्ति पुनरर्कतनुः स्वशक्त्या ।
ब्रह्मात्मिका हरति तत्सकलं युगान्ते
तां शारदां मनसि जातु न विस्मरामि ॥ इति ।

गोरक्षसंहितायामपि—

इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी ।
त्रिधा शक्तिः स्थिता यत्र तत् परं ज्योतिरोमिति ॥ इत्याद्युक्तम् ।

पराद् बिन्दोरित्यनेन शक्त्यवस्थारूपो यः प्रथमो बिन्दुस्तस्मादव्यक्तात्मा वर्णादिविशेषरहितोऽखण्डो नादमात्रं रव उत्पन्नः, स एव शब्दब्रह्म इत्युच्यते । यथा—

भिद्यमानात्पराद् बिन्दोरव्यक्तात्मा रवोऽभवत् ।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ॥
शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे विदुः[1] ॥ इति ।

तथा चैवं शक्त्यवस्थारूपो यः प्रथमो बिन्दुस्तस्मादव्यक्तात्मा नादमात्रमेवोत्पन्नो रव एव सर्वागमविशारदैः सर्वश्रुत्यर्थविद्भिः, सृष्ट्युन्मुखपरमशिव-

१. शा० ति०—१।११–१२ ।

प्रथमोल्लासमात्रेऽखण्डोऽव्यक्तो नादबिन्दुमयः व्यापको ब्रह्मात्मकः शब्दः शब्दब्रह्म इत्युच्यते । उक्तञ्च--

> क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
> प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माऽभवत्परम् ।। इति ।

अथान्तरस्फोटवादिमतं जातिव्यक्तिस्फोटात्मकबाह्यस्फोटवादिनं वैयाकरणमतं दूषयितुमुपक्रम्योच्यते 'शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे विदुः' इति ।

अत्र केचन आचार्याः—शब्दार्थम् आन्तरस्फोटं शब्दब्रह्मेत्याहुः । यथा—'निरंश एवाभिन्नो नित्यो बोधस्वभावः शब्दार्थमय आन्तरस्फोट' इति । अपरे वैयाकरणास्तु-पूर्वपूर्ववर्णोच्चारणाभिव्यक्तं तत्तत् पदसंस्कारसहायचरमपदग्रहोद्बुद्धं वाक्यस्फोटलक्षणं शब्दमखण्डैकार्थप्रकाशकं शब्दब्रह्मेति वदन्ति । उक्तञ्च--

'एक एव नित्यो वाक्याभिव्यङ्ग्योऽखण्डो व्यक्तिस्फोटो वा बहीरूपः' इत्यादयः । एतदुभयमतं निराकर्तुमाचष्टे शारदातिलके—

> नहि तेषां तयोः सिद्धिर्ज्जडत्वादुभयोरपि ।
> चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ।। इति ।

तान्त्रिकमतं शब्दविषये व्यवस्थापयन्निदमुक्तम् । अस्याशयस्तु-वैयाकरणानाम्मते शब्दशब्दार्थयोः शब्दब्रह्मत्वसिद्धिर्न संपद्यते, उभयोस्तयोर्जडत्वात् । यदि शब्दार्थः शब्दो वा शब्दब्रह्मेत्युच्यते तदा ब्रह्मपदवाच्यत्वं नोपपद्यते, यतो हि सच्चिदानन्दरूपो ब्रह्मशब्दार्थः । तौ च शब्दार्थौ जडाविति सम्प्रधार्य हरिकारिकादावुक्तम्—

> अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
> विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[१] ।। इति ।

अन्यत्रापि—

> शब्दब्रह्मेति शब्दावगम्यमर्थं विदुर्बुधाः ।
> स्वतोऽर्थानवबोधत्वात् प्रोक्तो नैतादृशो रवः ।।
> स तु सर्वत्र संस्यूतो जाते भूताकारे पुनः ।
> आविर्भवति देहेषु प्राणिनामर्थविस्तृतः ।। इत्युक्तम् ।

एतेन सर्वागमविशारदाः इत्यनेन सहैकवाक्यतयैवास्य तद्बिन्दुरूपरवस्यैव सर्वशरीरेष्वाविर्भूतत्वेन वक्ष्यमाणत्वात् । तदुक्तं प्रयोगसारे—

> सोऽन्तरात्मा तदा देवी नादात्मा नदते स्वयम् ।
> यथा संस्थानभेदेन स भूयो वर्णतां गतः ।।

---

१. शा० ति०—१।११-१२ । २. वाक्य--१।१ ।

वायुना प्रेर्यमाणोऽसौ पिण्डाद् व्यक्तिं प्रयास्यति[1] ॥ इति ।

केचित्तु—

'शब्दब्रह्मे'ति' शब्दस्यार्थः शब्दमेवेत्याहुरिति योजनां कृत्वा सर्वागमविशारदा इत्येकः पक्षः । अपरे 'बिन्दुरिति' द्वितीयस्तयोर्दूषणमित्याहुः । तन्न, जडत्वादिति हेतुः प्रथमपक्षे न सम्भवति । आचार्यमतविरोधश्चापद्येत । तेन सर्वागमविशारदा इत्ययमेव पक्षो ग्रन्थकृदभिमत इति दिक् ।

एवं हि रव एव शब्दब्रह्मरूपं सङ्गम्य ततो वर्णात्मना सृष्टिः सम्भवतीत्युच्यते—

तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाऽऽविर्भवति गद्यपद्यादिभेदतः[2] ॥ इति ।

षण्णवत्यङ्गुलो देहायामस्तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमध उपरि च परित्यज्यैकाङ्गुलपरिमितं मध्यं 'मूलाधार' इत्युच्यते । तदुक्तम्—

पाय्य्वन्तात् द्वयङ्गुलादूर्ध्वं लिङ्गाच्च द्वयङ्गुलादधः ।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते ॥
गुदालिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ॥ इत्यादयः ।

एतेन देहस्य मध्यभागे कुण्डलिनी आद्या पराशक्तिस्तिष्ठति, तच्चैतन्यं गद्यपद्यादिभेदतो वर्णात्मानाऽऽविर्भवति । अत एव कुण्डलिनीशक्तिरेवैतस्य जगतो मूलमित्यवसीयते । एतावता शब्दसृष्टिरुक्ता । अधुनार्थसृष्टिं विवेचयन्नुच्यते—

अथ बिन्द्वात्मनः शम्भोः कालबन्धोः कलात्मनः ।
अजायत जगत्साक्षी सर्वव्यापी सदाशिवः ॥
सदाशिवाद् भवेदीशस्ततो रुद्रसमुद्भवः ।
ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भवः ॥ इति ।

अयम्भावः—कला माया तत उत्पन्नत्वाद् बिन्दुरपि तस्यैवावस्थान्तरम् । कार्ये कारणोपचारादात्मन इत्यस्योभयत्र योजना । यतश्च शक्तिशक्तिमतोरभेदः संगच्छते ।

अथवा कला निवृत्याद्याः, तदधिष्ठातृसदाशिवादीनां प्रतिलोम्येनोत्पादकास्तदात्मनः कालबन्धोरित्यनाद्यनन्ते काले सृष्टिरूपकालसहायान्नादात्मन इत्यर्थः । शम्भोः परमशिवात् सृष्टिस्थितिध्वंसनिग्रहानुग्रहकार्यजननात् । अत एव जगन्निर्माणबीजरूपो जगत् साक्षी सदाशिवो जातः । अतश्च कालबन्धो इत्युक्तम् ।

---

1. शा० ति० टी०—१।१२ ।     २. शा० ति०—१।१४ ।

अत एव कलात्मन इति हेतुहेतुमद्भावेन योजना। अथ च कालबन्धोरिति बन्धु-शब्देन कालस्य निमित्तत्वं सूचितम्। उक्तञ्च--

लवादिप्रलयान्तोऽयं तमः शक्तिविजृम्भितः।
निमित्तभूतः कालोऽयं भावानां जन्मनाशयोः॥

कालबन्धोरित्यनेनापरो लवादिप्रलयान्तः कालोऽपि सूचितः। तेनैव परकालस्योक्तत्वात्। स च--

नलिनीपत्रसंहत्यां सूक्ष्मसूच्यभिवेधने।
दले दले तु यः कालः स कालो लवसंज्ञकः॥ इत्युक्तम्।

अन्ये तु--

कालबन्धोर्ज्ञानात्मनः। कश्च लश्चेति प्रत्याहारेण व्यञ्जनानि गृहीतानि, अश्चेत्यनेन स्वरा अपि गृहीताः। तदात्मन इति।

केचित्तु--

कश्च लश्चात्मा दीर्घेकारः। चतुर्णामात्मनां चतुर्थ उक्तः। कालशब्देनार्क-स्तेन मः। यद्वा कालशब्देन महाकालो मकारस्य रुद्रमूर्तिर्गृहीता। भीमो भीमसेन इतिवत्। तेन मकारः। एवं मिलित्वा कामबीजमुद्धृतम्। तस्मादित्युक्तम्। तस्य जगन्मूलत्वाच्छम्भोः। तथा हि--

'भ्रमन्तं योन्यतः स्फुरदरुणबन्धूककुसुमप्रभं कामं ध्यायेज्जरठशशि-भृत्कोटिशिशिरम्' इत्यादिना शरीरे मूलाधारे तेजस्त्रयरूपस्य तस्यैवोक्तत्वात् शक्तिरूपत्वाच्च बिन्द्वात्मन इति। उक्तञ्च--

विश्वं भूतेन्द्रियान्तःकरणमयमिनैन्द्वाग्निरूपं समस्तम्
वर्णात्मैतत्प्रधाने कलनयनमये बीजरूपक्रमेण।
नीत्वा तं पुंसि बिन्द्वात्मनि तमपि स्वात्मन्यथोकालतत्त्वे
तं वै शक्तौ चिदात्मन्यपि नयतु च तां केवले धाम्नि शान्ते॥ इति।

परे तु शम्भो हकारात् कलार्धेन्दुरात्मा ईकारः। बिन्दुः, बिन्दुरेव। कालाग्निः प्रलये सर्वविनाशकत्वात्। एवं मायाबीजमुद्धृतम्। तस्मादित्युक्तम्। अस्या जगन्मूलबीजभूतत्वं प्रसिद्धमेव। इदं च व्याख्यानं प्रपञ्चसारकर्तुरभीष्टम्। तदुक्तम् --

स्वामिन् प्रसीद विश्वेश के वयं केन भाविता।
किं क्रिया सर्वमस्मभ्यं वक्तुमर्हसि साम्प्रतम्॥ इति।

एवं हि तथा पृष्टे सति ज्योतिरुवाच—'प्रमिताक्षरम्' इति। अस्य पद्यस्य व्याख्याने पद्मपादाचार्यैर्व्याख्यातम्, सर्वेश्वरोपादानादिकं संग्रहेणोक्तवानित्याह। प्रकर्षेण मीयते ज्ञायते इति प्रमिता प्रकृतिः। प्रमिणोति जानातीति प्रमितः

पुरुषः। प्रमिणोति परिच्छिनत्ति इति प्रमितः कालः। तेषां प्रमितानां वाचकमक्षरं प्रमिताक्षरं परा वाक्। तत् तत्त्वं हकार इत्यर्थः। तस्य बीज-बिन्दु-नादरूपेण प्रकृत्यादिवाचकत्वं द्रष्टव्यम्। एतेन हेत्युत्तरमुवाचेत्यर्थः। संग्रहेणोक्तस्याप्रतिपत्तिमालक्ष्य तदेव विवृणोति 'यूयमक्षरसम्भूताः सृष्टिस्थित्यन्तहेतवः' इत्यादिना। क्षरत्यश्नुते वेति व्युत्पत्या—'अक्षरात् सम्भवतीह विश्वम्' इत्युक्तम्। तेषामिति पदेन शब्दसृष्टौ तेषामुद्भव उक्त एव। तेषामेव समुद्भव अर्थसृष्टौ इत्यर्थः।

एवं प्रकृतायामर्थसृष्टौ तत्त्वसृष्टिं वक्तुमारभते—

मूलभूतात्ततोऽव्यक्ताद्विकृतात्परवस्तुनः।
आसीत्किल महत्तत्वं गुणान्तः कारणात्मकम्॥
अभूत्तस्मादहङ्कारस्त्रिगुणः सृष्टिभेदतः।
वैकारिकादहङ्काराद् दैवा वैकारिका दश[1]॥ इति।

अनयोः कारिकयोरित्थं व्याख्या शारदातिलके लभ्यते। तत्र मूलभूतादित्यस्य सर्वसृष्टिमूलरूपादित्यर्थः। अत एव परवस्तुन इत्युक्तम्। अव्यक्ताद् बिन्दुरूपात्। यद्वा शब्दब्रह्मणो विकृतात् सृष्टचुन्मुखात् महत्तत्त्वम्महन्नाम पदार्थः, उत्पन्न आसीदिति, यस्य शैवमते बुद्धितत्त्वमिति संज्ञा। किं रूपं? सत्त्वरजस्तमोगुणात्मकम्। मनोबुद्धचहङ्कारचित्तस्वरूपमन्तःकरणचतुष्टयात्मकता तु तत्कारणत्वेन कार्ये कारणोपचारादित्येवं शैवसिद्धान्तविदः प्राहुरिति।

तदुक्तमीशानेन शिवेन—

बोद्धव्यलक्षणा सैव प्रकृतिः शक्तिजृम्भिता।
बुद्धितत्त्वं भवेद् व्यक्तं सात्त्विकङ्गुणमाश्रिता॥
सैव बुद्धिर्महन्नाम तत्त्वं साङ्ख्ये निगद्यते॥ इति।

वामकेश्वरतन्त्रे च—

अव्यक्तविग्रहात् शब्दब्रह्मणः सर्वकारणम्।
अव्यक्तसत्त्वगुणं व्यक्तं बुद्धितत्त्वमजायते॥ इत्युक्तम्।

साङ्ख्यमते तु सत्त्वरजस्तमसां साम्यावस्थारूपा प्रकृतिः प्रधानापरपर्यायमव्यक्तशब्देनोच्यते। तत्परवस्तु सर्वमूलभूतं गुणन्यूनातिरेकेण विकृतात्तस्मान्महानुत्पन्नः। स कीदृशः? गुणान्तः करणात्मा। गुणाः शब्दरूपरसगन्धस्पर्शतन्मात्राणि। एषामन्तःकरणचतुष्टयस्यापि कारणरूपः। उपचारादुभयात्मकः। तथा सृष्टिक्रमोऽपि—'प्रकृतेर्महान् महतोऽहङ्कार इति। एवं ह्येतस्मान्महतस्त्रिविधोऽहङ्कारः सृष्टिभेदतो जातः। वैकारिकस्तेजसो भूतादितश्चेति।

तदुक्तम्—

१. शा० ति० १।१७-१८।

अव्यक्तमेव तु व्यक्तन्तन्महन्नामलक्षणम् ।
ततोऽहङ्कारात्तत्वं स्यात्सत्त्वादिगुणभेदकम् ।।
सोऽहङ्कारस्त्रिभेदः स्यात्पृथक्तत्त्वान्यवासृजन् ।। इति ।

तत्कार्यं वदन्नेवं त्रैविध्यमुन्मीलयति वैकारिकादहङ्कारादित्यनेन । तथा हि शक्तिसामरस्यवित्कृतपरमेश्वरादुत्पन्नत्वात् वैकारिकत्वमस्य तदुत्पन्नत्वाद्देवानामपीष्टम् । साङ्ख्यमतेऽपि गुणोद्रेकविकृतप्रधानोत्पत्तेरिदमेव कारणम् ।

देवानामुत्पत्तिप्रकरणं व्यावृण्वन्नाह—

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
तैजसादिन्द्रियाण्यासंस्तन्मात्राक्रमयोगतः[1] ।। इति ।

कारिकाशयस्तु—दिक्दशदिशः, वातो भेदसहितो मरुत् पञ्चप्राणाश्च, अर्को गभस्तिभिर्युक्तो भगवान् विवश्वान्, प्रचेतो वरुणः, अश्वीत्यश्विनीकुमारौ। यद्यप्येतौ द्वौ तथापि सहचारित्वात्सहजातत्वाच्चैकत्वेनोक्तिः । वह्निरनलः, इन्द्रो देवराजो विष्णुरूपः, उपेन्द्रो विष्णोरेका मूर्तिः । मित्रस्तृतीयः सूर्यः । उक्तञ्च कोशे –'मित्रोभानुस्तृतीयकः' इति । को ब्रह्मण एका मूर्श्चिन्द्रोऽपि ज्ञेयः । एते इन्द्रियाधिष्ठातृदेवा इति ।

उक्तञ्च—

वैकारिका दिगाक्षा ये चन्द्रेणैकादशस्मृताः ।
इन्द्रियाणामधिष्ठातृदेवास्ते परिकीर्तिताः ।। इति ।

तैजसादित्यनेन तैजसादहङ्कारादिन्द्रियाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि मनश्चेति । तदुक्तम्—

यच्चापरं मनस्तत्वं ससंकल्पविकल्पकम् ।
तैजसादेव तज्जातम् ..... ..... ।। इति ।

साङ्ख्यमते वैकारिकादहङ्कारात् तैजसाहङ्कारमिलितात् इन्द्रियाण्यासन् इति । एवं तैजसाहङ्कारसहितात् भूतादेरपि तन्मान्त्रोत्पत्तिः । तदुक्तं सांख्यकारिकायाम्—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्[2] ।। इति ।

एवं हि भूतादिकादहङ्कारात्तन्मात्रयोगतः पञ्चभूतानि जज्ञिरे । तदुक्तम्—

भूतादिकादहङ्कारात्पञ्चभूतानि जज्ञिरे ।
शब्दात्पूर्वं वियत्स्पर्शाद् वायुरूपाद्धुताशनः ।।
रसादम्भः क्षमागंधादिति तेषां समुद्भवः[3] ।। इति ।

---

१. शा० ति० १।१९ । २. सां० का०—२५ । ३. शा०ति—१।१९-२०½ ।

तत्रादौ आकाशादीनां कारणभूताः पञ्चतन्मात्रा जाताः। शब्दतन्मात्रा, स्पर्शतन्मात्रा, रूपतन्मात्रा, रसतन्मात्रा, गन्धतन्मात्राश्च। एताभ्यस्तन्मात्राभ्य आकाश-वायु-तेजो-जल-पृथ्वीरूपाणि पञ्चभूतान्युत्पन्नानि। उक्तञ्च —

शब्दः स्पर्शश्च रूपश्च रसो गन्धश्च पञ्चमः।
तन्मात्रादेव विषया भूतादेरभवन् क्रमात्॥

ततः समभवद् व्योम शब्दतन्मात्ररूपकम्।
स्पर्शात्मकस्ततो वायुस्तेजोरूपात्मकस्ततः॥
आपो रसात्मकस्तस्मास्तेभ्यो गन्धात्मिका मही।
ततः स्थूलानि भूतानि पञ्च तेभ्यो विराडपि॥ इति।

पुनश्च भूतोत्पत्तिस्वरूपमुच्यते शब्दादित्यादिना। शब्दतन्मात्रादाकाशः, स्पर्शतन्मात्रतो वायुः, रूपतन्मात्रतोऽग्निः, रसतन्मात्रतो जलम्, गन्धतन्मात्रतः पृथिवीति।

एवं हि पञ्चतन्मात्रेभ्यः पञ्चमहाभूतेषु पञ्चवर्णस्याप्युदय इति निर्दिशति—

स्वच्छं वियन्मरुत्कृष्णो रक्तोऽग्निर्विसदं पयः[1]॥ इति।

एकैकमहाभूतमाधारीकृत्य शब्दादयो गुणास्तिष्ठन्ति। तदुच्यते—

पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः।
शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः[2]॥ इति।

तथा च सांख्याः शब्दो गुणो वियतः, शब्दस्पर्शौ वायोः, तौ रूपञ्चाग्नेः, रसेन सह तानि जलस्य, गन्धेन सह पञ्च पृथिव्या इत्याहुः। आगमविदस्तु—

शब्दैकगुणमाकाशः शब्दस्पर्शगुणो मरुत्।
शब्दस्पर्शरूपगुणैस्त्रिगुणन्तेज इष्यते॥
शब्दस्पर्शरूपरसगुणैरापश्चचतुर्गुणाः।
शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही॥ इति सांख्यवदेवावगन्तव्यम्।

ननु भूतानामाश्रयत्वेन कानि मण्डलानि सम्वृत्तानीति जिज्ञासायामुच्यते—

वृत्तं दिवस्ततः षड्बिन्दुलाञ्छितं मातरिश्वनः।
त्रिकोणं स्वस्तिकोपेतं वह्नेरर्धेन्दुसंयुतम्॥
अम्भोजमम्भसो भूमेश्चतुरस्रं सवज्रकम्।
तत्तद्भूतसमाभानमण्डलानि विदुर्बुधाः[3]॥ इति।

---

१. शा० ति–१।२१½।  २. तत्रैव–१।२२।  ३. तत्रैव—१।२३-२४।

अस्याभिप्रायस्तु—शिवस्य आकाशस्य वृत्तमायतमेव समभावेन वृत्तपरिधि-रेखामध्ये षड्बिन्दुलाञ्छितम्। मातरिश्वनोर्वायोः, त्रिकोणमूर्ध्वाग्रम्, स्वस्तिको-पेतं सम्पातरेखाः संवर्ध्य तत्र स्वस्तिकाकारं कुर्यादित्यर्थः। स्वस्तिकं नाम पर-स्परसंबद्धं विदिग्गतचतुर्वक्त्रं रेखाद्वयं, वह्निरिति पूर्वेणान्वेति। अर्द्धेन्दुसंयुतम् अर्द्धेन्दौ संयुतमित्यर्धेन्दुसंयुतं सप्तमीति योगविभागात् समासः। अर्द्धेन्दुसंयुतं अम्भोजमम्भस इति सम्बन्धः। अथवा अर्द्धेन्दुरम्भोजस्तत्सहितं संयुतमुभयं मिलितमम्भसोममण्डलं तेनार्द्धेन्दुं कृत्वा तदुभयभागे सरोजद्वयं कुर्यादिति। एवं हि चतुरस्ररेखाष्वष्टवज्राणि कार्याणि। अन्योऽन्याभिमुखतया त्रिवक्त्रं रेखाद्वयम्, परस्परं सम्बद्धं वज्रम्, परस्परं सम्बद्धं मध्यं रेखाद्वयमिति केचन वदन्ति। एतेन भूम्यादौ मण्डललेखने तत्तद् वर्णरजोभिः पूरणमप्युक्तं भवतीति।

एवं भूतलिपियन्त्रेषु यः कर्णिकालिखितो मन्त्रस्तद् वर्णैरावृतो भवति। तथा च संहारक्रमेण शक्तिः शान्त्यतीता-शान्तिः-विद्या-प्रतिष्ठा-निवृत्तिरिति पञ्चकला जगत्कारणभूता व्यवतिष्ठन्ते। इदमखिलं जगदाभिः कलाभिर्व्याप्तं विद्यते। तदुद्दिश्योच्यते मूले—

वर्णैः स्वै रञ्चितान्याहुः स्वस्वनामावृतान्यपि।
धरादिपञ्चभूतानां निवृत्याद्याः कलाः स्मृताः॥
निवृत्तिः सुप्रतिष्ठा स्याद् विद्याः शान्तिरनन्तरम्।
शान्त्यतीतेति विज्ञेया नाददेहसमुद्भवाः[1] ॥ इति:

अत्रान्तिमे श्लोके नाददेहेत्यनेन नादाद् देहो यस्य स नाददेहो बिन्दुः, ततः समुद्भवाः पञ्चकला विज्ञेयाः। अथवा नादो हकारः, नादस्य ध्वनेर्देहोत्पत्तिर्य-स्मात् स वायुस्तेन यः स इति धर्मधर्मिणोरभेदात्। देहशब्देनोत्पत्तिरुक्ता 'मारुतस्तूरसि चरन्मन्द्रं जनयति ध्वनिम्' इत्युक्तेर्नादोत्पत्तिहेतुत्वं तस्य समुद्दी-प्यमाना भा दीप्तिर्यस्येत्यग्निस्तेन रः बाह्यरूपं तत्र यरलवानां क्रमेण ग्रहणे कर्तव्ये यत्त्रयाणामेव ग्रहणं कृतवान् तेन लकारोऽप्यस्तीति ज्ञेयम्। प्रथमतो नादग्रहणात् बिन्दुयोगोऽप्येषां ज्ञेयः। एतानि विलोमेन तन्मात्राबीजानि।

अथवा नादो हकारस्तस्य देहः स्वरूपम्, तत्र समुद्भवः स्थितिर्येषां एवं-भूताः। आ आवर्णादयः। आ ई ऊ ऐ औकाराः, एषां सबिन्दुकत्वं ज्ञेयम्। त्रिकोणोत्तरे तदुक्तम्—

नादाख्यं यत्परं बीजं सर्वभूतेष्ववस्थितम्।
मूर्त्तिदं परमं दिव्यं सर्वसिद्धिप्रदायकम्॥
शान्तं सर्वगतं शून्यं मात्रापञ्चकसंस्थितम्[2] ॥ इति।

---

१. शा० ति—१।२५-२६। २. तत्रैव—टीकायाम्।

केचन तु नादात्मना क्रमेणैषां लवरयहानां योगमाहुः। तद्यथा ह्लां ह्वीं ह्रूँ ह्यैं हौं एतानि अपञ्चीकृतभूतबीजानीति वदन्ति।

अथवा नादो हकारः शरीरस्य पृथिव्यंशाधिक्याद्देहशब्देन लकारः, तस्य समुद्भवः स्थितिर्यत्र स देहसमुद्भवो येषु अकारादिषु ते नाददेहसमुद्भवाः। अत्र क्रमेण लवरयहयोगमाहुः। तद्यथा—ह्लां ह्वीं ह्रूँ ह्यैं हौं एतानि पञ्चीकृतभूतबीजानि। भूतबीजानामेव तदभिमानिनि निवृत्याद्यादिबीजत्वं ज्ञेयम्।

एवं ह्येतेभ्यस्त्रिविधिभ्योऽहंकारेभ्यो वैकारिकतेजसो भूतादिभ्यश्च पञ्चभूतान्युत्पद्यन्ते। वैकारिकादहङ्कारात् दिग्वातार्कादयो देवाः, तैजसादहङ्कारात् कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि मनश्च, भूतादिकादहङ्कारात्पञ्चभूतानि जायन्ते इति शारदातिलककाराणां महामहेश्वराचार्यलक्ष्मणदेशिकानां मनोभावः।

एवं हि चराचरात्मकमिदन्निखिलञ्जगत्पञ्चभूतात्मकमेवेत्यवधार्योच्यते-ऽऽचार्येण—

पञ्चभूतात्मकं सर्वं सचराचरमिदं जगत्।
अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः॥
चरास्तु त्रिविधाः प्रोक्ताः स्वेदाण्डाज्जरायुजाः।
स्वेदजा कृमिकीटाद्या अण्डजाः पन्नगादयः॥
जरायुजा मनुष्याद्यास्तेषु नृणां निगद्यते।
उद्भवः पुंस्त्रियो योगात् शुक्रशोणितसंयुततात्॥
बिन्दुरेको भवेद् गर्भमुभयात्मा क्रमादसौ।
रजोऽधिके भवेन्नारी भवेद्रेतोऽधिके पुमान्॥
उभयोः समतायां तु नपुंसकमितिस्थितिः।
पूर्वकर्मानुरूपेण मोहपाशेन यन्त्रितः॥
कश्चिदात्मा तदा तस्मिन् जीवभावं प्रपद्यते[1]॥

इत्येवं शारदातिलकाशयो मयाऽत्र सृष्टिक्रमे दिङ्मात्रेणैव निवेदित इति सुधियो विभावयन्तु।

## योगिनीहृदयदृष्ट्या सृष्टिस्वरूपविमर्शः

अतिरहस्यात्मकं हि तन्त्रागमशास्त्रम्। अतोऽपरपर्यायेनेदं साधनाशास्त्र-मप्युच्यते। तत्र क्रमव्यतिरेकः कथमपि नेष्ट इति तत्र तत्र तत्त्वज्ञा जानन्त्येव। तदुक्तं ग्रन्थारम्भे दीपिकाकृता अमृतानन्दयोगिराजेन—

---

१. शा० ति०—१।२७ तः ३१½।

मानुषीहृदयं मर्त्यो वेत्ति नैकोऽपि तत्त्वतः ।
योगिनीहृदयं ज्ञातुं कः समर्थः शिवं विना[1] ।। इत्युक्तम् ।

तत्र योगिन्याः परदेवताया हृदयं तत्त्वं ज्ञातुं वर्तन्तेऽत्र ग्रन्थे पटलत्रयं चक्रसङ्केत–मन्त्रसङ्केत–पूजासङ्केतनामभिः । किञ्च, 'योगिनीहृदयं योगिन्याः स्वसंविदो हृदयमिवाविर्भावभूमित्वाद् हृदयम्' । अत्र तु योगो नाम समस्तवस्तुसमवायः सम्बन्धस्तेन भासत इति योगिनी । तदुक्तमभियुक्तैः—

देशकालपदार्थात्मा यद्यद्वस्तु यथा तथा ।
तत्तद्रूपेण या भाति तां श्रये सांविदीं कलाम् ।। इत्याहामृतानन्दनाथो दीपिकायाम् । भास्कररायकृते सेतुवन्धे च 'योगिनीहृदयनामकं योगिन्यास्त्रिपुरसुन्दर्या हृच्चित्तं प्रत्ययते गच्छति प्राप्नोति, देवीमनोगतमिति यावत्[3]' इत्युक्तम् । एतेन योगिनीहृदयस्य गभीरता स्वयमेव सिद्ध्यति । तथा चात्र ग्रन्थे सृष्टिप्रक्रियामुद्दिश्य किं निरूपितमिति जिज्ञासा आपातत एव समुदेति । ततश्चात्रत्यभावमुद्दिश्य विविच्यते किञ्चित्—

यस्मिन् काले प्राणिनामदृष्टवशात् स्वान्तःसंहृतविश्वसिसृक्षया परा शक्तिर्विमर्शरूपिणी स्वेच्छया विश्वरूपिणी विश्वं सृजति, यतो हि विश्वसर्जनमेव पराशक्तेः स्फुरत्ता, तस्याः सृष्टिरूपत्वात्, तदा षट्त्रिंशत्तत्त्वात्मकविश्वसृष्टिकाले विश्वमयस्य परदेवतास्वरूपचक्रस्योत्पत्तिर्भवति । तदुक्तं ग्रन्थे—

यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ।
स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः[4] ।। इति ।

तत्रैवं निष्कर्षः, प्रलयो, नामानन्तशक्तिकस्य ब्रह्मणः स्वरूपमात्रेण कञ्चित्कालमवस्थानं सुषुप्तिकाले जीवस्येव । पूर्वसृष्टिदशायां ये तावज्ज्ञानानुदयान्न मुक्तिमापन्ना जीवराशयस्ते तत्तददृष्टानि च पञ्चमहाभूतानि स्थूलसूक्ष्माणि च कार्पासबीजे पटा इव सूक्ष्मरूपेण प्रलयकालीनब्रह्मणि तिष्ठन्ति । तदुक्तं शक्तिसूत्रभाष्ये 'चिद्वह्निरवरोहपदे छन्नोऽपि चिन्मात्रया मेयेन्धनं प्रुष्यति[5]' इति । अत्र मात्रापदस्येदमाकूतं यत्कलयन्नपि न सार्वात्म्येन ग्रसतेऽपित्वंशेन संस्कारात्मना तत्स्थापयति इति । ततश्च सुप्तस्य जीवस्य स्वत एवोत्थाने तदीयं कर्मैव यथा कारणमुक्तम्—

सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ।
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः[6] ।। इति ।

---

१. यो० हृ० दी०—१।६ । २. तत्रैव—१।२ । ३. तत्रैव—सेतु० टी० ।
४. यो० हृ०—१। ९३ । ५. तत्रैव—से० टी०—१-९ ।
६. यो० हृ०, से० टी०—१। ९३ ।

एवमेव पूर्वसृष्टिकालप्राण्यदृष्टवशादेव तादृशशक्तिके ब्रह्मणि प्राथमिकवृत्युद्गम इति न तत्र कारणान्तरं मृग्यम् । न चादृष्टस्यैव प्रथमवृत्तिं प्रति कारणत्वे प्रलयारम्भमध्यकालयोरपि तदापत्तिरिति वाच्यम्, अस्य पर्यनुयोगस्य सुषुप्तावपि तुल्यत्वात्, अभिघातादेः कालान्तरे वेदनाजनकत्वस्यापि दर्शनेन कारणवैचित्र्यादेवोपपत्तेश्च ।

तथा च शिवशक्तिसामरस्यरूपकामाख्यस्य बिन्दोः संसारः प्रस्पन्द इह नेन्दूरूपसितशोणबिन्दुद्वयात्मक अकारहकारसामरस्यबिन्दोः प्रस्पन्दात् सितशोणबिन्दुयुगलात् संविच्चिन्मयी दहनेन्दुरूपचित्कला जायते । तदुक्तम्—

शून्याकाराद्विसर्गान्ताद् बिन्दोः प्रस्पन्दसंविदः[1] ।। इति ।

प्रकाशः परमार्थः । तस्मात् प्रकाशविमर्शवह्निसम्पर्काद् घृतस्येव धारा विमर्शशक्तेः स्रावो जायते । अत एव प्रकाशस्य परमार्थत्वम् । प्रकाशस्यैव स्फुरणेन ततश्च बैन्दवीसृष्टिरुदेति । तत एव बिन्दोरुच्छूनायां लहरीत्वेन षट्त्रिंशत्तत्त्वात्मना निखिलब्रह्माण्डमेतत्प्रादुर्भवति । तत एव प्रादुर्भूतं बिन्दुतत्त्वं तत्त्रिकोणगम्यं सदीश्वरसत्ताप्रबोधकं त्रिकेणेषु मध्यगं भवति । एवं तत्समष्टिरूपपरमात्मात्मकसदाशिवाख्यतुरीयबिन्दोरुत्पन्नत्वात् बैन्दवं चक्रं मध्यत्रिकोणप्रसरमिति जायते । तदुक्तम्—

प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात् ।
प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम्[2] ।। इति ।

अयम्भावः—चक्रं त्रिकोणाकारमेतन्निखिलं जगद्धि मातृत्रयात्मकं भवति । मातरो विश्वजनन्य इच्छाज्ञानक्रियानामिका देव्यस्त्रितयसमष्टिरेवात्मा स्वरूपं यस्य तत् । उक्तायाः प्राथमिकवृत्तेरिच्छादित्रयसमष्टिरूपत्वात् । मातृपदेनैवेच्छादिपरामर्शस्तु वामादित्रयसमष्टिरूपतायाः श्लेषेण पश्यन्त्यादिमातृकात्रयसमष्टिरूपतायाश्च ध्वननार्थम् । विश्वस्य लहरीत्वोक्त्या तादृशवृत्तेः समुद्रतुल्यता ध्वनिता । तादृश्यवृत्त्युद्गमोत्तरमेव क्रमेण सर्वसृष्टीनां जायमानत्वाद्विश्वजनकमित्यर्थः ।

अत्रेदं रहस्यम् । अर्थसृष्टिशब्दसृष्टयोर्युगपदेवाङ्कुरतच्छाययोरिव परस्परसंपृक्तयोरुत्पत्तिः, पदार्थमात्रस्य शब्दानुविधत्वात् 'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये[3]' इति कविकुलगुरोः कालिदासोक्तेश्च, ततश्च सृष्टिकारणे ब्रह्मणि शिवशक्तिरूपेऽर्थत्ववच्छब्दत्वमप्यस्तीति वक्तव्यम् । तत्र चाकारः शिवस्य रूपं हकारः शक्तिरूपम् । तदुक्तं सङ्केतपद्धत्याम्—

आकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः[4] ।। इति ।

---

१. यो० हृ०—१।१० ।
२. तत्रैव—१।११ ।
३. र० म० का०—१।१।
४. से० ब० टी०—१।११ ।

मानुषीहृदयं मर्त्यो वेत्ति नैकोऽपि तत्त्वतः।
योगिनीहृदयं ज्ञातुं कः समर्थः शिवं विना[1] ॥ इत्युक्तम्।

तत्र योगिन्याः परदेवताया हृदयं तत्त्वं ज्ञातुं वर्तन्तेऽत्र ग्रन्थे पटलत्रयं चक्रसङ्केत–मन्त्रसङ्केत–पूजासङ्केतनामभिः। किञ्च, 'योगिनीहृदयं योगिन्याः स्वसंविदो हृदयमिवाविर्भावभूमित्वाद् हृदयम्'। अत्र तु योगो नाम समस्तवस्तुसमवायः सम्बन्धस्तेन भासत इति योगिनी। तदुक्तमभियुक्तैः—

देशकालपदार्थात्मा यद्यद्वस्तु यथा तथा।
तत्तद्रूपेण या भाति तां श्रये सांविदीं कलाम् ॥ इत्याहामृतानन्दनाथो दीपिकायाम्। भास्कररायकृते सेतुबन्धे च 'योगिनीहृदयनामकं योगिन्यास्त्रिपुरसुन्दर्या हृच्चित्तं प्रत्ययते गच्छति प्राप्नोति, देवीमनोगतमिति यावत्[3]' इत्युक्तम्। एतेन योगिनीहृदयस्य गभीरता स्वयमेव सिद्ध्यति। तथा चात्र ग्रन्थे सृष्टिप्रक्रियामुद्दिश्य किं निरूपितमिति जिज्ञासा आपातत एव समुदेति। ततश्चात्रत्यभावमुद्दिश्य विविच्यते किञ्चित्—

यस्मिन् काले प्राणिनामदृष्टवशात् स्वान्तःसंहृतविश्वसिसृक्षया परा शक्तिर्विमर्शरूपिणी स्वेच्छया विश्वरूपिणी विश्वं सृजति, यतो हि विश्वसर्जनमेव पराशक्तेः स्फुरत्ता, तस्याः सृष्टिरूपत्वात्, तदा षट्त्रिंशत्तत्त्वात्मकविश्वसृष्टिकाले विश्वमयस्य परदेवतास्वरूपचक्रस्योत्पत्तिर्भवति। तदुक्तं ग्रन्थे—

यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी।
स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य सम्भवः[4] ॥ इति।

तत्रैवं निष्कर्षः, प्रलयो, नामानन्तशक्तिकस्य ब्रह्मणः स्वरूपमात्रेण कञ्चित्कालमवस्थानं सुषुप्तिकाले जीवस्येव। पूर्वसृष्टिदशायां ये तावज्ज्ञानानुदयान्न मुक्तिमापन्ना जीवराशयस्ते तत्तददृष्टानि च पञ्चमहाभूतानि स्थूलसूक्ष्माणि च कार्पासबीजे पटा इव सूक्ष्मरूपेण प्रलयकालीनब्रह्मणि तिष्ठन्ति। तदुक्तं शक्तिसूत्रभाष्ये 'चिद्वह्निरवरोहपदे छन्नोऽपि चिन्मात्रया मेयेन्धनं प्रुष्यति[5]' इति। अत्र मात्रापदस्येदमाकूतं यत्कलयन्नपि न सार्वात्म्येन ग्रसतेऽपित्वंशेन संस्कारात्मना तत्स्थापयति इति। ततश्च सुप्तस्य जीवस्य स्वत एवोत्थाने तदीयं कर्मैव यथा कारणमुक्तम्—

सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति।
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः[6] ॥ इति।

---

१. यो० हृ० दी०—१।६।    २. तत्रैव—१।२।    ३. तत्रैव—सेतु० टी०।
४. यो० हृ०—१। ९½।    ५. तत्रैव—से० टी०—१-९।
६. यो० हृ०, से० टी०—१। ९½।

एवमेव पूर्वसृष्टिकालप्राण्यदृष्टवशादेव तादृशशक्तिके ब्रह्मणि प्राथमिकवृत्युद्गम इति न तत्र कारणान्तरं मृग्यम्। न चादृष्टस्यैव प्रथमवृत्तिं प्रति कारणत्वे प्रलयारम्भमध्यकालयोरपि तदापत्तिरिति वाच्यम्, अस्य पर्यनुयोगस्य सुषुप्तावपि तुल्यत्वात्, अभिघातादेः कालान्तरे वेदनाजनकत्वस्यापि दर्शनेन कारणवैचित्र्यादेवोपपत्तेश्च।

तथा च शिवशक्तिसामरस्यरूपकामाख्यस्य बिन्दोः संसारः प्रस्पन्द इह नेन्दूरूपसितशोणबिन्दुद्वयात्मक अकारहकारसामरस्यबिन्दोः प्रस्पन्दात् सितशोणबिन्दुयुगलात् संविच्चिन्मयी दहनेन्दुरूपचित्कला जायते। तदुक्तम्—

शून्याकाराद्विसर्गान्ताद् बिन्दोः प्रस्पन्दसंविदः[1] ॥ इति।

प्रकाशः परमार्थः। तस्मात् प्रकाशविमर्शवह्निसम्पर्काद् घृतस्येव धारा विमर्शशक्तेः स्रावो जायते। अत एव प्रकाशस्य परमार्थत्वम्। प्रकाशस्यैव स्फुरणेन ततश्च बैन्दवीसृष्टिरुदेति। तत एव बिन्दोरुच्छूनायां लहरीत्वेन षट्त्रिंशत्तत्त्वात्मना निखिलब्रह्माण्डमेतत्प्रादुर्भवति। तत एव प्रादुर्भूतं बिन्दुतत्त्वं तत्तत्रिकोणगम्यं सदीश्वरसत्ताप्रबोधकं त्रिकेणेषु मध्यगं भवति। एवं तत्समष्टिरूपपरमात्मात्मकसदाशिवाख्यतुरीयबिन्दोरुत्पन्नत्वात् बैन्दवं चक्रं मध्यत्रिकोणप्रसरमिति जायते। तदुक्तम्—

प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात्।
प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम्[2] ॥ इति।

अयम्भावः—चक्रं त्रिकोणाकारमेतन्निखिलं जगद्धि मातृत्रयात्मकं भवति। मातरो विश्वजनन्य इच्छाज्ञानक्रियानामिका देव्यस्त्रितयसमष्टिरेवात्मा स्वरूपं यस्य तत्। उक्तायाः प्राथमिकवृत्तेरिच्छादित्रयसमष्टिरूपत्वात्। मातृपदेनैवेच्छादिपरामर्शस्तु वामादित्रयसमष्टिरूपतायाः श्लेषेण पश्यन्त्यादिमातृकात्रयसमष्टिरूपतायाश्च ध्वननार्थम्। विश्वस्य लहरीत्वोक्त्या तादृशवृत्तेः समुद्रतुल्यता ध्वनिता। तादृशयवृत्त्युद्गमोत्तरमेव क्रमेण सर्वसृष्टीनां जायमानत्वाद्विश्वजनकमित्यर्थः।

अत्रेदं रहस्यम्। अर्थसृष्टिशब्दसृष्टचोर्युगपदेवाङ्कुरतच्छाययोरिव परस्परसंपृक्तयोरुत्पत्तिः, पदार्थमात्रस्य शब्दानुविद्धत्वात् 'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये[3]' इति कविकुलगुरोः कालिदासोक्तेश्च, ततश्च सृष्टिकारणे ब्रह्मणि शिवशक्तिरूपेऽर्थत्ववच्छब्दत्वमप्यस्तीति वक्तव्यम्। तत्र चाकारः शिवस्य रूपं हकारः शक्तिरूपम्। तदुक्तं सङ्केतपद्धत्याम्—

आकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः[4] ॥ इति।

---

१. यो० हृ०—१।१०। २. तत्रैव—१।११।
३. र० म० का०—१।१। ४. से० ब० टी०—१।११।

तौ चाकारहकारौ न वैखरीरूपाविवातिस्पष्टस्वरूपौ, किन्तु सूक्ष्मतमस्वरूपौ, वैखरीतोऽपि सूक्ष्मसूक्ष्मतरसूक्ष्मतमानां मध्यमापश्यन्तीपरारूपाणां त्रिविधवर्णानां सत्वात् 'गुहा त्रिणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति श्रुतेः। अन्योऽप्यस्य रहस्यतरः प्रपञ्चो वरिवस्यारहस्ये स्फुटीकृतः। तथा च हकारोऽनुबुद्धोऽकारः शक्तिरूपधर्मानुबद्धः शिवरूपो धर्मीत्यर्थः। विसर्गान्तिपदेनैव वा षोडशः स्वर उच्यते। स चाकारहकारोभयरूप एव। विसर्गान्तो ह्येकमखण्डमकारहकारोभयरूपस्यात्यखण्डताप्रतीत्या तादृशस्य निर्गुणब्रह्मरूपता प्रतीयते।

अत्रेदं तत्त्वम्—यथा लोके स्त्रीपुंसयोः सामरस्यदशायां यदा ब्रह्मरन्ध्रस्थितः शुक्लबिन्दुः काममन्दिरं प्रविष्टः शोणबिन्दुनैकीभवति, तदैव बाह्याभ्यन्तरभानविहीनमानन्दमात्रावशेषं ब्रह्मैव भासत इत्यनुभवसिद्धम्। श्रुतिरपि-'यथा प्रियया संपरिष्वक्तो न बाह्यं किञ्चन वेद नामान्तरम्' इति। सुषुप्तिदशायामज्ञानवृत्तिरस्ति, सामरस्ये तु न साऽपि तिष्ठति। एवं सति तादृशसामरस्यनिष्ठस्यानन्दात्मकत्वे सति गर्भोत्पादकत्वरूपसाधारणधर्मस्य सृष्टिप्राक्कालीनशिवशक्तिसामरस्येऽपि दर्शनाल्लौकिकप्रक्रिययैवाऽप्यूह्या। तत्र यो ब्रह्मरन्ध्रस्थितो बिन्दुः स निःशेषेण न कामालयं प्रविशति, किन्त्वंशेन, अन्यथा पुनः सामरस्यानापत्तेः। ततश्च विधिबिलस्थितो विन्दुस्तुरीयबिन्दुरनामा। तदंशो मन्दिरस्थितस्तु कामाख्यो बिन्दुर्यः कामेश्वर इत्युपासकैश्चिन्त्यते। अत एव काममन्दिरनामधेयादीनि सम्भवन्ति।

एवमेव कामबिन्दुना सह परस्परानुप्रविष्टत्वे सति विस्पष्टत्वे बिन्दुद्वयं विसर्गो हकारो विमर्श इत्यादिसंज्ञा, केवलशिवत्वेव केवलशक्तेरपि सृष्ट्यादिजनकत्वायोगात्। अन्यथा परशिवाङ्गीकारस्यैव वैयर्थ्यापत्तेः। इत्थं हकाररूपा शक्तिरेव च कला, सैव कामकलेति पदेनाभिधीयते। कामविशिष्टाकलेति मध्यमपदलोपी समासः, कामश्चासौ कलाचेति कर्मधारयसमासो वा। इत्थं च यस्माद् विन्दोस्त्रिकोणमुत्पन्नं स कामकलारूप इत्युक्तं भवति।

चक्रं यन्त्रम्। तन्त्रं हि यन्त्रमन्त्रात्मकम्। तत्तद्देवानां चक्रेण स्वरूपोपस्थित्या यन्त्राणां देवत्वं सिद्धम्। सम्पूर्णेयं सृष्टिरीश्वरेच्छयैव बैन्दवी सती नानारूपमावहति। सर्वमेतज्जगत्त्रिकोणेषु स्थितम्। बाह्याभ्यन्तरभेदेनोपासनमपि द्विविधम्। आन्तरोपासने त्रिकोणस्थितकमलानां ध्यानं तत्र देवानामाराधनं च तत्र तत्र तन्त्रग्रन्थेषूक्तम्। तस्मादेतत्सर्वमपि चक्रमयमेव वेदितव्यम्। तस्मादुच्यते—

बैन्दवं चक्रमेतस्य त्रिरूपत्वं पुनर्भवेत्।
धर्माधर्मौ तथात्मानो मातृमेयौ तथा प्रमा॥
नवयोन्यात्मकं चक्रं चिदानन्दघनं महत्।
चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम्॥

बैन्दवासनसंरूढसंवर्तानल—चित्कलम् ।
अम्बिकारूपमेवेदमष्टारस्थं स्वरावृतम्[1] ।। इत्यादयः ।

तथा चेदमेव त्रिकोणचक्रं नवचक्रात्मना परिणतं त्रिपुरादिनवचक्रेश्वरीकर-शुद्धयादितत्तन्मन्त्रनवककलितमष्टकोणमध्यगतंषोडशस्वरावृतं अम्बिकाशान्तासाम-रस्यरूपमहाबिन्दुमयसदाशिवासनारूढप्रकाशविमर्शात्मककामेश्वरकामेश्वर्यधिष्ठित-मिति वेदितव्यम् । एवमेव चक्रात्मकस्य विश्वसर्गस्यात्र प्रकरणे निरूपणं सूपपन्नम् । तदुक्तमत्र प्रकरणान्ते—

शिवशक्तिसमाश्लेषस्फुरद्व्योमान्तरे पुनः ।
प्रकाशयति विश्वं सा सूक्ष्मरूपस्थितं सदा ।।
बीजरूपा महामुद्रा सर्वसिद्धिमये स्थिता ।
सम्पूर्णस्य प्रकाशस्य लाभभूमिरियं पुनः ।।
योनिमुद्रा कलारूपा सर्वानन्दमये स्थिता ।
क्रिया चैतन्यरूपत्वादेवं चक्रमयं स्थितम्[2] ।।

इत्यादय इति सुधीभिरुह्यम् ।

## कामकलाविलासदृष्टया सृष्टिवर्णनम्

कामलाविलासो हि तन्त्रागमशास्त्रेऽतिमहत्त्वाधायको ग्रन्थः । अस्य रच-यितारस्तत्र भवन्तः श्रीमहामहेश्वराः पुण्यानन्दनाथाः । इमे एव अमृतानन्दनाथानां गुरवः । वर्ततेऽत्र ग्रन्थेऽपूर्वा अनुपमा चाचार्यनटनानन्दविरचिता चिद्वल्ली टीका । ग्रन्थोऽयं गणेशकम्पेनि ( प्रैवेट् ) लिमिटेड मद्रासतः १९६१ तमे ईशवीयशतके प्रकाशितः । पण्डितैः संशोधितस्तृतीयावृत्तिमधिकृत्य चात्र विविच्यते किञ्चित्—

काम्यते अभिलष्यते स्वात्मत्वेन परमार्थविद्भिर्महद्भिर्योगिभिरिति कामः । अत्र को हेतुरित्युच्यमाने कमनीयत्वं स्पृहणीयत्वं यत्र भवति स काम इति । तदुक्तं श्रुतौ 'हिरण्यश्मश्रूर्हिरण्यकेश आ प्रणखात्सर्वं एव सुवर्णः' इत्युक्तम् । ईशावास्योपनिषदि च 'स पर्यगाच्छुक्रमकायमव्रणस्नाविरं शुद्धमपापविद्धम्' इत्युक्तम् । तथा च तत्रैव 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि' इत्यादिभिः कामतत्त्वस्य कमनीयत्वं तत्र-तत्र श्रुतिषूक्तं भवति । तदुक्तं रहस्याम्नाये—

निरुत्तरं निराधारं सच्चिदानन्दसागरम् ।
यदेतच्छाम्भवं मिश्रं निर्वाणाधारतां गतम् ।। इति ।

कला-विमर्शशक्तिः, सा च दहनेन्दुविग्रहा उक्ता । दहनो वह्निः, इन्दुश्चन्द्रः, तावेव विग्रहौ आकारौ ययोर्बिन्द्वोस्तौ दहनेन्दुविग्रहौ बिन्दू । तथा चायमर्थः प्रति-फलति अग्निषोमरूपिणी विमर्शशक्तिः । तदुभयभूतकामेश्वराविनाभूता महात्रिपुर

१. यो० हृ०—१।१२-१४ । २. यो० हृ०—१।६९-७१ ।

सुन्दरी बिन्दुसमष्टिरूपा कामकलेत्युच्यते, सैवोपास्यतया सर्वागमेषु चोद्घोष्यते। तदुक्तमन्यत्र—

शुक्रः शिवो रक्तशक्त्यां परशांभववेधतः।
रक्तशांभवरूपेण परात्तत्त्वेन शक्तितः॥
रक्तः शिवः शुक्लशक्त्यां परशम्भवैक्यभावतः।
रक्तः शिवः शुक्लशक्त्यां सच्चिदानन्दलक्षणः[1] ॥ इति।

एतत्सर्वंगतं भावमादाय उक्तं कारिकायाम्—

बिन्दुरहंकारात्मा रविरेतन्मिथुनसमरसाकारः।
कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू[2] ॥ इति।

अत्रायं भावः स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहंतारूपिणी प्रकाशानन्दसारा बिन्दुत्रयसमष्टिभूतदिव्याक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी मातृका परमयोगिभिर्महामाहेश्वरैरनिशमनुसर्तव्येति। एवंभूतमाहात्म्यं ब्रह्मोपनिषदि च प्रतिपाद्यते। यथा "अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति। नाभिर्हृदयं कण्ठं मूर्धा च। तत्र चतुष्पादं विभाति। जागरितं स्वप्नं सुषुप्तं तुरीयमिति। जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्तौ रुद्रः, तुरीयमक्षरम्। स आदित्यः, विष्णुश्चेश्वरश्च। स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्विदितम्" इति। अस्यार्थः—"अस्य देवस्य ससंप्रसारोऽन्तर्यामी खगः" इत्यादिपूर्वतनवाक्यजातैर्निर्णीतार्थकस्य पुरुषस्य चत्वारि स्थानानि मूलाधारहृदयकण्ठदेशोत्तमाङ्गरूपाणि भवन्ति। तेषु चतुर्षु स्थानेषु चतुष्पादं ब्रह्म सर्वव्यापनशीलं शुभ्रं स्वच्छप्रकाशम् अक्षरं न क्षरतीति व्युत्पत्या जगदुत्पत्तिकारणत्वान्मूलकारणभूतं विभाति। 'तमेव भान्तमनुभाति सर्वं तस्या भासा सर्वमिदं विभाति' इति निरवधिकतेजोमयं सत् विद्योतत इत्यर्थः। एवंभूताक्षरस्य स्थानदेशेषु उपदेशद्वारा अवयवस्वरूपमुक्त्वा तुरीयं समुदायरूपं परमाक्षरबिन्दुद्वादशान्ते कामकलात्मकं परं ज्योतिर्मयमिति व्याचष्टे–तुरीयमक्षरमिति। स आदित्य इत्यारभ्य स ईश्वरश्च इत्यन्तम्। आदित्यः प्रकाशरूपः, विष्णुः व्यापनशीलः, प्राणो जीवः सर्वजीवनदायकः, पुरुषः सर्वजीववर्तिजीवः प्राणादिरूपोऽग्नि अग्रनेता। एवं भूतः स ईश्वरो विमर्शाख्यकामेश्वरीयुक्तः परमशिव इत्यर्थः। तथा चोक्तमथर्वशिरसि—'अथ कस्मादुच्यते ईशानः' इत्युक्त्वा स्वयमेव व्याचष्टे 'यः सर्वान् भावान् ईशत ईशनीभिः परमशक्तिभिः' इति। तथान्यत्र–'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलाक्रिया च' इति। एवं भूतस्तुर्याक्षररूपः कामेश्वरो जागर्ति जाग्रतीत्यर्थः 'व्यत्ययो बहुलम्' इति सूत्रेण सुप्तिङ्व्यत्ययविधानात् अत्र जागरणं नाम परापश्यन्तीमध्यमावैखरीमयमातृकाचक्रात्मिकाश्रीचक्रप्रथममध्यमभूतसर्वानन्दमयाख्ये निरवधिकतेजोमण्डलभवने—

---

१. का० क० वि० टी०—७। २. का० क० वि०—७।

वैन्दवानलसंरूढं संवर्तानलचिद्घनम् ।
कामेश्वराङ्कपर्यङ्कनिविष्टमतिसुन्दरम्[1] ।।

इत्युक्तरीत्या प्रकाशानन्दनाथरूपत्वम् । एतदभिप्रायेण 'लीलाविनोदनोद्युक्तः' इत्यनेन जागरूक इति व्याख्यातम् ।

अत एव सकलनिगमागमावधारिततत्त्वयाथार्थविदो महामहेश्वराचार्यास्तु प्रकाशैकघनमद्वितीयन्निर्गुणं परशिवमेव सर्वस्यादौ सर्वकर्तृत्वेनोपस्थापयन्ति । स एव विमर्शात्मिकया शक्त्या सम्वलितः सन् नानारूपाकारमिदं विचित्रं जगच्चित्रयति रक्षति संहरति चेति निग्रहानुग्रहाभ्याम् । तमेव सकलतत्त्वोत्पादकं महेश इति पदेनादौ कामकलायां स्मरति महामहेश्वरः पुण्यानन्दनाथः—

सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्तः ।
अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः[2] ।। इत्यनेन ।

आत्रायं विमर्शः—सकलानां भुवनानामुदय उत्पत्तिः, स्थितिः, रक्षा, लयः, नाशः, एतत्त्रितयं विरोधानुग्रहयोरुपलक्षणम् । यथा त्रिवृत्करणं पञ्चीकरणस्य, एतत्पञ्चविधकृत्यप्रचुरा या लीला तया विनोदनं क्रीडनम्, तस्मिन् उद्युक्तो जागरूकः । मयडत्र प्राचुर्यार्थे प्रयुक्तः, 'अन्नमयो यज्ञः' इतिवत् । अत एवेश्वरस्य जगत्सृष्टयादिकं लीलामात्रम्, न प्रयोजनमस्तीति । एवं च महेश्वर एक एव जगदुत्पादननिमित्तोपादानतामयते; 'वहु स्याम' इति श्रुतेः ।

एवं हि विमृश्यते परामृश्यते इदमिति विमर्शः प्रपञ्चः । इदमित्येव हि परमात्मना सृष्टस्य जगतः प्रसिद्धः परामर्शः । एवंभूतो विमर्शः प्रपञ्चःअन्तर्लीनोऽन्तर्गतो विमर्शः यस्य स अन्तर्लीनविमर्शः । तदयमर्थः—स्वात्मसाक्षात्कृताखिलप्रपञ्चः परिपूर्णाहंभावभावनागर्भितः परमानन्दपरज्योतिः स्वरूपः परमात्मेति ।

अथवा जगदुत्पत्तिस्थितिलयहेतुभूताकृतिमांभावपरामर्शो विमर्शः । तथा नागानन्दाः—'विमर्शो नाम विश्वाकारेण वा, विश्वप्रकाशेन वा, विश्वोपसंहारेण वा अकृतोऽहमिति स्फुरणम् । तस्य अन्तर्लीनत्वं नाम अन्तर्मुखत्वम्' इत्याहुः । तथा चायमर्थः—अन्तर्लीनोऽन्तर्मुखो विमर्शः परिपूर्णाहंभावो यस्येति । तथोक्तं श्रीस्वच्छन्दतन्त्रे—

स तु योऽन्तर्मुखो भावः सर्वज्ञादिगुणास्पदः ।
तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भनात्[3] ।। इति ।

---

१. का० क० वि० टी०–७ । २. का० क० वि० टी०—१ ।

३. तत्रैव ।

विरूपाक्षपञ्चाशिकायामपि—

स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ ।
अहमिति स एक उक्तोऽहंता स्थितिरीदृशी तस्य[1] ।। इत्युक्तम् ।

एतादृशस्य परब्रह्मणः परमेश्वरस्य प्रकाशैकस्वभावत्वं सर्वस्मात्परत्वमुक्तमत्र प्रकाशमात्रतनुर्महेश इति पदेन । तेन प्रकाशमात्रा प्रकाशानतिरिक्ता यनुर्यस्य स इति व्याख्या संपद्यते । अत्र प्रकाशत्वं नाम 'इच्छामि' 'जानामि' 'करोमि' इत्युत्तमपुरुषान्तर्गतस्फुरणरूपाहंपरामर्श एव । ततश्च सर्वज्ञत्वसर्वेश्वरत्वसर्वकर्तृत्वपूर्णत्वव्यापकत्वरूपपञ्चशक्तिसंवलितः परो महेश इति । महांश्चासावीशश्चेति महेशः । महत्त्वं च देशकालाकारैरनवच्छिन्नस्वरूपत्वम् । ईशत्वं च सर्वनियन्तृत्वम् ।

एवं पराभट्टारिकासहितः श्रीपरमेश्वरः सर्वप्रकारेण सर्वरक्षकः परमात्मा युष्मान् पात्विति निरवधिकदयाशालिनः पुण्यानन्दाः पुण्यपुरुषानाशासते । पालनं चात्र परमात्मैकत्वरूपमेव ।

किञ्च, 'पातु महेशः प्रकाशमात्रतनुः' इत्यनेन गुरुदेवतामन्त्राणामैक्यं प्रतिपादितमपि भवति; कथम् ? आचार्यस्य प्रकाशकत्वमस्त्येव । रक्षकत्वं मन्त्रस्याप्यस्ति । मननात्त्रायते इति मन्त्रः । उक्तञ्च—'मननात्त्राणधर्माणो मन्त्राः स्युः परिकीर्तिताः' इति । 'चित्तं मन्त्रः' ईति शिवसूत्रमपि चैतन्यरक्षकत्वं मन्त्रस्य प्रतिपादयति । एतेनेदमेव सिद्धयति यत् सत्संप्रदायिभिरेव आगमतत्त्वविद्भिरात्मा कामेश्वरः प्राप्यते न त्वन्यैरिति ।

एवं ह्याद्या त्रिपुराशक्तिरेवाखिलं जगन्मयी सती विचित्रमिदं जगद्रचयति । तस्याः पराभट्टारिकायाः सत्त्वादेव सर्वकर्तृत्वाभ्यधिकत्वप्रतिपादनपुरःसरं पराभट्टारिकाया एव सर्वं जगदुत्पत्तिश्रवणात् । सैवाद्याशक्तिरनवच्छिन्न पराभट्टारिका महात्रिपुरसुन्दरी सर्वत्र सर्वोत्कर्षेण वर्तते । सैव शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्वमयसर्वप्रपञ्चात्मिका तदुत्तीर्णा चेति सर्वोपनिषत्प्रसिद्धा त्रिपुरा अभिधीयते । त्रिभ्यो-त्तेजोऽबन्नादिभ्यः पुरा भूता त्रिपुरेति । तेजोऽबन्नादिभ्यः पूर्वसत्त्वमेव हि सर्वतत्त्वातिक्रान्तत्वं ब्रह्मणः, तद्द्वारा सर्वतत्त्वात्मकत्वं च तदुक्तं श्रीवामकेश्वरतन्त्रे—

त्रिपुरा परमा शक्तिराद्या जाता महेश्वरी ।
स्थूलसूक्ष्मविभेदेन त्रैलोक्योत्पत्तिमातृका ।।
कवलीकृतनिःशेषतत्त्वग्रामस्वरूपिणी[2] ।। इति ।

तथा च यथा सिंहासनारूढः कश्चिद्राजा अतिसुन्दरः स्वात्माभिमुखावस्थितस्वच्छदर्पणतले स्वात्मप्रतिबिम्बं सम्यक् प्रसमीक्ष्य तत्प्रतिबिम्बमयमहमिति जानाति, तथा परमेश्वरोऽपि स्वाधीनभूतां स्वात्मशक्तिं सम्यगवलोक्य स्वस्वरूप-

१. का० क० वि० टी० १ । २. तत्रैव टी० २ ।

मवगच्छति परिपूर्णोऽहमिति । एवं च दर्पणस्य स्वसंन्निहितवस्तुसम्बन्धाभावे स्वान्तर्गतप्रतिबिम्बावभासनमनुपपन्नं भवति । तद्वत् पराशक्तिरपि परमशिव-सम्बन्धाभावे स्वान्तःस्थितप्रपञ्चनिगरणं न संघटत इत्यर्थात् लभ्यमेवैतत् । तस्मान्न केवलेन शिवेन वा, केवलया शक्त्या वा जगन्निर्मीयते, किन्तु उभाभ्यामेव कामकामेश्वरीभ्यामखिलं तत्त्वजातमातन्यते इति ।

तत्रैवं प्रतिपादनात्परमिदं विज्ञेयं भवति यदियं सृष्टिः शब्दार्थभेदाभ्यां द्विविधा सती अविभक्तभावेन राजते । तदुक्तम्–

वागर्थौ नित्ययुतौ परस्परं शिवशक्तिमयावेतौ ।
सृष्टिस्थितिलयभेदौ त्रिधा विभक्तौ त्रिबीजरूपेण[1] ।। इति ।

तत्रेयमवधेयम्–यद्यपि "समप्रधानौ समसत्त्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः । आदिशक्तिररुणा विश्वजन्या" इति सांख्यायनशाखायामुभयोः कामकामेश्वर्योः समप्रधानमुक्तम् । तथापि विश्वजोनिर्विश्वजन्या इति सर्वकारण-रूपिण्या एतयैव कामेश्वर्या रहस्यतन्त्रं सर्वोपनिषत्सारभूतं प्रवर्तयितुकामः परम-शिवः प्रपञ्चसृष्ट्यनन्तरम्, आदियुगे—

महामध्यं च चक्रस्य महानन्दात्मकं पुनः ।
अनुत्तरविमर्शैकसारं संविन्मयं भजे ।। इत्युक्तप्रकारेण प्रकाशानन्दसारमयमोड्याणपीठमास्थाय स्वयमपि श्रीविद्याक्रममुपदिदेश । सा पराभट्टारिका त्रेताद्वापरकलियुगेषु वक्ष्यमाणदेशिकस्वरूपिणी ह्यतिरहस्यं शांभव-तन्त्रं प्रवर्तयामासेति । कामराजसंतानम्, लोपामुद्रासंतानं चेति । कामराजसंतान-क्रमस्तु सकलविद्यानुसंध्यविच्छिन्न इति प्राचीनाः । लोपामुद्रासंतानक्रमस्तु विच्छि-न्नतया प्रवर्तत इति । तत्क्रमप्रकारस्तु–दिव्यक्रमे कृतयुगादौ परमशिव एव ओड्या-णपीठात्मकमध्यबिन्दुनिवासी श्रीचर्यानन्दनाथनामा सन् स्वात्मशक्त्याख्यश्रीमहा-त्रिपुरसुन्दरीरूपविमृष्टतनुः प्रथमो गुरुः । तथा चोक्तम्—

त्र्यश्राग्रोड्याणपीठस्था कामराजशरीरिणी ।
अस्वराकारतां प्राप्य त्र्यश्रसंकेतमध्यमात् ।। इति ।

अत्र मध्यत्र्यश्राग्रकोणकामरूपपीठवाग्भवाधिष्ठातृकामेश्वरीरूपविमृष्टतनुः श्रीमदूर्ध्वदेवनाथस्त्रेतायुगगुरुः । तथा चोक्तम्–'त्र्यश्राग्रकोणगा या सा कामेशी कामपीठगा' इति । मध्यत्र्यश्रदक्षिणस्थितजालंधरपीठस्थितकामराजाभिधेयवज्रे-श्वरीमिलितस्वरूपः श्रीषष्ठनाथदेवो द्वापरगुरुः । तथाचोक्तम्—'त्र्यश्रदक्षिण-कोणस्था वज्रेशी जालपीठगा' इति । मध्यत्र्यश्रोत्तरकोणगतपूर्णगिरिपीठस्थित-शक्तिबीजाभिधेयभगमालिनीविमृष्टदेहः श्रीमित्रदेवनाथः कलियुगगुरुः । तथा चोक्तम्– 'त्र्यश्रस्योत्तरकोणस्था भगेशी पूर्णपीठगा' इति । मित्रेशदेवः कलियुगादौ

१. का० क० वि०—१२ ।

भगवतीं लोपामुद्राम्, अगस्त्यं च महातपःपुञ्जमिथुनमनुगृहीतवान्। एतत्सप्तकं दिव्यौघसंज्ञकं गुरूपदेशादवगन्तव्यम्। एतदेव तत्त्वमत्रोक्तम्—

आसीनः श्रीपीठे कृतयुगकाले गुरुः शिवो विद्याम्।
तस्यै ददौ स्वशक्त्यै कामेश्वर्यै विमर्शरूपिण्यै[1] ॥ इति शिवम्।

## महानयप्रकाशग्रन्थरीत्या सृष्टिविचारः

महानयप्रकाशग्रन्थनिर्मातुर्महामहेश्वराचार्यस्य शक्तिकण्ठस्य निर्देशः षट्त्रिंशत्तत्त्वाख्यस्यागममार्गस्य निरूपणे पर्यवस्यति। तत्र हि सर्वादौ क्षोभरहितस्य निर्मयस्य उदासीनस्य परमशिवस्य स्थितिः। यदा च स अनन्तप्राणिप्राक्कृतकर्मवशात्तस्य फलं प्रदातुमिच्छति, तदा शक्त्या युग्मो भवति। परमशिवपदम्परित्यज्याऽन्येयं स्थितिः शिवस्य। स चासौ प्रकाशाख्यो शिवः विमर्शाख्या शक्त्या युज्यते। शिवशक्त्योर्मिथुनीभावापन्ना सामरस्यावस्थैव सृष्टिहेतुत्त्वेन प्रस्फुटति। उक्तञ्च—

परमशिवसमय परस्यों तस सच्ची पथम पसन्दा निग्धातु।
युग्मा उदितु सदाशिवरुच्ची सो विश्वबीज नादस उद्घातु[2] ॥ इति।

अयमर्थः—तस्य परस्य शिवस्य, तस्याः परायाश्च शक्तेर्यत् युग्मं सामरस्यभूः सदातनः, सहजः, स्वभावः, अविनाशि यत् पारमेशं रूपम्, तस्याद्यः प्रथमः स्पन्दः उन्मिषितुरङ्कुरीभावो विमलनिर्वातव्योम्न इव आकस्मिको निर्घातो युग्मादितः स विश्वबीजस्य सदाशिवात्मनो नादस्य प्रकृतिरुद्घातः, उदयरूपं व्यक्तिस्थानम्। इति परः सर्गः।

अग्निषोमीयः शक्तिकः सर्गः। स एव नाद-बिन्दुरूपतां सम्पद्य जगत्सर्गकारणं भवतीति तत्र तत्र तन्त्रग्रन्थेषु दृश्यते। अतो महानयप्रकाशेऽपि एतद् दृश्यते—

अग्निषोममये संधाने नादस बिन्दु पत्तुलग्गु।
ईशरु शब्द अर्थ जनपाने इह चेतनकत्तिकुसग्गु[3] ॥ इति।

तथाचाग्निषोममयेन अनुसन्धानेन मिलनया नादस्य सदाशिवस्य, बिन्दुः पश्चात्तल्लग्नतया अवश्यम्भावी, ईश्वरः शब्दस्यार्थ इव नान्तरीयकः प्राणभूतः, तस्मान्नादाधीष्ठितबिन्दुरूपादीश्वरात् एष चेतनकर्तृकइच्छापूर्वको विश्वप्रसरः, तस्य नादस्वरूपस्य प्रकाशैकवपुषः सदाशिवभट्टारकस्य नान्तरीयको विमर्शः, ईश्वरो बिन्दुः, स प्राख्याया उपाख्या, चिन्मात्रस्यैव आनन्दः, प्राणस्येव अपानः, पुंसो वा प्रधानम्, यथा लोके शब्दानुयायी अर्थो जगन्निर्माणे च अग्नेः सोमोऽनुषक्तः, तथा चायं नादस्य बिन्दुर्युग्मभावेन जगत्स्यन्दितस्य हेतुः, एवं अग्नि-

---

१. का० क० वि०—५१। २. महा० प्र०—२।१। ३. तत्रैव—२।२।

षोमातमतावलम्बे सति इच्छापूर्वकश्चेतनकर्तृक ऐश्वरः सर्गबन्धः, इह पुनरिच्छैव उपादानम्, न तु ब्राह्मसर्गवत् महाभूतनिर्वर्त्यता। किं च नायं सेश्वरचार्वाकप्रक्रियावत् व्योम्नो विश्वप्रादुर्भावो व्योम्नेव प्रलयः। एवं ह्येतेनैश्वरः सर्गः निरूपितः।

तथा च भूताकाशे चिदाकाशस्य प्रतिबिम्बो बिम्बत्वेन बिम्बमात्रमेव प्रतिबिम्बितो भवति न तस्य स्वभावधर्माश्चैतन्यादयः। यथा च सर्वधर्मैर्विशिष्टं दर्पणे प्रतिबिम्बति तथापि गौरवतुलया गुरुत्वं तथा वाक्प्रपञ्चचातुर्यं बुद्धीन्द्रियवैदुषी च नादर्शे प्रतिबिम्बति, तथा परमाकाशधर्माश्चिदाकाशधर्माश्च न भूताकाशे सम्भावनीया इति।

तथा चात्रेश्वरसृष्टिप्रक्रिया कीदृशीति जिज्ञासायाम्—

सो इच्छापसरु अकारु चतुष्कलु यस रौद्र वामजेठी परअम्ब।
इच्छानन्तरु जानु चे निष्कलु यव्यु अवतरन्द महभूतमयम्ब[1] ॥ इत्युच्यते।

अयमाशयः—इच्छायाः प्रसरो यस्मात् स इच्छाप्रसरः, इच्छाप्रसरकारणमीश्वरः, अकारश्चतुष्कलः, यस्य 'रौद्रीवामाज्येष्ठाअम्बा' इति कलाः, तदुद्भूतौ ज्ञानप्राक्कोटिभावी इच्छासमुदयः; एवं विश्वनिर्माणोपकारणमिच्छापूर्वकमेव ज्ञानं निष्कलम्, तस्मादेव भूतान्यवतरन्ति। उक्तञ्च—

शून्यात्प्रसर उत्पन्नः प्रसरादः समुत्थितः।
अकाराद् विश्वमुत्पन्नं विश्वं पञ्चात्मकं जगत्[2] ॥ इति।

अनया उक्तरीत्या अकारः प्रथममाविर्भूतः, तथा च नामविवर्ते मातृकारम्भणप्रभूत आदिवर्णः, रूपविवर्णे चावटरूपः स एवेत्युभयथा अकार एव विश्वप्रसरस्यादिकोटिः। स एव व्यापकत्वाद् विश्वम्, तस्याकारस्य कलाभिश्चतसृभिरवयवनिष्पत्तिः। ताश्च—

आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
अम्बिकाबाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता ॥ इत्यादिना

अयमाद्यक्षरसम्प्रदायो यथागुरुमुखम्, एवमिच्छामात्रमेव जगन्निर्माणे परिकरो न वाह्यार्थवादिवन्महाभूतप्रकृतिः, एवमिच्छोपकरणं विश्वकर्तुर्विश्वनिर्माणं च। अतो महाभूतानि इच्छाकाले स्वयं तत्कालमुद्यन्ति न सम्भृतसम्भारगत्या यथोपयोगं ब्राह्मसृष्टिवत्प्रयुज्यन्ते, यतो निरूपादाना इयमैश्वरी सृष्टिः।

अथ ब्राह्मसर्गाधिष्ठिता या भूतसृष्टिस्तयाऽऽदिवर्णाकारकुहरात् हृदयान्नभ आविर्भूतम्, तस्याङ्लग्ना अन्तश्चान्तः प्राभञ्जनीऊर्मिः—लहरी, तयोर्नभोनभस्वतोरुभयोरपि संघर्षो निष्पेषणम्, ततो यावकस्याग्नेरुत्पत्तिः, ततो निष्पीडनादापः

१. महा० प्र०—१।३। २. तत्रैव–टी० ३० पृ०।

स्वेदद्रववत् स्रवन्ति। ताश्च वाताधिक्ये शीतस्पर्शबाहुल्यात् घनीभूता सत्यो भूमिभावं प्रथयन्ति, ता एव आपः कुले शुक्रशोणितरूपा घनकलिलपेशीरूपाभिः क्रमेण पोषिताः सत्यो गर्भतां दधते। तदुच्यते कारिकेयम्—

तत आदिवर्णान्नभउदितं तस्याङ्गलग्ना प्राभञ्जनोर्मिः।
उभय निघर्षात्पावकोत्पत्तिः स्वेदसलिलमाश्यानं भूमिः[1]:॥ इति।

एवं हि रक्तशुक्रबिन्दू द्वौ भिन्नौ, वातलहरी तयोः सम्मेलनाय उदेति, तत आद्यक्षरसम्प्रदायः। एतादृशी ग्रन्थितग्रन्थिर्वर्णरूपाऽऽविर्भवति। एवं हि निष्पद्यते भूतसर्गः। तथाचास्मिन् भूतसर्गे शरीरे पञ्चभूतांशेन के के शरीरावयवा निर्मिता इति जिज्ञास्यमाने सत्युच्यते—

त्वक्, मांसं, दन्ताः, नखाः अस्थीनि इति पञ्चगुणं कठिनं देहगतं पृथ्वीतत्त्वम्। रसः, रक्तं, कफः, वसा, मेद इति पञ्चधा जलतत्त्वम्। क्रोधः, तथा मुखभाः—मुखगतं तेजः, कायोष्मा, नेत्राग्निः—चक्षुर्गतं प्रकाशकं तेजः, जाठरोऽग्निश्च इति पञ्चधा तेजस्तत्त्वम्। तथा प्राणापानसमानोदानव्यानाः पञ्चधा वायुतत्त्वम्। जठरमुखश्रोत्रहृदयनासिकागत आकाशः पञ्चधा नभस्तत्त्वम्। इत्थं विभागेन शरीरे पञ्चशः पञ्चभूतानि संगच्छन्ते। तैश्चतुर्दशसु भुवनेषु चतुर्दशविधभूतसर्ग-निष्पत्तिः समभवत् सृष्टौ। एवं हि प्रायशः सैव शरणिर्महानयप्रकाशेऽपि समाश्रिता या शारदातिलकादिग्रन्थोक्तशरणिः पूर्वं निरूपिताऽत्र निबन्धे। एवं ह्यन्याखिला-गमग्रन्थेषु सृष्टिविधानं प्रायो दृश्यते विस्तरभयादत्राधिकं निरूपणन्न युक्तिमिति विरम्यते।

## निष्कर्षः

एतत्प्रकरणारम्भे सृष्टिप्रक्रियाविचारक्रमे नागेशभट्टस्य यो हि सृष्टिक्रमः परमेश्वरस्य सिसृक्षात्मिकया मायाशक्तिवृत्या बिन्दुतत्त्वस्याविर्भावरूपः, तदेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशो बीजम्, चिदचिन्मिश्रोऽशोनादः, चिदंशो बिन्दुरिति यदुक्तन्तत् तन्त्रागमसृष्टिसिद्धान्तानुगममेवेत्यनेन विवेचनेन सिद्ध्यति। प्राक्तनवैयाकरणानां भर्तृहरिप्रभृतीनां यादृशः सृष्टिसिद्धान्तस्तस्मादयं भिन्नः। तत्र हि नित्यं शब्दब्रह्म शाब्दभावेन विवृतं सदर्थभावेन विवर्तते इति विवेकः। तथा च—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[2]॥ इतिरीत्या शब्दब्रह्मण एव जगदुपादानत्वं सिद्ध्यति। अनादिनिधनमिति शब्दपरकत्वमनादिनिधनं कूटस्थमविचालिनित्यत्वपरमिति, न तु शिवदृष्टिग्रन्थनिरूपितम्—

१. महा० प्र०–१।५। २. वा० प०–१।१।

इत्याहुस्ते परं ब्रह्म यदनादि तथाऽक्षयम् ।
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि सा ।। इतिवत् ।

एवं हि

नाशोत्पादसमालीढं शब्दब्रह्ममयं च तत् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ।। इति शान्तरक्षितकृत-तत्त्वसंग्रहवच्च कूटस्थाविचालित्वेन भिन्नं शब्दतत्त्वमिष्टं प्राचीनाचार्याणाम् । अतः शब्दतत्त्वस्य व्याकरणदर्शनानुसारिव्याख्यां परित्यज्यागमानुरूपिणी व्याख्या नागेशभट्टस्य तन्त्रशास्त्रे श्रद्धातिशयं तन्त्रागमशास्त्रस्य सिद्धान्तनैपुण्यञ्च द्योतयतीति सुधीभिरवगन्तव्यमिति शिवम् ।

१. शिवदृष्टिः०–२।२ ।

## तृतीयोऽध्यायः

### नागेशाभिमतवाक्चतुष्टयस्य तान्त्रिकत्वम्

साधुत्वज्ञानविषयिण्यां व्याकरणस्मृतौ वाचां त्रिविधत्वं पश्यन्ती, मध्यमा वैखरीति स्वीक्रियते। शब्दसाधुत्वातिरिक्ते व्याकरणदर्शनांशे आचार्यभर्तृहरिणा—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्याः वाचः परं पदम्[1] ॥

इत्येनेन 'वाचां त्रैविध्यं निगदितम्। तत्र परश्रोत्रविषया श्लिष्टव्यक्तवर्णा प्राप्तसाधुभावा भ्रष्टसंस्कारा वैखरी। अन्तः सन्निवेशिनी परगृहीतक्रमेव बुद्धिमात्रोपादाना सूक्ष्मप्राणवृत्यनुगता मध्यमा। क्रमसंहारभावेऽपि व्यक्तप्राणसंग्रहा मध्यमेति केचित्। प्रतिसंहृतक्रमाः सत्यप्यभेदे समाविष्टक्रमशक्तिः पश्यन्ती। सा चलाचला प्रतिलब्धसमाधाना च आवृता विशुद्धा च सन्निविष्टज्ञेयाकारा निराकारा च परिच्छिन्नार्थप्रत्यवभासा संसृष्टार्थप्रत्यवभासा प्रशान्तसर्वार्थप्रत्यवभासा च। तत्र व्यवहारिकीषु सर्वासु वागवस्थासु व्यवस्थितसाध्वसाधुप्रविभागः पुरुषसंस्कारहेतुः, परन्तु पश्यन्तीरूपमनपभ्रंशमसंकीर्णं लोकव्यवहारातीतं तस्या एव वाचो व्याकरणेन साधुत्वज्ञानलभ्येन वा शब्दपूर्वेण योगेन अधिगम इति। यदाह—

गौरिव प्रक्षरत्येका रसमुत्तमशालिनी।
दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता ॥

एतयोरन्तरं पश्य सूक्ष्मयोः स्पन्दमानयो।
प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति ॥

अन्या त्वप्रेर्यमाणेव विना प्राणेन वर्तते।
जायते हि ततः प्राणो वाचमाप्याययन् पुनः ॥

प्राणेनाप्यायिता येयं व्यवहारनिबन्धना।
सर्वस्योच्छ्वासमासाद्य न वाग्वदति कर्हिचिद् ॥

घोषिणी जातनिर्घोषा अघोषा च प्रवर्तते।
तयोरपि च घोषिण्यो निर्घोषेव गरीयसी[2] ॥ इत्यादयः।

---

१. वाक्य०—१।१४३। २. तत्रैव टी०—१।१४३।

एवं हि 'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा' इति युक्त्या ग्राह्यभेदक्रमादिरहिता स्वप्रकाशा सम्विद्रूपा वाक् पश्यन्तीत्युच्यते। पश्यन्त्यां वाच्यवाचकयोर्विभागेनावभासो नास्ति, सर्वतश्च सजातीयविजातीयापेक्षायां संहृतो वाच्यानां वाचकानां च क्रमो देशकालकृतो यत्र विद्यते तत्र क्रमविवर्तशक्तिस्तु विद्यते।

वैयाकरणाश्च यथा एकस्मादेव बिन्दोः रेखात्रयभावेन परिणामे रेखात्रयमूलभूता बिन्दव एकत्र स्थिताः, एवमेकैव वाक् परसूक्ष्मस्थूलपश्यन्ती, परसूक्ष्मस्थूल मध्यमा, परसूक्ष्मस्थूलवैखरीरूपेण विवर्तते इति अवस्थाभेदेन नवधा वाक् सम्पद्यते तदा सर्वावस्था कारणं परावाक् दशमीत्याख्यायते। पूर्वोक्ता नव कारणभूताश्च तिस्रो वाचः सम्भूय द्वादश भवन्ति ता द्वादशरश्मय इत्यादय आख्यायन्ते तदाचार्यं रविरित्याख्यायते। यदाहुः—

सर्वभूतान्तरचरः शब्दब्रह्मात्मको रविः।
भित्वा यं बोधखड्गेन निर्गच्छन्त्यविशङ्किताः॥ इति।

'सूर्य आत्मा जगतस्तस्थुशश्च' इति श्रुतेः। आत्मैव सूर्यः सूर्य एव चात्मा वेदितव्यः। आत्मशक्तयः चिन्मरीचय एव सूर्यरश्मयः सूर्यस्यार्थभासकत्वेव शब्दब्रह्मात्मकत्वं वेदात्मकत्वं च शास्त्रेषु प्रसिद्धम्। षोडशकले पुरुषे पञ्चदशकलानां परिणामशालित्वेऽपि षोडशीरूपैकाचित्कला परिणामस्य साक्षिभूता परमामृतस्वरूपा तिष्ठति। अस्यामदृष्टस्वरूपायामधिकारो निवर्तते। इदं दैवी वाक् योगिभिर्ज्ञानिभिश्च दृष्यत्वेन निर्दिश्यते। अमृतरूपाया अस्या निरोधोऽपि न सम्भवति कुतस्तु विनाशस्तथापि वक्तुर्विवक्षावशान्निरोधे व्यपदिश्यमाने महाबिन्द्वात्मकं निष्कलासनमारूढं निष्कलं परमं तत्त्वं तत्त्वोत्तीर्णमपि परतत्त्वरूपेणोपवर्ण्यमानं नित्यलीलारसोल्लासपरं स्वात्मनि साक्षात्क्रियने सामरस्यगुणगतमनादिमिथुनं वागर्थयुगलमेव निरञ्जनं परब्रह्मपदमिति[1] वदन्ति।

नागोजिभट्टाश्च लघुमञ्जूषाग्रन्थस्य शक्तिनिरूपणप्रसङ्गे तादात्म्यशक्तिनियामकसम्बन्धत्वनिरूपणे साक्षादेव शब्दमभिलक्ष्यकृतः सङ्केतः शक्तिग्राहको भवतीति प्रतिपादयन्तः—'अत एव न्यायवाचस्पतये उक्तम् सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेवः कृतः सङ्केतः तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केतः' इति। तथा योगवाचस्पतये उक्तम्–'सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैःसर्वेषां शब्दानां सम्बन्धः, ईश्वरसङ्केतस्तु प्रकाशकः। अत एव नित्यः शब्दार्थसम्बन्धः' ( वाक्यप० १।२३ ) इति तान्त्रिका इति। सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगि (ज्ञान) गम्य एव, तेषां योगबलेनोभयरूपपराप्रत्यक्षात्;

---

१. वाक्य० ब्रह्मका०—१४३ भावप्रदीपटीकायाम्।

युक्तं चैतत्, एकस्यैव स्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोभयोपादानत्वेनोभय-रूपतया उभयोरपि तत्कार्ययोरुभयरूपत्वात् ।

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा ।। इत्युक्तम् ।

नित्यत्वं तु यावत्सृष्टिस्थित्या व्यवहारनित्यतया च बोध्यम् । श्रुतिश्च—

सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टाम् ।। इति ।

अभिष्यन्दमानाम्—तत्तद्रूपेणाभिव्यक्ताम् । अन्यामिव भेदवतीमिव । आत्मनि = चित्ते ।

प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति ।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।।

वैखरीवाक्प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी ( निबन्धना ) ।
केवलं बुद्ध्युपादानक्रमरूपानुपातिनी ।।

प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्तते ।
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।।
स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।। इति भारतं च ।

एते श्रुतिभारते हरिग्रन्थे (वाक्यप० टी०, का० १ कारिका १४४) स्पष्टे । हरिवंशेऽपि--

'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः' इति 'योग्यतालक्षणः सम्बन्धः' इत्यादेः कैयटस्य कारणताऽवच्छेदकधर्मरूपः सम्बन्ध इत्यर्थः । 'तत्त्वमस्या— ( छान्दो० उप० ६।८।७ ) दिवाक्यस्याखण्डार्थेन शुद्धेनापि ब्रह्मणाऽऽध्यासिकं तादात्म्यम् इत्याहुः[१] । एवं हि नागेशेन वैयाकरणसिद्धान्तलघुमञ्जूषायामेतेन व्याख्यानेन वाचश्चातुर्विध्यं स्वीकृतम् परा, पश्यन्ती, मध्यमा, वैखरीति । अत्रोत्तरोत्तरं स्थूलत्वं बोध्यम् । स्थूलक्रमेण तत्स्वरूपं व्यवस्थापयन् एवोच्यते 'प्राणापानान्तरे' इत्यादयः । अस्याभिप्रायस्तु—सर्वेषां प्राणापानवाय्योरन्तरे मध्ये वाग्रूपादेवी नित्यं तिष्ठति । प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी प्राणव्यापाराभिव्यक्ता सैव वाक् स्थानेषु कण्ठादिषु वायोर्विवृते विवर्तरूपतां प्राप्ते सति कृतवर्णपरिग्रहा ककारादिवर्णरूपा परश्रवणग्राह्या वैखरीत्युच्यते । तदुक्तम्—

प्राणेनाप्यायिता सेयं व्यवहारनिबन्धिनी । इति

प्राणवायुवृत्तिं व्यापारमनुसृत्य तत्तच्छब्दविशेषतत्तदर्थविशेषोल्लेखिन्या

---

१. वै० शि० ल० म०, शक्तिनि०--४२ पृ० ।

बुद्ध्या विषयीकृता परश्रवणग्रहणयोग्या सूक्ष्मा मध्यमा वागुच्यते। सूक्ष्मत्वं वैखरीमपेक्ष्य एव। अविभागा कार्यकारणाविभागरहिता इति। सर्वतः संहृतक्रमा वर्णक्रमरहितेत्यर्थः। योगिनां समाधौ सविकल्पकज्ञानविषय्याः पश्यन्तीत्युच्यते। अन्तर्मूलाधारे, ज्योतिः स्वरूपाऽनपायिनी उक्तरीत्या सूक्ष्मतया नित्या परावागभिधीयते इति।

एवं हि सृष्टौ परादिवाङ्निरूपणेऽपि महामहोपाध्यायाः श्रीमन्तो नागेशोपाध्याया वाक्चतुष्टयत्वं शक्त्याश्रयनिरूपणप्रकरणे निरूपितम्[1]।

महाभाष्ये पस्पशाह्निके उद्द्योताख्ये स्वव्याख्यानेऽपि नागेशभट्टैर्वाक्चतुष्टयात्मको हि सिद्धान्तः स्वीकृतः। तथा हि व्याकरणाध्ययनस्यावश्यकत्वप्रतिपादनपरभाष्ये 'चत्वारि' इति पदस्य व्याख्याने द्वौ ऋङ्मन्त्रौ उद्धृतौ। तयोर्व्याख्यानस्य कतिचिदंशा अग्रे प्रदर्श्यंते।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥ इति।

चत्वारि शृङ्गाणि। चत्वारिपदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः। त्रयः काला भूतभविष्यद्वर्तमानाः। द्वे शीर्षे। द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्तहस्तासो अस्य। सप्तविभक्तयः। त्रिधाबद्धः। त्रिषु स्थानेषु बद्धः, उरसि कण्ठे शिरसीति। वृषभो वर्षणात्। रोरवीति शब्दं करोति। कुत एतद्? रौतिः शब्दकर्मा। महोदेवो मर्त्यां आविवेशेति। महान्देवः शब्दः। मर्त्यां मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्[2]।

कैयटेन प्रदीपाख्ये एतन्मन्त्रस्य व्याख्याने—चत्वारीति। शब्दस्य वृषभत्वेन निरूपणं कृतम्। एतस्यैव प्रतीकमादायोद्द्योते चत्वारीति। ऋङ्मन्त्रः। शब्दस्येति। शब्दशास्त्रप्रतिपाद्यस्येत्यर्थः। वृषभाकारः शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति महान् देवोऽन्तर्यामिरूपः शब्दो मर्त्यानाविवेश स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम्। महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवतीति यावत्। भाष्ये पदजातानि परापश्यन्तीमध्यमावैखरीरूपाणि। अत एवाग्रे निपाताश्चेति चकारः संगच्छते[3]; इत्युक्तम्।

अन्योदाहरणनिरूपणं भाष्ये तु—

चत्वारि वाक्यपरिमितापदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥
इति सम्वृत्तम्।

---

१. वै० सि० ल० मञ्जू० शक्त्याश्रयनिरूपणे पृ० १४५ तः १४८।
२. महा० १।१।१ नवाह्निके पृष्ठ २४।
३. तत्रैव प्रदीपोद्द्योते।

तत्र हि चत्वारि वाक्परिमितापदानि । चत्वारि पदजातानि नामाख्यातो-पर्गनिपाताश्च[1] इत्युक्तम् । तत्रोपयुक्तभाष्यस्य प्रतीकमादाय नागेजिभट्टा वाक्-चतुष्टयस्य सिद्धान्तं व्यवस्थापयन्तः ब्रुवन्ति—

'पदजातानि । परापश्यन्तीमध्यमावैखर्यः[2]' इति । एतेन परापश्यन्तीमध्य-मावैखरीति' चतस्रो वाचो नागेशा वदन्ति ।

यत्तु—वैयाकरणा नागेशभट्टस्यैतत्सिद्धान्तं दूषयन्ति, यथा च सिद्धान्त-शैवानामिदम्मतम्—

परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ।। इतितन्त्र

शास्त्रं चाश्रित्य मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्द-शून्या बिन्दुरूपिणी परावागुच्यते, नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते, ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणयोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते, तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धान-माहत्य च तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या वैखरी वागुच्यते इति वाचश्चतुर्विधत्वमाहुः । तत्तु व्याकरणसिद्धान्तानवबोधनिबन्धनम् । हर्यादिभिर्वा-चस्त्रित्वस्यैवोक्तत्वात् । न च चत्वारि वाक् परिमिता इति भाष्योदाहृतश्रुतिमूलकं नागोजिभट्टोक्तम् । अत एव माधवेन ऋग्वेदभाष्ये चत्वारि वाक्परिमितापदानी-त्यनेन वैखरीमध्यमापश्यन्ती रूपाणि दर्शितानि; व्याख्यातं चैवमेवोद्द्योते इति वाच्यम् । कैयटेन उक्तश्रुतेस्तत्र चतुर्णां नामाख्यातोपसर्गनिपाताख्यानां पदजा-तानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्तीति व्याख्योक्तत्वेन माधवा-दिव्याख्यानस्य तन्त्रशास्त्रवासना मूलकतया वैयाकरणैरनुपादेयत्वादिति यदुक्तं तन्न समीचीनम् । माहेश्वरसिद्धान्ता एवागमपदवाच्याः । आगम एव पर्यायत्वेन तन्त्रस्य संगच्छते । तन्त्रग्रन्थेषु सर्वत्र परापश्यन्तीमध्यमावैखर्यः स्वीकृताः । अतो नृत्तावसाने ज्ञानस्वरूपिणा शिवेन नवपञ्चवारेण ढक्काया नादेन वर्णसमाम्नायस्या-विर्भावफलकानि अ इ उ णित्यादिचतुर्दशसूत्राणि आगमिकान्येवाविर्भावितानि । अतस्तत् सिद्धान्तं सिद्धान्तरूपेणाङ्गीकृतं वाक्चतुष्ट्यं वैयाकरणैरप्यङ्गीकर्तव्यमेव । पश्यन्ती वाक् परायामेवावतिष्ठते । तदभावे पश्यन्त्यावमर्शः दुःश्शक इति वैया-करणैर्विभावनीयम् ।

किं च पश्यन्त्यादयस्तिस्रोऽपि वाचः परावस्थायां परचिदात्मना परब्रह्मणा सङ्गतिगतास्तदेकात्मतयाऽवतिष्ठन्ते । तदानीं तत्पतिर्ज्ञानगुरुर्महेश्वरः स्वात्म-

१. महा० १ १।१। पृ०—२६ । २. तत्रैव उद्द्योते ।

ज्योतिषा स्वाभिन्नं भावजातं नित्यं भासयते । तद्भासनादेव तत्रेच्छायाः शमुद्रेको भवति यदधीना विश्वसर्गादिव्यापाराः प्रादुर्भवन्ति ।

विश्वविस्तारकर्मणः कारणभूता कुण्डलिनी महाशक्तिः । तस्यैव परिणामाः परापश्यन्तीमध्यमावैखरीवाचः । अतश्चासां वाचां कुण्डलिन्या कथं प्रभव इति विषये विविच्यते किञ्चित्—

मानवशरीरस्य पृष्ठभागे मेरुदण्डो वर्तते, तस्यैव बाह्यप्रदेशे वामभागे चन्द्रस्वरूपिणीडानाडी, दक्षभागे च सूर्यरूपा पिङ्गलानाडी तिष्ठति । इडानाडी शक्तिरूपा, पिङ्गला च पुंरूपाऽभिधीयते । उक्तञ्च—

इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ॥
दक्षिणे पिङ्गलाख्या तु पुंरूपा सूर्यविग्रहा[1] ॥ इति ।

इडापिङ्गलयोर्मध्ये च मेरुदण्डस्य मध्यभागे—

गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः ।
चतुरङ्गुलविस्तारं कन्दमूलं खगाण्डवत्[2] ॥ इति ।

इत्युक्तलक्षणलक्षितस्य कन्दस्य मध्यप्रदेशात् समुत्थिता शिरःपद्मपर्यन्तं स्थिता विकसितधुत्तूरपुष्पाकारा चन्द्रसूर्याग्निरूपा वक्ष्यमाणवज्रिणीचित्रिणीभ्यां समेता अत एव त्रितयगुणमयी सती सुषुम्णानाडी सुतरां विराजते । प्रागुक्ता वज्रिणी ( वज्राख्या ) नाडी उक्तायाः सुषुम्णाया मध्यदेशे दीप्तिं कुर्वती सती प्रागुक्तकन्दद्व्यङ्गुलोर्ध्वा सती लिङ्गदेशात् शिरः पर्यन्तगामिनी वर्तते ।

तस्या वज्रिणीनाड्या मध्ये सा प्रसिद्धा चित्रिणीनाडी विलसति, या हि प्रकाममुद्दीप्यमाना योगिनां योगगम्या लूतातन्तुवदतिसूक्ष्मा मेरुमध्यस्थितसुषुम्णावज्रिणीनाड्योरभ्यन्तरस्थानि मूलाधार–स्वाधिष्ठान–मणिपूरानाहत–विशुद्धाऽऽज्ञाख्यान्यखिलसरसिजानि भित्त्वा तेषामेवोपर्युक्तानां षण्णां पद्मानां ग्रथनरचनया देदीप्यते, अर्थादुक्तानि पद्मानि चित्रिणीनाड्यां ग्रथितानीव सन्ति ।

एतस्याश्चित्रिण्या नाड्या मध्ये मूलाधारस्य स्वयंभूलिङ्गच्छिद्रात् सहस्रारस्थितपरमशिवपर्यन्तगामिनी विद्युत्पुञ्जसमानदीप्तिशालिनी बिसतन्तुतनीयस्यतिसूक्ष्मा त्रिगुणात्मिका ब्रह्मनाडी देदीप्यते ।

एतस्या एव ब्रह्मनाड्या मुखे ब्रह्मद्वारं विलसति, यस्मिन् शिवशक्तिसामरस्यसञ्जातामृतस्यासारः प्रसरति, यस्मादेव ब्रह्मद्वाररूपप्रदेशान्मूलाधारस्थितशिवशक्तिभ्यां निरुक्तममृतं पीयन्ते योगिनः । एतदेव ब्रह्मद्वारं सुषुम्णाख्यनाड्या मुखं योगीन्द्रा विनिर्दिशन्ति ।

---

१. तन्त्रसारः । २. तत्रैव ।

आधारत्रिकोणान्तराऽधोमुखं नवकिसलयाकारं स्वम्भुलिङ्गं वर्तते। तदूर्ध्वे च बिसतन्तुतनीयसी जगतां मोहजनिका मायारूपिणी ब्रह्मद्वारमुखं स्वमुखेनाच्छादयन्ती सार्द्धत्रिवलयाकारा स्वयम्भुलिङ्गोपरि सुप्ता पुष्परसपानोन्मयाऽलिकुलसमं मधुरं कूजन्ती श्वासप्रश्वासक्रमेण प्राणिनां प्राणांश्च धारयन्ती कुलकुण्डली विलसति। तयैव ध्वन्यात्मकवर्णात्मकानां शब्दानां सृष्टिर्जायते। तदुक्तं शारदायाम्—

तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम्।
वर्णात्मनाऽऽविर्भवति गद्यपद्यादिभेतः[1] ॥ इति।

एवञ्च —

भिद्यमानात्पराद् बिन्दोरव्यक्तात्मा रवोऽभवत्[2] ॥ इति च।

अन्यच्च —

सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः।
शक्तिं ततो ध्वनिस्तस्मात नादस्तस्मान्निरोधिका ॥
ततोऽर्द्धेन्दुस्ततो बिन्दुस्तस्मादासीत्परा ततः।
पश्यन्ती मध्यमा वाचि वैखरी शब्दजन्मभूः[3] ॥ इति।

श्रीप्रपञ्चसारतन्त्रे तु जगन्मूलभूता परिणामिनी मायाशक्तिः। तस्या आधारभूतश्चिदात्मा मूलाधारः। तस्मात् चैतन्याभासविशिष्टतया प्रकाशिका माया निष्पन्दा परा वागुच्यते। सस्पन्दावस्थाः पश्यन्त्यादयः। तथा च सामान्यस्पन्दप्रकाशरूपिणी नादतत्त्वात्मिका अध्यात्ममूलाधारादिनाभ्यन्तम् अभिव्यज्यमाना पश्यन्ती। सामान्यज्ञानात्मकत्वात्सा पश्यन्तीत्युच्यते। एवं हि वाह्यान्तःकरणाद्यात्मिका हिरण्यगर्भरूपिणी बिन्दुतत्त्वमयी नाभ्यादिहृदयान्ताभिव्यक्तिस्था विशेषस्पन्दसङ्कल्पादिसतत्त्वा मध्यमावागिति। आहोस्वित मध्ये मा बुद्धिर्यस्याः सा मध्यमा। भाव एव विशेष्यः। तथा च विराड्रूपिणी बीजात्मिका हृदयादास्यान्तम् अभिव्यज्यमाना शब्दसामान्यात्मिका वैखरी वागिति। उक्तञ्च—

मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः।
वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना—
बद्धस्तस्माद् भवति पवनप्रेरितो वर्णसङ्घः[4] ॥ इति।

किं च—

सृष्टिकाले महेशानः पुरुषार्थ प्रसिद्धये।
विधत्ते विमलं ज्ञानं पञ्चस्रोतोऽभिलक्षितम्[5] ॥

---

१. शा० ति०—१।१४। २. तत्रैव—११३। ३. तत्रैव—१११, ११२।
४. श्रीप्रपञ्च०—२।४३। ५. मृगेन्द्र० विद्या०।

इत्युक्त्या परमेश्वरः सृष्टेरारम्भे भुक्तिमुक्त्यात्मकपुरुषार्थसंपत्तये सद्योजात-वामदेव–अघोर––तत्पुरुष–ईशानाख्यमन्त्रमयस्वमुखपञ्चकेन विमलज्ञानस्वरूपान् दिव्यागमानभिव्यञ्जयतीति प्रतिपाद्यते । तत्र स्यादेका शङ्का–यद्यप्यनादिभूतस्य परमेश्वरस्य स्वरूपभूतं विमलं ज्ञानमप्यनादिः, तथापि श्रेष्ठं तद् विमलं ज्ञानं प्रशान्तस्वरूपाद् निष्कलात् परशिवात् कथं प्रकाशितम् ? तदुच्यते–ज्ञानं द्विविधं, अवबोधरूपं शब्दरूपञ्च । अवबोधरूपं ज्ञानं यद्यप्यनादिः, तथापि शब्दरूपारूढ-मेवार्थे प्रवर्तते । तस्मादवबोधरूपं तद् विमलज्ञानं कथं शब्दरूपेण कामिकादि-शास्त्ररूपतया प्रकाशितमिति ?

अत्रोच्यते समाधानम्–परमेश्वरोऽवबोधरूपमथवा स्फुरणरूपं ज्ञानं सृष्टेरा-रम्भे नादरूपेणाविष्कृत्य ततः परमाधिकारावस्थायां सदाशिवरूपमास्थाय पुनः शब्दरूपारूढं ज्ञानमनन्ताद्यष्टविद्येश्वरेभ्य उपदेशयामास । अत्र विषये इदमप्य-वधेयम् यत् परमकारणभूते व्योमाकारे शिवतत्त्वे सर्वेषां शब्दानां परमकारण-भूतोऽत्यन्तं सूक्ष्मो नादोऽव्यक्ततया वरीवर्ति । यस्मादयमव्यक्तावस्थास्थस्ततोऽस्य परनाद इति व्यवहारः । परनादस्याभिव्यक्तिरेव स्फोटः । स एव वर्णः । शिव-तत्त्वाच्छक्तितत्वस्याविर्भावसमय एव स्फोटस्याविर्भावः । मयूराण्डरसन्यायेन सर्वशब्दात्मकेन स्फोटेनालिङ्गितं शक्तितत्त्वं प्रादुर्भवति । एवं स्फोटेन सहावि-र्भूतस्य शक्तितत्त्वस्य परबिन्दुरिति नाम । ततो मूलवर्णभूतः स्फोटः शक्तितत्त्वात् सादाख्यतत्त्वस्य अथवा सदाशिवरूपस्य आविर्भावसमये स्थूलरूपं प्राप्याऽभिव्य क्तोऽनुभववेद्यो भवति । सेयमवस्था 'अपरनादः' इति नाम्ना व्यवह्रियते । अनेन सादाख्यतत्त्वेन सहाविर्भूतो वर्णसमूहात्मकोऽक्षरबिन्दुरपरबिन्दुरिति व्यवह्रियते । अपरबिन्दोः सकाशादेव ईश्वरतत्त्वाश्रयाः सूक्ष्मवर्णाः शुद्धविद्यातत्वाश्रयाश्च स्थूलवर्णा आविर्भूताः । एवं शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या इत्याख्यकार्य-तत्त्वचतुष्टयस्याश्रयभूताश्चतुर्विधाः शब्दा एव क्रमेण परा-पश्यन्ती-मध्यमा-वैखरीति वाग्वृत्तिचतुष्करूपेणाभिव्यक्ता अर्थवाचका भवन्ति ।

पूर्वं परनादस्याभिव्यक्तिरेव स्फोटः, स च वर्णरूपः इत्युक्तम् । वैयाकरणै-र्वर्णातिरिक्तः स्फोटोऽभ्युपगम्यते । तन्त्रसिद्धान्तागमरीत्या च वर्णातिरिक्तः स्फोटो नास्ति । शङ्कराचार्या ब्रह्मसूत्रव्याख्याने वर्ण एव च शब्दः[1] इत्युपवर्षाचार्यवाक्य-मस्मिन्नर्थे उदाहरन्ति । तथा च रामकण्ठाचार्या नादकारिकायां वर्ण एव स्फोट इति प्रतिपादयन्त्येव प्रमाणबलेन ।

सोऽयं स्फोटो मूलवर्णभूतः प्रणवः । तस्य प्रणवस्यैव विस्तारोऽकारादिल-कारान्तपञ्चाशदक्षरप्रसरः । प्रमाणप्रमातृप्रमेयरूपे विश्वप्रपञ्चविलासे प्रवृत्तस्य सृष्ट्युन्मुखस्य परशिवस्येच्छाशक्त्या क्षोभितो बिन्दुरेव प्रणव इत्युच्यते । प्रणवा-

१. शा० भा०–१।३। ८-२८ ।

त्प्रसृतेषु पञ्चाशदक्षरेषु ककारादिलकारान्तानां व्यञ्जनानां स्वरैर्विनानुपयुक्तत्वाज्जीववियुक्तशरीरतुल्यत्वाच्छरीरत्वेन व्यवहारः। अकारादिषोडशस्वराणामात्मत्वेन व्यवहारः। एवं व्यञ्जनस्वरसंयोगे पदोत्पत्तिः। पदसमुदायैर्मन्त्राणामुत्पत्तिः। तादृशवर्णैः पदैर्मन्त्रैश्च तन्त्राणामाविर्भाव इति तान्त्रिकाः। तथा हि—

स महामायाजन्यो नादः परमार्थवाचको भवति।
येन स्थूलं शब्दं मन्त्रं तन्त्रात्मकं भवेद्वापि[1] ॥ इत्युक्तम्।

एवञ्चेदमेव ज्ञानगुरोर्महेश्वरस्य तत्त्वं चन्द्रशेखरादिपञ्चविंशतिमूर्तिभेदेन भिन्नं लघुशब्देन्दुशेखर-परिभाषेन्दुशेखर—महाभाष्योद्द्योतप्रभृतिग्रन्थप्रकल्पनेन नागेशभट्टस्तान्त्रिकमेव परापश्यन्तीमध्यमावैखरीति वाक्चतुष्टयस्य सिद्धान्तं प्रदर्शितवानिति प्राज्ञैः सूक्ष्मेक्षिकया विचारणीयमिति शिवम्।

## नागेशाभिमतशक्तेस्तान्त्रिकत्वम्

### नैयायिकमीमांसकप्राचीनवैयाकरणमतेषु शक्तेः स्वरूपम्

शब्दवृत्तयः शक्तिर्लक्षणाव्यञ्जनाभेदेन त्रिधा भवन्ति। तत्र शक्तिरिति विषयमलम्ब्य तत्र नागेशाभिमतशक्तिस्वरूपं प्रतिपाद्य तस्यास्तान्त्रिकत्वं सम्प्रति साध्यते।

सहजाऽऽधेयाशब्दशक्तिरिति भेदेन शक्तयस्त्रिधा भवन्ति। जातमात्रस्य पक्षिणो आकाशे उत्पतनस्य शिक्षाया अभावेऽपि तेषां स्वाभाविकी गतिः सहजाशक्तिरिति। आधेयाशक्तिश्च पाषाणादिना निर्मितायां प्रतिमायां प्रतिष्ठाविधिना स्थापिता विष्णवादिदेवशक्तिः। शब्दशक्तिश्च घटशब्देन घटघटत्वावच्छिन्नस्य विशेष्यविशेषण–वाच्यवाचकभावस्य शक्तिरिति। तत्र तिसृषु तासु शक्तिषु शब्दशक्तिरर्थबोधे ज्ञातैवोपयुज्यते न तु स्वरूपसती। तस्माच्च शब्दशक्तेः स्वरूपं कीदृशमिति जिज्ञासायां 'अस्माच्छब्दादयमर्थो बोद्धव्य' इत्याकारा शब्दजन्यबोध विषयत्वप्रकारिका अर्थविशेष्यिका अथवा 'इदं पदमिममर्थं बोधयतु' इत्याकारार्थविषयकबोधजनकत्वप्रकारिका इदं पदनिरूपितजनकतावत्वेन इश्वरेच्छाविषयो वाचको बोधविषयत्वेनेश्वरेच्छाविषयश्च वाच्य इति नैयायिकानां वाच्यवाचकभावो व्यवतिष्ठते। परन्तु नैयायिकमतमिदन्नयुक्तम्, अर्थेनासम्बद्धस्य शब्दस्य तद्बोधकत्वानुपपत्या कल्प्यमानस्य शक्तिरूपसम्बन्धस्य अर्थविषयकबोधजनकत्वघटितत्वे अल्पाश्रयापत्तिः। विनिगमनाविरहेणेश्वरेच्छाबोधयोरुभयोः शक्तित्वकल्पने गौरवाच्च। किञ्च 'दण्डात् घटो भवतु' इतीच्छाविषयत्वमेव दण्डे घटजनकत्वं स्यातिति–'अन्यथा सिद्धिशून्यस्य नियता पूर्ववर्तिता' इति कारिकाया घटाव्यवहितप्राक्क्षणावच्छेदेन घटाधिकरणवृत्तित्वरूपस्य नैयायिकपरिभाषितस्य घटजनक-

---

१. नादकारिकायाम्।

त्वस्योच्छेदापत्तिः। किञ्च, धूमात् वह्निज्ञानं जायतामितीच्छाविषयत्वमेव वह्नि-धूमयोः सम्बन्धःस्यात्। तत्सम्ब्रन्धमहिम्नैव च धूमात् वह्न रनुमितिः स्यादिति-व्याप्तेरुच्छेदापत्तिः। अथ च चक्षुरादिप्रमाणानां जनकत्व तद्घटितातिरिक्त सम्बन्धेनैव घटादिप्रमेयसम्बद्धानां घटादिविषयकज्ञानजनकत्वदर्शनेन तद्वदेव शब्दानामपि जनकत्व तद्घटितातिरिक्तसम्बन्धेनैवार्थसम्बद्धानां शब्दानामर्थबोध-कत्वस्यौचित्यात्। किञ्च,निरुक्तेच्छायाः समवायेनात्मवृत्तित्वेऽपि शब्दार्थरूपसम्बद्ध-सम्बन्धिवृत्तित्वाभावात् सम्बन्धत्वं दुर्वचम्। 'सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितः', 'द्विष्ठः सम्बन्धः' इति च 'विशिष्टबुद्धिनियामकः' इति चाभियुक्तो-क्तेः। स्वनिरूपितबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन तस्या इच्छायाः अर्थवृत्तित्वं स्व ( इच्छा ) निरूपितबोधजनकत्वनिष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शब्दवृत्तित्वञ्चेति तस्या द्विष्ठत्वमिति तु दुर्वचम्। आधारा-धेयभावनियामकसम्बन्धस्यैव वृत्तितानियामकत्वेन निरुक्तेच्छाविषयतायाः शब्दार्थ-योरिच्छाश्रयतानियामकत्वानुपपत्तेः। अतो नैयायिकोक्तशब्दशक्तिस्वरूपन्न समी-चीनम्। अतः प्राचीनवैयाकरणैः 'बोधजनकतारूपा शक्तिः' अङ्गीक्रियते। उक्तञ्च—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता तथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[१] ॥ इति।

अयंभावः—इन्द्रियाणां चक्षुरादीनां घटादिषु तथा च चाक्षुषादिकारणता यथाऽनादिरस्ति तथैव शब्दानामर्थैः सह तद्बोधकारणता अनादिरिति अनादिभूतं बोधकारणत्वं शक्तिरित्यवगम्यते। परन्त्वेतादृशशक्तिस्वीकारे आधुनिकदेवदत्ता-दिस्थलेऽनादिबोधजनकतारूपायाः शक्तेरभावात् बोधोभवितुन्नार्हति। अतो-ऽनादिभूतशक्तिप्रसिद्धिप्रदर्शनमात्रार्थकन्न तु तच्छक्तिलक्षणशरीरे प्रविष्टमिति बोधकारणत्वमात्रस्यैव शक्तित्वमिति स्वीकारेणाधुनिकदेवदत्तादिस्थले न दोषः। अतः प्राचीनानां वैयाकरणानाम्मते 'बोधकारणम्' एव शक्तिरिति परिज्ञायते।

कैश्चित्तु आधुनिकदेवदत्तादिस्थले अनादित्व विशेषणविशिष्टबोधकारण-तारूपायाश्च शक्तेरभावात् ततो बोधो न स्यादिष्यते च बोधोऽतः संकेतज्ञान-मपि हेतुरित्युच्यते। पित्रादिसंकेतज्ञानेऽपि अन्वयबोधप्रसङ्गात् न लाक्षणिकाति-व्याप्तिश्चेति संकेतज्ञानमन्तराबोधानुदयाच्छाब्दबोधं प्रति संकेतज्ञानमपि हेतुर्वा-च्यः, तथा चावश्यकत्वात् संकेत एव शक्तिरस्तु आधुनिकदेवदत्तादिपदे पित्रादिः, गवादौ च ईश्वरस्येति वक्तुमशक्यमिति स्वीक्रियते, तन्न रोचते वैयाकरणेभ्यः। यतो हि संकेतस्य स्वरूपहेतुत्वेऽगृहीतशक्तिकपदादपि अर्थबोधापत्तिः। सामान्यतो ज्ञातस्य हेतुत्वे प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गात्। संकेतत्वेन संकेतज्ञानस्य हेतुत्वे गवादावीश्वरसंकेतत्वेन जज्ज्ञानशून्यानां तत्तदर्थबोधजनकत्वग्रहवतां बोधेन

१. वाक्य०—३।३।२९।

व्यभिचारः। अतः सर्वतः पर्यालोचनयाऽवगम्यते यद् बोधजनकतारूपैव शक्तिः। एतादृशी बोधजनकतारूपाशब्दशक्तिर्द्विविधा, प्रसिद्धाशक्तिरप्रसिद्धाशक्तिश्चेति। तत्र प्रसिद्धया शक्त्या गङ्गापदप्रसिद्धस्य भगीरथरथखातावच्छिन्नजलप्रवाहरूपार्थबोधो जायते, अप्रसिद्ध्या शक्त्या तु तीरादिलक्ष्यार्थस्यावबोध इति वैयाकरणभूषणकारादीनां वैयाकरणानां मतं सिद्धयति। अतः—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्[1] ॥ इत्युक्तम्।

तथा चानया कारिकया फलव्यापारयोरिति द्विवचनेन फलनिरूपिता व्यापारनिरूपिता च धातोः पृथक् शक्तिरिति, एकवृन्तफलद्वयन्यायेन, पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिरिति वा। अत एव फले स्तोकादिरूपकर्मणोऽभेदेन ग्रामादिकर्मणश्च भेदसम्बन्धेनान्वय इति वैयाकरणभूषणकाराः प्राहुः।

प्राचीनवैयाकरणानामिदम्मतं शब्दशक्तिस्वरूपं नव्यवैयाकरणा न सहन्ते। यतश्च बोधजनकतारूपशक्तिस्वीकारे आत्माश्रयापत्तिः। आत्माश्रयेण स्वस्यैव स्वावच्छेदकत्वासम्भवादिति। नागेशोपाध्यायास्तु—फलविशिष्टव्यापारे, व्यापारविशिष्टफले च पदपदार्थयोः सम्बन्धान्तरमेव शक्तिर्मन्यन्ते। यतो हि पृथक् शक्तिस्वीकारे व्यापारोद्देश्यकफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधस्यापत्तिः। उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः सत्त्वात्।

एवं हि शक्तिनिरूपणप्रसङ्गे वैयाकरणलघुमञ्जूषायां अर्थविशेष्यकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपिकेश्वरेच्छारूपा, तादृशेच्छीयविशेष्यतारूपा वा शक्तिरिति नानाविधाः पक्षा अवलम्बितास्तार्किकैः। नागेशेन च इच्छाया विशेष्यताया वा सम्बन्धत्वस्य क्वचनाप्यदर्शनात् शाब्दबोधात् प्रथमं तादृशस्य सम्बन्धस्यावर्तमानत्वेन कार्याव्यवहितप्राक्क्षणावच्छेदेन वर्तमानस्यैव कारणतावच्छेदकतया तार्किकाभिमतशक्तेः सम्बन्धत्वं वक्तुमशक्यमित्याद्यनेकदोषैस्तेतां शक्तिलक्षणं कोण्डभट्टाभिमतं घटादिविषयकबोधजनकघटादिपदानां सामर्थ्यरूपं शक्तिस्वरूपञ्च शक्तेर्भिन्न एव सम्बन्धः शक्तेः कार्यजनकत्वनियामकत्वेन दृष्टः, यथा दीपगतप्रकाशकत्वशक्तेः कार्यजनकत्वे दीपवस्तुनोः प्रकाशकत्वशक्त्यतिरिक्तसंयोगादिसम्बन्धसत्व एव वस्तुप्रकाशकत्वम्, नान्यथा, घटपटादिगतशक्तेरपि शाब्दबोधरूपकार्यजनने सम्बन्धसत्त्वे एवार्थबोधकत्वं नान्यथेत्यादिदोषैश्च निरस्य 'वाच्यवाचकभावापरपर्यायाऽखण्डसम्बन्धरूपा शक्तिः' इत्युक्तम्। सत्ये चैवं लक्षणे वाच्यवाचकत्वे न हि बोधजनकत्वबोधविषयत्वरूपे पूर्वोक्तदोषापत्तेः, किन्त्वखण्डोपाधिरूपपदार्थान्तरम्। स च वाच्यवाचकभावः शब्दार्थोभयनिष्ठ एव। 'तद्ग्राहकं चेतरेतराध्यासमूलं तादात्म्यम्। तच्च सङ्केतः। तस्यापि

---

१. वैया० भू० सा० धा० नि० २।

पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः तस्य सम्बन्धत्वाभावात्। भेदाभेदरूपस्य तस्य तत्त्वासम्भवात्। तद्घटकभेदस्याभेदस्य वा तत्त्वादर्शनात्[1]' इति।

अत्र तादात्म्यस्य शक्तिग्राहकत्वं संगच्छते नतु शक्तित्वम्। अध्यासश्चान्यस्मिन्नन्यधर्मावभासः, यथा शुक्तौ रजतत्वावभासः। तन्मूलकं यथा इदं पदार्थरजतपदार्थयोस्तादात्म्यं तथा पदपदार्थयोरपि 'अयं घटः' इति तादात्म्यमध्यासमूलकमेव, न वास्तविकम्। 'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः' इति भाष्यकृता स्वीकृतत्वात् शाब्दबोधोपपत्तये कल्प्यमानस्य सङ्केतस्य विनिगमनाविरहेण तादात्म्यरूपत्वस्य स्वीकारात्। स च सङ्केतो द्विविधः भेदरूपोऽभेदरूपश्च। भेदरूपः नैयायिकाद्यभिमतः, अभेदरूपश्च वैयाकरणतान्त्रिकमात्राभिमतः।

महामतिना महामहोपाध्यायेन नागेशभट्टेन स्वपक्षसंसाधनाय भाष्यप्रामाण्यमप्यभिहितम्—'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः' इति। 'इतरेतराध्यासो रूप्यतेऽनेनेति करणे घञ्। स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम्। किञ्च, पाणिन्यादिस्मार्त्तसङ्केतस्यैव वाचकतानियामकत्वं नत्वाधुनिकस्येत्याद्यपि दर्शितम्[2]' इति। अत्रैव 'तस्य भावः' इति पाणिनिसूत्रस्थभाष्यस्यापि सम्मतिर्नागेशेन प्रदर्शिता। तत्र हि भाष्ये—'डित्थादिषु तर्हि वर्त्यभावात् वृत्तिर्न प्राप्नोति। डित्थत्वं डित्थता डम्भिट्टता डम्भिट्टत्वमिति। तत्रापि कश्चित् प्राथमकल्पिकः डित्थो डम्भिट्टश्चेति। तेन कृतां क्रियां गुणं वा यः कश्चित् करोति स उच्यते डित्थत्वं त एतत् डाम्भिट्टत्वं त एतत् एवं डित्थाः कुर्वन्ति एवं डाम्भिट्टाः कुर्वन्ति। यस्तु प्राथमकल्पिको डित्थो डाम्भिट्टश्च तस्य वर्त्यभावात् वृत्तिर्न प्राप्नोति। नैष दोषः, यथैव तस्य काथञ्चित्कः प्रयोग एवं वृत्तिरपि भविष्यति। यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने। किमेतैस्त्रिभिर्भावग्रहणैः क्रियते। एकेन शब्दः द्वाभ्यामर्थः। यदा सर्वे शब्दाः स्वेनाऽर्थेन भवन्ति[3]' इत्युक्तम्।

अत्रत्य भाष्ये प्राथमकल्पिकेति पदेन 'युगानां सैका सप्ततिः कल्पशब्देनोच्यते। तत्र प्रथमकल्पे यो डित्थो मुख्यस्तद्गतगुणक्रियासजातीयगुणक्रियाऽत्र यो यः स उच्यते' डित्थत्वं त एतदिति पदेन। एवञ्च प्राथमकल्पिकडित्थगतगुणक्रिया-

---

१. वैया० सि० ल० म० शक्ति० रत्नप्रभा टी०–पृ० सं० २३।

२. वैया० सि० ल० म० रत्नप्रभा० टी० शक्तिनि० पृ० सं० २५।

३. महा० ( पा० सू० ५।१।११९ ) सूत्रम्।

सदृशगुणक्रिया एव भावप्रत्ययार्थः, तदभिप्रायेणैव डित्थत्वादिशब्दप्रयोगदर्शना-दिति फलति।

अत्रेदं रहस्यम्--यद्यपि 'यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इति वार्तिककारमते गुणो न भेदको भेद्यश्च विशेष्यमित्येव लभ्यते। तथा च विशेष्यमात्रवाचकाद् भेदकमात्रे गुणे भावप्रत्ययः। घटादिशब्दानां घटत्वा-द्यवच्छिन्नद्रव्यवाचित्वे जातौ त्वादिप्रत्ययः। जातिमात्रवाचित्वे तु शब्दार्थयोस्ता-दात्म्यात्तत्समनियतानुपूर्वीरूपेऽर्थे भावप्रत्ययः, यद्वा जातित्वे। यद्धि स्वरूपेणो-परञ्जकं तद्विशेषणमित्युच्यते। शब्दश्च स्वरूपेणार्थं प्रत्याययतीत्युपरञ्जकत्वा-दानुपूर्व्येव प्रवृत्तिनिमित्तमित्यध्यस्तेन तेनैव रूपेणार्थप्रतीत्या डित्थादिशब्देभ्योऽपि तद्वदेव स्वरूपे त्वादयः। स्वरूपाध्यासेन संज्ञावाचकानां संज्ञिप्रत्यायकत्वात्तदेव प्रवृत्तिनिमित्तम्। तथापि 'तदेवत्ते डित्थत्वम्' इत्यत्र क्रियागुणाध्यासादत्र वृत्तौ डित्थत्व सहचरितयोः क्रियागुणयोस्त्वादय इत्युक्तिः क्रियागुणयोरध्या-सपरेति।

कौस्तुभकारैः श्रीमद्भिर्भट्टोजिदीक्षितैर्घटादिविषयकबोजनकघटादिपदानां सामर्थ्यमेव शक्तिरिति पदपदार्थयोर्बोध्यबोधकभावनियामिका शक्तिरेव सम्बन्ध इत्युच्यते, तदखण्डरूपस्या शक्तेर्व्याख्यानविरुद्धान्नयुक्तम्। 'शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात्। दीपगतप्रकाशकत्वशक्तावपि सम्बन्धे सत्येव वस्तु-प्रकाशकत्वं नान्यथेति दृष्टत्वात्[1]'।

एतेन शक्तेर्भिन्न एव सम्बन्धः शक्तेः कार्यजनकत्वनियामकत्वेन दृष्टः, यथा दीपगतप्रकाशकत्वशक्तेः कार्यजनकत्वे दीपवस्तुनोः प्रकाशकत्वशक्त्यतिरिक्तसंयो-गादिसम्बन्धसत्त्व एव वस्तुप्रकाशकत्वम्, नान्यथा, तथा घटपदादिगतशक्तेरपि शाब्दबोधरूपकार्य्यजनने सम्बन्धसत्व एवार्थबोधकत्वं नान्यथा। अतो यत्रोपकार-कस्वभावः सम्बन्धोऽस्ति तत्र शक्त्याख्यो धर्मोऽनुमीयतेऽसम्बद्धानां शक्तिसत्वेऽपि कार्यजनकत्वाभावादितिधियोच्यते वाक्यपदीये—

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणामप्यसौ गुणः[2] ॥ इत्युक्तम्।

अतः शब्दार्थयोरितरेतराध्यासः संगच्छते। 'कः शब्दः', 'कोऽर्थः' इति प्रश्ने 'घट इत्ययं शब्दः' 'घट इत्ययमर्थः' इत्येकाकारोत्तरदर्शनात्तयोरध्यास-सिद्धिः। 'घटइत्याकारकं ज्ञानम्'इति व्यवहाराच्छाब्दज्ञानयोरपि स इति 'शब्दस्य शब्दस्वरूपपरतात्पर्यग्राहकत्वात्'। अत एव 'पदं श्रुतम्' 'पदार्थं शृणु' 'अर्थं वदति'

---

१. वैया० सि० ल० म० शक्तिनि० पृ० सं० ३१।

२. वाक्यप०–३।३।६।

इत्यादिव्यवहारः[1]। एवञ्चाध्यासपक्षाश्रयणेन श्रुतिस्मृतिपरप्रमाणान्यपि नागेशेन 'वृद्धिरादैच्[2]' 'ओमित्येकाक्षरं ब्रह्म[3]' इति निरूपितम्।

नागेशाभिमतमध्यासमूलकस्तादात्म्यं किदृशमित्युत्कण्ठायाम्—'तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् तादात्म्यम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः[4]'इति। तथाध्यासमूलकस्य भेदविशिष्टाभेदस्य तादात्म्यरूपत्वादेव शब्दार्थयोस्तादात्म्येन अग्निशब्दोच्चारणे मुखदाहाद्यापत्तिर्नभवति। अयमध्यास आदिव्यवहारकृदीश्वरकृत एव। अतो वाच्यवाचकभावापन्नयोः शब्दार्थयोस्तादात्म्यमस्त्येवेति विचिन्त्योक्तं वाक्यपदीये—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[5]॥ इति।

यथा चक्षुरादीन्द्रियाणां स्वविषयज्ञानजनने अनादिकालिको व्यवहारो योग्यता वा तज्जनकतावच्छेदकधर्मवत्वरूपा भवति तथाऽनादिशब्दानामर्थैन सह अनादिः सम्बन्ध एव तज्जनतावच्छेदको धर्म उपपद्यते। अतः प्रयोक्तुर्घट इति शब्दोच्चारणेन 'घट इत्ययं शब्दः' 'घट इत्ययमर्थः' 'घट इतीदं ज्ञानम्' इत्येवं रूपैः शब्दैर्ज्ञानम्। अतः शब्दार्थज्ञानानां स्वभावसिद्धः कश्चन विलक्षणः सम्बन्धोऽस्त्येवेति वैयाकरणानां महाभाष्य—वाक्यपदीय – मञ्जूषाग्रन्थकाराणाम्मतम्। अध्यासमूलकस्य शब्दार्थभानाभेदस्यानादिपरम्परानिर्वचनायैव श्रीमता नागेशेन बौद्धार्थस्य कल्पनमपि कृतम्। एतेन व्याख्यानेन सिद्धयतीदं यन्नागोजिभट्टाः प्राक्तनवैयाकरणानाम्मतमुपस्थाप्य शब्दार्थयोस्तादात्म्यं स्वीकुर्वन्ति। तच्चानादिः। एतेन तेन अध्यासप्रक्रियाऽपि स्वीकृता। अतः शब्दार्थयोस्तादात्म्यमअनादित्वञ्चानादिकालत एव सिद्धं भवति।

तान्त्रिकास्तु - शब्दार्थयोस्तादात्म्यमभेदसम्बन्धेनेति व्यवहरन्ति। अत्र मते वाच्यवाचकभावस्थितिस्तु वाचकः शब्दः वाग्रूपः विमर्शाख्यः शक्तिपरकः, वाच्योऽर्थश्च प्रकाशरूपः शिवपरकः, तयोः परस्परमभेदः। अत एव शब्दार्थयोः परस्परमभेदेनान्वयः। विश्वसर्गः शिवशक्तिसामरस्यादेव जायते। तच्च सामरस्यमभेदेन, अभेदश्च शब्दार्थरूपयोः शिवशक्त्योरपार्थक्येन स्थितः। एतदेव रघुवंशमहाकाव्यस्यादौ मङ्गलश्लोकेन कविकुलगुरुः कालिदासः स्मरति—

वागार्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥[6] इति।

---

१. वै० सि० ल० म० शक्तिनिरूपणे–पृ० ३३। २. पा० सू०–१।१।१।
३. ब्रह्मविद्योपनिषद्–३। ४. वै० सि० ल० म० शक्ति०—३४ पृ०।
५. वाक्य०—३।३।२९। ६. रघु० म०—१।१।

अत्रेदमाकूतम्—परावागात्मनाहतभट्टारकपरशिवस्वरूपा षट्त्रिंशत्तत्वप्रसरणहेतुभूता संविदेव मातृका पदेनोच्यते तन्त्रशात्रे नित्याषोडशिकार्णवादिग्रन्थेषु। सा एव मातृका वर्णमेलनेन मन्त्र-शब्द-वाग्रूपं धत्ते। शब्दराशिर्मातृका मालिनी कालिकेत्यादिभिः पदैस्तत्र तत्र शास्त्रेषूच्यमाना परभैरवीयपरावागात्मिका मातृकैव ज्येष्ठा रौद्रयाम्बिकाख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयकारणभूता वर्णसंघट्टशरीराणां सप्तकोटिमहामन्त्राणां जननी। अत एव तन्त्रसद्भावे--

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका॥

या सा तु मातृकादेवी परतेजः समन्विता।
तया व्याप्तमिदं विश्वं सब्रह्मभुवनान्तकम्[1]॥ इत्युक्तम्।

एवं हि—

अखिलमनाहतमूर्तिर्मात्युतीर्णस्वरूपिणी तरति।
कायति नानानामप्रपञ्चरूपेण मातृका देवी[2]॥ इति च।

अत्रायं भावः—शिवशक्त्यादिप्रतिनियतव्यपदेशासहिष्णुरनाख्यः परपरामर्शात्माऽनुत्तरः प्रकाश एव परं तत्त्वम्। स एव स्वातन्त्र्याद् विश्वमवबिभासयिषुः प्रथमं शिवशक्तिरूपतां स्वात्मन्यवभासयति, अकारादिहकारान्तां मातृकामुल्लासयतीति यावत्। अत्रानुत्तरलिपिरकारः, विमर्शलिपिश्च हकारः। एतमर्थम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः। इति संकेतपद्धवचनुमपोद्वलयति।

तन्त्रालोके च—

अकुलस्यास्य देवस्य कुलप्रथनशालिनी।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः[3]॥

इत्यनेन च स एवार्थः प्रतिपादितः। पुनश्च सा शक्तिः केत्युत्कण्ठायामुच्यते–

"त्रिपुरा परमा शक्तिराद्या जातादितः प्रिये[4]॥ इति।

एवं हि—

शिवः शकत्या युक्तो यदि भवति शक्तः प्रभवितुं—
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि[5]। इत्यादयश्चोक्तम्।

---

१. तन्त्रस० १–४-५। २. सौभाग्यसुधो० १।६। ३. तन्त्रा० ३।६७।
४. नित्या० ४।४। ५. सौन्दर्य० १।

अतः शिवशक्त्यपरपर्यायस्य वाच्यवाचकस्य शब्दार्थतादात्म्यस्योपपत्ति— र्वैयाकरणनागेशस्य तान्त्रिकाभिनिवेशं साधयति । किञ्चोक्तम्—

विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा ।
शिवशक्तिमयान्प्राहुस्तस्माद् वर्णान्मनीषिणः[1] ॥ इति ।

इत्येवं रीत्या स्वरव्यञ्जनवर्णात्मिकायाः शब्दराशेः शिवशक्त्यात्मकत्वमुपपद्यते । नागेशोपाध्यायानाम्मतेनाखण्डरूपशब्दार्थयोस्तादात्म्यरूपाशक्तिस्तान्त्रिकाणां शिवशक्त्योर्वाच्यवाचकभावापन्नयोः शब्दार्थरूपयोरभेदरूपायाः शक्तेरेव साधर्म्यमूलकत्वमिति विद्याविद्योतितान्तः करणैः सुधीभिर्विमृश्यमिति दिक् ।

१. शारदा० १।८ ।

# चतुर्थोऽध्यायः

## महावैयाकरणनागेशभट्टाभिमतबौद्धार्थस्य तान्त्रिकत्वम्

**बौद्धपदार्थस्य स्वरूपनिर्वचनम्—**

बुद्धौ तादात्म्येन स्थिताः पदार्थाः बौद्धपदार्था इति। अत्र पदार्थत्वञ्च पदनिष्ठशक्तिज्ञानजन्यबोधविषयताऽऽश्रयत्वम्। एवं हि बुद्धेः पर्यायाः–धीः, प्रज्ञा, मतिः, प्रेक्षा, चित्, संविद्, चेतना, बुद्धिः, मेधा, प्रतिभा, हृल्लेखा इत्यादयः शब्दाः समानार्थकाः।

**व्याकरणशास्त्रे बुद्धेः स्वरूपम्—**

आत्माबुद्धचा समेत्यर्थान् मनो युङ्क्ते विवक्षया,
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
सो दीर्णो मूर्ध्न्यविहितो वक्त्रमापद्यमारुतः।
वर्णान् जनयते[1]..................॥ इति।

पाणिनीयाचार्याणां मते अन्तःकरणस्य परिणामविशेषो वृत्तिरेव बुद्धिरित्यागच्छति। आत्माऽन्तःकरणम्, बुद्धया स्ववृत्या समेत्य घटादीनर्थान् वक्तुमीच्छया मनः संयुनक्ति। अयञ्चार्थो महामहोपाध्यानां नागेशानां सिद्धान्तेन[2]। इयञ्च-बुद्धिरन्तः करणस्य वृत्तित्वात् विषयाकारेण परिणामिनीति। सूत्रकारमते आत्माऽन्तः करगम्, तच्च बुद्धितत्त्वमेव। एवं ह्यन्तःकरणस्य विषयाकारत्वादर्थ-प्रतिपादनेच्छया मनसा संयोगे मनसोऽपि विषयाकारावृत्तिरेवेत्यायाति। एतच्च 'गतिबुद्धिः' प्रभृतिकारकप्रकरणस्थसूत्रे शेखरेऽपि द्रष्टव्यम्। अतोऽन्तः करणमेव बुद्धिरिति वैयाकरणानां नागेशादीनां मतं प्रतिभाति।

यथा नद्यास्तडागस्य वा जलं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य चतुष्कोणाद्याकारं भवति, तथान्तःकरणमेवेन्द्रियमार्गान्निसृत्य तत्तदिन्द्रियेण सहैवेयं गौः, अयं घटः, इतिविषयाकारतया परिणमति। स च परिणामश्चक्षुरादिन्द्रियेण सहैव भवति। अत एव रसनेन्द्रियगतपित्तदोषान्वयेन 'गुडः कटुः' नेत्रगतपित्तदोषान्वयेन च 'शङ्खःपीतः' इत्यनुभूयते। अन्यथा गुडे कटुत्वाभावात् शङ्खे च पीतत्वाभावात् 'गुड कटुः', 'शङ्खःपीतः' इति प्रतीतिर्नोत्पद्येत। यथोक्तं नागोजिभट्टेन 'चितस्य विषयाकारपरिणामरूपा वृत्तिश्चेन्द्रियेण सहैव'। अत एव

---

१. पाणि० शिक्षा—६। २. लघु० शे० संज्ञा० प्र० द्रष्टव्यम्।

रसनेन्द्रियान्वितः पित्तान्वयेन 'शङ्खः पीत' इत्याद्युत्पद्यते। सा च भ्रमप्रमोभयरूपा'[1] इति।

पतञ्जलिनाऽपि तथैवोक्तम्––'प्राचीनाः ग्रामादाम्राः, तस्य सर्वत्रैव आम्रबुद्धिः प्रसक्ता। ततः पश्चादाह–ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधा इति। स तयाऽऽम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते, सस्ततः पश्यति बुद्ध्या आम्रांश्चाकृष्यमाणान् न्यग्रोधांस्तूपचीयमानान्। नित्या च स्वस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः। बुद्धिस्त्वस्य विपरिणमति[2]' इति।

## बुद्धेः गुणाः

शब्दार्थयोर्जिज्ञासा बुद्धेः स्वभावः। शब्दार्थयोः गुणस्वरूपाणाञ्च ज्ञानं श्रवणञ्च तयोः स्वरूपविषयकस्य ज्ञानस्य आत्मसात्करणमपि बुद्धेर्गुणाः सन्ति। शब्दार्थविषयकज्ञानस्यान्वेषणं विश्लेषणञ्च बुद्धेरेव गुणाः। अर्थस्वरूपायास्तात्त्विक्याः प्रतिभाया वास्तविकं ज्ञानं बुद्धिमाश्रित्यैव जायते। आत्मतत्त्वब्रह्मतत्त्वयोश्च ज्ञानं बुद्धेरेव कार्यम्। एवञ्च महाभारते बुद्धेः सप्तगुणाः प्रतिपादिताः।

तथा हि—

> शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
> ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः[3] ॥ इति।

अर्थतत्त्वस्य विवेचनं विश्लेषणं परीक्षणञ्चेत्येते सन्ति धीगुणाः। अर्थतत्त्वस्य विज्ञानेनैव तत्त्वज्ञानं जायते, अतस्तत्त्वज्ञानमपि बुद्धेरेव गुणः, नान्यस्य। एवमेवान्ये पञ्चगुणा अपि बुद्धेः सन्ति। तथा हि—

> इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता।
> संशयःप्रतिपत्तिश्च बुद्धेः पञ्चगुणान् विदुः ॥ इति।

अयं भावः—अन्तःकरणं परिणाम्यस्ति। अतो घटपटाद्याकारेण परिणतमन्तःकरणं बुद्धिरित्युच्यते। एवञ्च परिणामपरिणामिनोस्तादात्म्यमेव कथञ्चिदाधाराधेयभाव इत्युच्यते, पुनरन्तःकरणस्य अन्येन वृत्तिविशेषेण यदा सम्बन्धः सम्पद्यते तदा घटो विषयीभूत इत्युच्यते। बुद्धौ तु स घटः सूक्ष्मवासनावशात् पूर्वमेव स्थितोऽस्ति। तदेव घटादितत्त्वं 'बौद्धम्' इत्युच्यते। स चासौ पदार्थश्च बौद्धपदार्थ इति बोध्यम्।

---

१. वै० सि० ल० म० बौद्धार्थनिरूपणे––पृ० २९८।  २. महाभा०—१।१।५६।

३. महाभा० वनपर्व०––२।१९।

बुद्धिविषय एव बौद्ध इत्येव भ्रमो न कार्यः। न्यायनयेऽपि ज्ञानरूपायाः बुद्धेर्विषयो घटादिपदार्थो भवत्येव, किन्तु तेन हेतुना स बौद्ध इत्यभिधानं न युक्तम्, अपितु बुद्धिविषयो ज्ञानविषयो वा इत्येव व्यपदेशं लभते। तन्मते घटादयः पदार्थाः संस्कारात्मना बुद्धौ नावतिष्ठन्ते, अपितु बुद्धितत्त्वमपि तृतीयक्षणवृत्तिध्वंसप्रतियोगिभूतज्ञानात्मकसूक्ष्मगुणतत्त्वमेव, न तु सांख्यसिद्धान्तसिद्धं द्रव्यरूपं ज्ञानात्मकगुणतत्त्वम्। एवमेव विज्ञानवादिबौद्धानां मतेऽपि यद्यपि सर्वोऽपि पदार्थो बौद्धस्तथापि विज्ञानरूपत्वमेव तदीयस्य सर्वपदार्थस्य, तच्च विज्ञानं क्षणिकम्। क्षणिकत्वञ्च स्वोत्पत्त्यधिकरणक्षणाव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वरूपम्। अत्र स्वपदेन घटादयो पदार्था ग्राह्याः।

वैयाकरणाश्च बौद्धपदार्थाः क्षणिकाः नेति संगिरन्तो बुद्धौ जन्मान्तरीयसंस्कारात्मना विद्यमानाः पदार्था अपि एतज्जन्मनि विद्यन्ते। सा च बुद्धिर्द्रव्यात्मिकैव, नतु गुणात्मिका। अत एवोक्तं योगवाशिष्ठे—'विप्रवृथिव्यादिचित्तस्थं'[1] इत्यादि।

अतः स्पष्टमिदम्प्रतिभाति यद् स्वप्नावस्थायां सर्वोऽपि प्रपञ्चो बुद्धावेव-प्रतिभासते, न तु तस्य ईषदपि बाह्यसत्ताऽस्ति। अतस्तत्रावश्यमेवेदमनुमातव्यं भवति यदिमे पदार्थाः पूर्वत एव संस्कारावस्थसूक्ष्मरूपेण बुद्धौ स्थिता आसन् अथवा इदानीमदृष्टाद्युद्बोधकवशात् स्थूलरूपतामादधानाः प्रकाशन्ते। एवमेव जाग्रदवस्थायामपि समग्रपदार्थानां बौद्धसत्ता मन्तव्येति।

सत्यामस्यां विचारणायामियं प्रज्ञा बुद्धितुलामधिरोहति यदन्ये दार्शनिकाः सिद्धान्तव्यवस्थापकाश्च बुद्धिविषये बौद्धार्थविषये च किमभिदधति। तत्र क्रमेण संक्षेपेण चैकैकमालोच्यते—

**सांख्याचार्यास्तु**—'अध्यवसायो बुद्धिः' इति बुद्धिलक्षणं व्यवस्थाप्य अध्यवसायकार्यकर्तृत्वं बुद्धेः साधयन्ति। विधिनिषेधमये कार्ये किं कार्यं किमकार्यमिति-विचिकित्सायामन्वयव्यतिरेकात् परितो विचिन्त्य कर्तव्यनिर्धारणकार्यं बुद्धिः सम्पादयति।

एवञ्च सत्त्वरजस्तमोगुणात्मिकायारनादिपरिणामिन्या नित्यव्यापिन्या जडायाः प्रकृतेर्य आद्यःपरिणामोऽन्तः करणरूपो महत्तत्त्वापरपर्यायरूपश्च सा बुद्धिरित्युच्यते। अत्राध्यवसानम्-अध्यवसायः, यथाबीजेषु भविष्यद् वृत्तिकोऽङ्कुरः, तद्वद् महत्तत्त्वस्याहंकारः प्रथमः परिणामः। 'अयं घटः' 'अयं पटः' इत्येवं निश्चीयते यया सा बुद्धिरिति लक्ष्यते। अत एव बुद्धिर्जीवस्य सा विधाऽस्ति यया जीवःसूक्ष्माद्यर्थावबोधने समर्थो भवति। उक्तञ्च—'बुद्धिरन्तःकरणसूक्ष्माद्यर्थाव-

1. योगवाशिष्ठे—गाधिं प्रति विष्णोरुक्तिः।

बोधनसामर्थ्यम्, बुद्धिर्मनसो निरूपणसामर्थ्यम्, बुद्धिः विवेकपूर्वकं निश्चयरूप-ज्ञानम्'[1] इति ।

किञ्च—अज्ञानान्धकारस्यापहर्ता, सकलपदार्थस्य प्रकाशकः, प्रदीप इव देदीप्यमानः, आत्माश्रयो यः प्रकाशः सैव बुद्धिपदेनाभिधीयते । तथा हि—'बुद्धि-र्निराकारा' इति सांख्यैरभिप्रेतम् । उक्तञ्च—

निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते[2] ।। इति ।

सांख्ये तु 'धर्मादिगुणानां रूपाणाञ्च सम्बन्धा बुद्ध्याऽऽश्रिताः[3]' । अत एव 'महदिति' बुद्धेरपरसंज्ञेति । उक्तञ्च --'तस्य धर्माः रूपप्रकृष्टगुणयोगात् महत् संज्ञा, तदेव लक्षणम्'[4] इति ।

बोधोत्पादनात् बुद्धेरात्मना सह सम्बन्धः । अनेकविकल्पेषु सत्स्विदमेव कार्यमनुष्ठेयमिति बुद्धेर्वैशिष्ट्यम् । येषामज्ञानवतां बुद्धितत्त्वं सम्यङ् न समुल्लसति तेषां जीवने निराशा असाफल्यञ्चापतति, तमसाऽऽवृते जीवनमार्गे बुद्धिरूपस्य दीप इव प्रकाशस्य सबलतया जनाः स्वजीवनं परमपुरूषार्थरूपे मोक्षे संयोजयन्ति, तिरस्कुर्वन्ति च ते बुद्धिधना दृष्टोपायसाध्यस्य सातिशयसुखसाधकस्य पथोऽनु-सरणम् । तथा चोक्तम्—

दुःखत्रयाभिघाताज्जिज्ञासातदभिघातके हेतौ ।
दृष्टे साऽपार्थाचेन्नैकान्तात्यन्ततोऽभावात्[5] ।। इति ।

सांख्यकारिकायां बुद्धेर्निश्चयात्मकः परिणाम एव प्रमाणत्वेन स्वीक्रियते । स एव यथार्थज्ञानस्य साधको भवति । निश्चयात्मिकाया बुद्धेः प्रभावादेव प्रत्य-क्षानुमानशाब्दप्रमाणानि संगच्छन्ते । अतः साध्यवसायात्मिकाया बुद्धेर्निश्च-यात्मकः परिणामः प्रमाणम् । संशय-विपर्ययादिरहितायाश्चित्तवृत्तेः प्रामाण्यमभ्यु-पेयते । चित्तवृत्तेः पौरूषेयबोधेन प्रमाया उत्पत्तिः । अतो यथार्थज्ञानस्य प्रधान-साधिका चित्तवृत्तिरेव प्रमाणम् । उक्तञ्च—'तच्च प्रमाणमसंदिग्धविपरीतान-धिगतविषया चित्तवृत्तिः । बोधश्च पौरुषेयः, फलं प्रमा, तत्साधनं प्रमाणमिति' । प्रमाया उपलब्धौ इन्द्रियाणां गौणत्वं बुद्धेः प्राधान्यञ्च सिद्धयति । अंतोऽन्तः वाह्यज्ञाने मूलकारणत्वेन बुद्धिरेवावशिष्यते । उक्तञ्च—

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात्त्रिविधं करणं द्वारि द्वाराणि सर्वाणि[6] ।। इति ।

---

१. गीता शां० भा०—१०१४ । २. योगवाशिष्ठे । ३. सां० सू०–८।१।१७।३३-३४ ।
४. सांख्यसारे–पृ० सं० १२ । ५. सां० का०–१ । ६. तत्रैव—३५ ।

**जैमिनीयनये बुद्धेः स्वरूपम्—**

जैमिनीयनये 'घटः ज्ञातता सम्बन्धेन ज्ञानविशिष्टः, स्वरूपसम्बन्धेन ज्ञातता-वत्त्वादिति। ज्ञातता नाम ज्ञानजन्यो ज्ञेयनिष्ठोऽतिशयविशेषः। स च मानस-प्रत्यक्षविषयः[1]'। अतोः बुद्धिरनुमेया इति। 'नहि अज्ञातेऽर्थे कस्यचिद् बुद्धिरुप-लभ्यते, ज्ञाते तु अनुमानादवगच्छति'[2]। किं च बुद्धौ यत्ससन्निहितं भवति तदेव लिङ्गमिति सिद्धान्तः।

आधुनिकाश्च--बुद्धेः स्वरूपविषये बौद्धपदार्थविषये च बहु विवदन्ते। तत्र केचन ज्ञानात्मिकाशक्तिर्बुद्धिरिति व्यवस्थापयन्ति, केचन क्रियात्मिकाशक्ति-र्बुद्धिरित्यामनन्ति। केचन तु ज्ञानात्मिका क्रियात्मिका इत्युभयशक्त्यात्मिका बुद्धिरित संगिरन्ते। व्यवहारे दृश्यते एवं यद् यो यावान् बुद्धिमान् क्रियावान् च भवति तावान् एव तस्य बुद्धेराधिक्यं प्रस्फुटति। मैकडानलमहोदया बुद्धेः क्रिया-त्मकत्वशक्तिमत्वं स्वीकुर्वन्ति। अन्ये चाधुनिकविद्वान्सो ज्ञानतत्त्वप्रधानकारण-भूतायाः शक्तेरेव बुद्धिपदेन व्यवहारं कुर्वन्ति।

**औपनिषदां तार्किकाणाञ्च मते बौद्धपदार्थविवेचनम्—**

इच्छादयो धर्माः स्वरूपसम्बधेनान्तः करणनिष्ठास्तथा च स्वरूपसम्बन्धे-नेच्छाम्प्रति सामानाधिकरण्यसम्बन्धेन विषयस्य कारणत्वम् इति कार्यकारणभावो विषयस्य बुद्धिस्थत्वे एव संभवति। एवमेव ज्ञानादिकं प्रत्यपि विषयस्य कारणत्वं बोध्यम्। कार्यकारणयोः समानदेशत्वनियमादन्तः करणवर्तिसामग्र्या एव कार्यो-त्पादनं युक्तम्। किञ्च, सिद्धेपाकादाविच्छाविरहादसिद्धस्यैव पाकादेरिच्छाम्प्रति कारणत्वं वाच्यम्, तादृशस्य च पाकादेर्बुद्धिस्थत्वं स्वीकृत्य बुद्धावेव हेतुहेतुमतोः सामान्याधिकरण्यमुपपादनीयम्। अन्यथा असिद्धस्य पाकादेर्बहिर्देशस्थत्वाभावात् तस्य कारणत्वं शशशृङ्गायमाणमेव स्यादिति बौद्धपदार्थस्तार्किकैरपि स्वीकार्यः[3]। एवमेव शुक्तादौ यत्र रजतादेः भ्रमः, तत्रापि भ्रमाधिष्ठानं बौद्धशुक्त्यादिकं मन्तव्यम्, न तु वाह्यशुक्त्यादिकम्।

**पातञ्जले योगदर्शने च**—'शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्त-त्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्[4]' इति सूत्रसिद्धान्तानुरोधेन पदपदार्थयोरितरे-तराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽयमर्थो योऽयमर्थः सोऽयं शब्द इति इतरेतराध्यासमूलकः संकेतो भवति। एवमेते शब्दार्थसम्प्रत्यया इतरेतराध्यासात् संकीर्णाः गौ इति शब्दः गौः इत्यर्थः गौः इति ज्ञानम् य एषां प्रविभागज्ञः, एवं शब्दः, एवं प्रत्ययः, नेतरेतरसहगत इति। अन्यथा शब्दोऽन्यथाऽर्थोऽन्यथाप्रत्यय

---

१. शाबरभाष्ये ऋजुविमलायाम्—१९२९ ई०। २. शाबरभाष्ये सू० १।१।५।५।
३. वै० सि० ल० म० रत्नप्रभाटीकायां—२०५। ४. यो० द० सू०--३।१७।

इति प्रविभागज्ञः, तस्यैव तत् प्रविभागसंयमाद् योगिनः शर्वभूतरुतज्ञानं जायते इति योगसूत्रव्याख्यायां व्यासभाष्ये प्रोक्तम्। योगदर्शने भगवान् पतञ्जलिः—'अनित्याशुचिदुःखानात्मसुखात्मख्यातिरविद्या[१]' इति प्रोक्तवान्। अस्य सूत्रस्याभिप्रायस्तु—'अनित्यादिचतुष्टये क्रमेण नित्यत्वाद् बुद्धिरविद्यापदेनोच्यते। तथा हि—कालनिष्ठात्यन्ताभावप्रतियोगित्वरूपनित्यवती कार्यनित्यत्वज्ञानम्—ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौक्सः' इति। अशुचौ शुचित्वज्ञानं यथा—अपवित्रे परमत्रीभत्से कार्ये शुद्धमिदमिति प्रवृत्तिः। तदुक्तम्—

स्थानाद् बीजादुपष्टम्भात् निःस्यन्दान्निधनादपि।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचि विदुः ॥ इति।

अत्र श्लोके मातुरुदरं मलमूत्राद्युपहितं स्थानम्, पित्रोर्लोहितरेतसी बीजम्, असितपीताहाररसादिभाव उपष्टम्भः, निःस्यन्दः स्वेदः, निधनम् मरणम्। या भोगेष्विन्द्रियाणां तृप्तिरूपा शान्तिः तत्सुखम्, या लौल्यादनुपशान्तिस्तद्दुःखम्। न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम्। कस्मात्? भोगाभ्यासमनुविवर्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति। तस्मादनुपायः सुखस्य भोगाभ्यास इति। स खल्वयं वृश्चिकमीतइवाशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति। तदुक्तम्—

"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः[३]" इति।

आत्मन्यात्मख्यातिस्तु—"बाह्यदेशेऽहं बुद्धिः", 'अयमहम्' इति चेतनाचेतनेषु पुत्रधनादिषु ममताबुद्धिर्वा। एतत्कार्यमेव जगत्। 'अहं कर्त्ता' 'अहं भोक्ता' इत्याद्यभिमानस्यैव जगद्धेतुत्वात्। एतेन बौद्धार्थस्वीकारे योगदर्शनकाराणां सम्मतिर्लक्ष्यते।

**वेदान्तदर्शने हि बौद्धपदार्थो यथा—**

'मायामात्रं तु कार्त्स्न्येनाभिव्यक्तेः[४]' इति सूत्रं भगवता व्यासेन प्रणीतम्। अस्याशयस्तु—स्वप्रपञ्चस्य मायामात्रत्वं न तु वाह्यसर्गतुल्यत्वम्। यद्यपि जाग्रत्प्रपञ्चस्यापि 'तदनन्यत्वमारम्भणशब्दादिभ्यः[५]' इति सूत्रेण 'मायामात्रत्वमुक्तम्, तथापि प्राग्ब्रह्मादि दर्शनात् विषयादि ( आकाशादि ) प्रपञ्चो व्यवस्थितः। स्वाप्नस्तु प्रतिदिनं बाधित इति विशेषः[६], इति शाङ्करभाष्ये उक्तम्। तत्र प्रपञ्चस्यान्यवस्तुत्वाभावः। तथा हि—'वाचारम्भणविकारो नामधेयम्[७]' इति श्रुतिः। वाचैव केवलमारभ्यते, यश्च नाममात्रमेतद् न तु वास्तविकम्। अत एव कार्य-

---

१. यो० द०—२।५।
२. तत्रैव–२।१५।
३. तत्रैव–२।१५।
४. ब्र० सू०–३।२।३।
५. तत्रैव–२।१।१४।
६. तत्रैव–२।१।१४।
७. छा० उ०–६।१४।

कारणयोरभेदेऽपि कार्यस्यैव कारणात्मकता सिद्धयति, न तु कारणस्य कार्यात्मकता, तथाचोक्तम् 'न तु दृष्टान्तभावादिति[१]' अनेन ब्रह्मसूत्रेण कार्यस्य वस्तुत्वाभावः साधितः। मायामात्रमित्यत्र मात्रपदेन अनिर्वचनीयोत्पत्तिवादोऽपि निराकृतः। तस्मात् मायामात्रं स्वप्रदर्शनमिति, तदपि इष्टानिष्टसूचकं इत्येतत्सर्वं शाङ्करभाष्ये तत्रत्ये निरूपितमिति। अतोऽन्तःकरणपर्यन्तं नष्टवृत्तिकत्वाच्चक्षुरादीनि न सन्ति इत्युक्त्या विशिष्टज्ञानाध्यासस्तत्र दर्शितः। एतेन बौद्धमर्थसत्तावेदान्तिनयेऽपि प्रकारान्तरेण प्रस्फुटति।

एवमेव अनिर्वचनीयपदार्थः सदसद्भ्यां विलक्षणो मृगतृष्णासम्बन्धी जलादिरूपः। एवमेव हि ब्रह्मणि प्रपञ्चो मृदादौ घटादिः स्वाप्नश्च यदि उच्यते तर्हि तादृशानिर्वचनीयस्य प्रसिद्ध्या तद्भिन्नस्याप्रसिद्धया तद् भेदस्य वक्तुमशक्यत्वात्। अत्र च सदभिन्नत्वात् तस्य असत्वम्। असद्भिन्नत्वात्तस्य सत्त्वमापतति इत्युभयरूपत्वमेवायाति। तत्र सत्त्वमारोपितमितिभेदाभेद इव न तयोर्विरोधः। धर्मद्वयाक्रान्तस्य लोकव्यवहारेऽभावात्। इदमेव सांख्यदर्शनेऽनुमोदितमस्ति। तथा हि–'नासतः ख्यातिः नृशृङ्गवत्[२]' 'नानिर्वचनीयस्य ख्यातिः तदभावात्[३]', 'नान्यथाख्यातिः स्ववचो व्याघातात्[४]' इति। असतः ख्यातौ नरशृङ्गवत् शुक्तिरजतादेरपि भानं न स्यात्।

वाचस्पतिमिश्रास्तु—'मृगतृष्णाजलादिर्न सत्' नासत्, नापि सदसत् विरोधात्' इत्युक्तवन्तः। 'अनिर्वाच्यमेव मरीचिषु तोयमास्थेयम्। अध्यस्तं च तोयं परमार्थतोयमिव भासते। अत एव पूर्वदृष्टमिव तत्। तत्त्वतस्तु तत्तोयं न च पूर्वदृष्टम्, किन्तु अनृतमनिर्वाच्यम्। देहादिप्रपञ्चोऽप्यनिर्वाच्यः। अपूर्वोऽपि मिथ्या प्रत्ययोपदर्शित एव चिदात्मन्यध्यस्यते। चिदात्मा तु श्रुत्यादिगोचरः सत्वेनैव निर्वाच्य[५]' इति।

**योगवाशिष्ठे विष्णुपुराणादिषु च बौद्धपदार्थसत्तासाधनम्**—

योगवाशिष्ठे उपशमप्रकरणे राजर्षिगाधिं प्रति विष्णोरियमुक्तिर्बौद्धपदार्थसत्तां साधयति। तद्यथा—

बहिर्न किञ्चिदप्यस्ति खाद्यब्र्यूर्वी दिगादिकम्।<br>
एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवाङ्कुरे॥<br>
फलादिस्फारतामेति यथैव बहिरङ्कुरात्।<br>
बहिः प्रकटतां याति तथा पृथिव्यादिचेतसः॥

---

१. ब्र० सू०–२।१।९। २. सां० सू०–५।५५। ३. तत्रैव–५।५५।
४. तत्रैव–५।५५। ५ भामत्यां द्रष्टव्यम्।

सत्यं पृथिव्यादि चित्तस्थं न बहिस्थं कदाचनः ।
आबालमेतत्पुरुषैः सर्वैरेवानुभूयते ॥
स्वप्नभ्रममदावेशरागरोगादिदृष्टिषु[1] ॥ इत्याद्युक्तम् ।

अयंभावः—इह जगतीतले बाह्या दृश्यमाना आकाश-समुद्र-पृथवी-दिशश्चान्ये पदार्थाः सन्ति । तेषां वास्तविकी सत्यात्मिका च बाह्या स्थितिर्नास्ति । एतत्प्रपञ्चजालं चित्तस्य परिणामभूतं बहिर्भासते । एषां सत्यात्मिकास्थितिश्चित्तगता एवास्ति । यथा नवजातेऽस्फुटे बीजाङ्कुरे सूक्ष्मतया पत्र-पुष्पफलादीनां स्थितिः सन्निहिता भवति, ततश्च वृक्षस्य पत्र-पुष्प-फलादीनामाभासो बाह्ये स्फुटतया दृश्यते, तथैवान्तःकरणे सूक्ष्मतया स्थिताः पृथिव्यादयोऽन्तःकरणाद् बहिः प्रतिभासन्ते, प्रकटिताश्च भवन्ति । अत एव ते पदार्था वस्तुत चित्तस्था एव, तदंशा एव बाह्यरूपेण भासन्ते ।

एवञ्च बाह्येन्द्रियवृत्तेरभावेऽपि यदा मनोमात्रेणात्मनो भोक्तृत्वं तदा 'स्वप्नः' इत्युच्यते । तत्र स्वप्ने रथमहमद्राक्षम्' इत्यनुभूतिः । स्वप्नावस्थायां सर्वेन्दियाणां स्वस्वव्यापारविरतत्त्वादपि तत्रान्तः करणचेतनस्यैवानाद्यविद्यावशात् स्वरूपतिरोधाने बाह्यरूपेण भानम् । एवञ्च भ्रमावस्थायां रोगावस्थायाञ्च चित्तगतस्यैव प्रपञ्चस्य स्फुरणात् जगद्रूपं चित्तस्थं वर्तते, बाह्ये तदंशस्यैव भानम् । तथाचोक्तम्—

देवा मनुष्याः पशवः पक्षिमृगसरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥
ज्ञानस्वरूपमत्यन्तन्निर्मलं परमात्मनः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्[2] ॥ इति ।

अस्याभिप्रायस्तु—देवाः, मनुष्याः, पशवः, पक्षिणः, मृगाः, सर्पा अन्ये च शरीरधारिणः, स्थावरजङ्गमादयश्च भगवतोऽनन्तेश्वरस्य रूपाणि सन्ति । परन्त्वेषां रूपाणि ईश्वरात् विष्णोर्भिन्ना इव आभान्ति । किन्तु ज्ञानस्वरूपस्यात्यन्तनिर्मलस्य परमात्मनः बाह्येऽर्थस्वरूपेण स्थिताः पदार्थाः स्वरूपभूता एव सन्ति । एषां स्थितिः परमात्मनो भिन्ना नास्ति, अपितु तस्यैव स्वरूपाणि विश्वप्रपञ्चजातानि बहिरर्थस्वरूपेण भ्रमात्मनि दृश्यन्ते । एतेन विवेचनेन पदार्थानां बौद्धसत्ता सिद्ध्यति ।

एवञ्च भागवतमहापुराणे भविष्यपुराणे च भाविघटनानां पौनः पुन्येन प्रदर्शनात् बुद्धिस्थं त्रैकालिकं ज्ञानं भगवतो व्यासस्यानुभूयते । तथा च बौद्धपदार्थानङ्गीकारे महर्षीणां त्रैकालिकं ज्ञानं बाध्यते । न चैवं भवति । अतः पौराणिकदृष्ट्या बौद्धपदार्थंस्म सदा समर्थनमेव भवतीति दिक् ।

---

१. यो० वा०—५।४८-४९-५३ । २. विष्णुपु०—।

**नागेशोपाध्यायमते बौद्धपदार्थविचार :—**

यथा आन्तरः स्फोटो निर्विभागो वाचकः, एवं शक्यार्थोऽपि निर्विभाग आन्तर एवेति विचिन्त्य 'एवं शक्यार्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताऽऽविष्टः 'घटः' इत्यत एव सत्ताऽवगमेत 'घटोऽस्ति' इति प्रयोगे गतार्थत्वाद् 'अस्ति' इति प्रयोगानापत्तेः, सत्तया विरोधात् 'घटो नास्ति' इत्यनापत्तेश्च । मम तु बुद्धिसतो बाह्यसत्तातदभावबोधनाय 'अस्ति' 'नास्ति' इति प्रयोगः । किञ्च 'शशशृङ्गं नास्ति' 'अङ्कुरो जायते' इत्यतो बोधानापत्तिः । मम तु बुद्धिसन्नङ्कुरो बाह्यरूपेण जायत इत्यर्थः । सा सत्ताऽपि शब्दवाच्येति तद्भावः ।

किञ्च, 'इच्छादीनामन्तःकरणनिष्ठतया तत्र विषयस्य सामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्ताऽऽवश्यकी । यत्तु वैशेषिकाद्यनुसारिणो 'विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयः कारणम्' इति वदन्ति, तन्न, तदीयतादात्म्यस्य वृत्यनियामकतया सामानाधिकरण्यनिर्वाहकत्वात् । अतीतानागतस्थले सतोरेव सम्बन्धेनैवं सम्बन्धस्य वक्तुमशक्यत्वाच्च[1]' ।

अयम्भाव :—शक्यार्थोऽपि निर्विभाग आन्तरो भवति । स च प्रतिभारूपः । प्रतिभा च बुद्धिविषयतारूपा । बुद्धिसत्तासमाविष्टस्याशयस्तु बौद्धसत्तायुक्त एवेत्यर्थः । अत एव 'मतुप' सूत्रे भाष्ये—'न सत्तां पदार्थो व्यभिचरति' इत्युक्तम् । गतार्थत्वादित्यस्याशयस्तु—घटपदस्यैवोक्तभाष्यात् सत्ताविशिष्टघटार्थकत्वात् । न तु 'मतुप' सूत्रे 'अस्ति' इति पदं व्यर्थम्, सत्तासमाविष्टस्य प्रथमान्तार्थत्वादिति चेन्न, भूतभविष्यतोः 'गोमानासीत्' 'गोमान् भविता' इत्यादौ न बाह्यसत्ताऽस्ति, किन्तु, बुद्धिकल्पितैव । एवञ्च बुद्धिकल्पितसत्ताव्युदस्य बाह्यसत्तापरिग्रहार्थञ्च अस्तिग्रहणस्य सार्थक्यात् । आन्तरार्थस्यैव बाह्यसत्ताऽस्तीत्यनुरोधात् बाह्यसत्ताया अभावस्तदभावश्चेति द्वन्द्वः । तथा च बाह्यसत्ताया बाह्यसत्ताऽभावस्य च बोधनाय 'अस्ति' 'नास्ति' इति प्रयोग इति भावः । बाह्यार्थमात्रस्वीकर्तृ नये तु सत्ताविशिष्टस्यैव पदार्थत्वेन विरोधात् 'नास्ति' इति प्रयोगो न स्यात् । शब्दत एव सत्तायाः प्रतीतेः 'अस्ति' इति प्रयोगो न स्यादिति भावः । 'शशशृङ्गं नास्तीति बौद्धपदार्थस्वीकारादेव' शशशृङ्गं नास्ति इत्यत्राहार्यमेव प्रतियोगिज्ञानकारणम्, इत्युक्तं लीलावती शिरोमणौ । अन्यथा 'नीलं सरोजं भवत्येव' इत्यादौ नीलत्वायोगस्य सरोजेऽप्रसिद्धतयाऽप्रसिद्धप्रतियौगिकाभावस्य तार्किकैरस्वीकृतत्वादन्ययोगव्यवच्छेदरूपार्थस्यानन्वयापत्तिः । अङ्कुरो जायते इत्यनेन बुद्धिसत् शशशृङ्गं वहिर्नास्तीति बुद्धिस्थपदार्थं स्वीकर्तुराशय इति भावः ।

मूले अन्तःकरणे इच्छादीनां निष्ठतया तत्रैव विषयस्यापि समानाधिरण्येन

---

१. वै० सि० ल० म० बौद्धार्थनिरूपणे रत्नप्रभासंवलिते पृ० सं० २०३ ।

बौद्धपदार्थसत्तास्वीकर्तव्येत्युक्तिर्वेदान्तिमतेन संगच्छते। तन्मते हि इच्छादयो धर्माः स्वरूपसम्बन्धेनान्तःकरणनिष्ठास्तथा 'स्वरूपसम्बन्धेनेच्छाम्प्रति सामानाधिकरण्य-सम्बन्धेन विषयस्य कारणत्वम्' इति कार्य्यकारणभावो विषयस्य बुद्धिस्थत्वे एव सम्भवतीति भावः। एवमेव ज्ञानादीनाम्प्रति अपि विषयस्य कारणत्वं ज्ञेयम्। कार्य्यकारणयोः समानदेशत्वनियमादन्तः करणवर्ति सामग्र्या एव कार्योत्पादनं युक्तम्। किञ्च, सिद्धेःपाकादाविच्छाविरहादसिद्धस्यैव पाकादेरिच्छाम्प्रति कारण-त्वं वाच्यम्, तादृशस्य च पाकादेर्बुद्धिस्थत्वं स्वीकृत्य बुद्धावेव हेतुहेतुमतोः समाना-धिकरण्यमुपपादनीयम्। अन्यथा असिद्धस्य पाकादेर्बहिर्देशस्थत्वाभावात् तस्य कारणत्त्वं शशशृङ्गायमाणमेव स्यादिति बौद्धपदार्थस्तार्किकैरपि स्वीकार्य्यः।

यत्तु तार्किकाः 'विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयः कारणमि' त्यामनन्ति तन्न युक्तम्। 'विषयतासम्बन्धेन चाक्षुषम्प्रति समवायसम्बन्धेन चक्षुः संयोगः कारणम्'। एवञ्च घटचक्षुसंयोगदशायां पटस्यापि चाक्षुषत्वापत्तिरिति विषयाणामपि तादात्म्येन हेतुत्वमावश्यकम्। न च विषयघटितचक्षुः संयोगस्य कारणत्वेनैवातिप्रसङ्वारणे विषयस्य कारणत्वकल्पनमनावश्यकमिति वाच्यम्, विषयभेदेनानन्तकार्य्यकारणभावापत्तेः।

वस्तुतस्तु–'विशिष्टबुद्धौ विशेषणादिज्ञानस्य कारणत्वम्, इत्यप्रकल्प्य व्यक्तिवृत्तिविषयतासम्बन्धेनेश्वरज्ञानसाधारणज्ञानत्वेन हेतुत्वं कल्प्यते, अन्यथा घटत्वादिप्रत्यक्षस्थले घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपघटत्वत्वादिना विशेषणज्ञानस्य हेतुत्वकल्पने गौरवं स्यादिति बोध्यम्।

नैयायिकैः स्वस्मिन्नेव स्वतादात्म्यमभ्युपगम्यते। तादात्म्यस्य वृत्तिनियाम-कत्वे हि 'घटो घटवान्' इति स्यात्। अतिप्रसङ्गवारणाय कार्य्यकारणयोः समानाधिकरण्यमपेक्षितम्। तथा च विषयतासम्बन्धेन ज्ञानं विषये तिष्ठति इति कार्याधिकरणवृत्त्यधिकरणतानिरूपितकारणताऽवच्छेदकसम्बन्धावच्छिन्नाधेयताव-त्वमेव कारणे सामानाधिकरण्यं वाच्यम्, तच्च तादात्म्येन कारणत्वेऽसम्भवि, तादात्म्यस्याधेयताऽनवच्छेदकत्वादिति भावः।

एवं घटसामग्र्या अप्यवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषण-तया देशविशेषे सामानाधिकरण्यं द्रष्टव्यम्। 'शिरसि मे वेदना' 'अत्र घटः' इत्यादिव्यवहारादाधारतानियामकत्वम्। 'अवच्छेदकत्वं सप्तम्यर्थः' इति तु चिन्त्यमेव, अनुशासनाभावात्, सुब्विधौ लक्षणाभावस्य भवदीयसम्मतत्वाच्च। द्रव्यरूपादीनामपि द्रव्यदेश एव देश इति बोध्यम्। भ्रमेऽधिष्ठानत्वमपि बौद्धस्यैव न वाह्यस्येति सर्वं समञ्जसम्'[1] इति।

---

१. वै० सि० ल० म० बौ० नि०; रत्नप्रभा० टी०—पृ० सं० २०४।

मूलस्याशयस्तु-ननु एवं समवायेन घटम्प्रति तादात्म्येन कपालं कारणम्, तथा च तादात्म्यस्याधारतानियामकत्वाभावेन कार्य्यकारणयोः सामानाधिकरण्यासम्भव इति विचिन्त्याह—घटसामग्र्य इत्यादि। दैशिकविशेषणतया च दैशिकस्वरूपसम्बन्धेनेत्यवगन्तव्यम्। यथा च अवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतया कपालमपि कपाले वर्तत इति कार्य्यकारणयोः सामानाधिकरण्यं सुलभम्। एतेन समवायेन कार्य्यम्प्रति अवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतासम्बन्धेनैव द्रव्यस्य कारणत्वं न तु तादात्म्येनेति। ननूक्तसम्बन्धस्यापि आधारतानियामकत्वे मानाभावोऽत आह—शिरसि मे वेदनेति, यतो हि—पदार्थनिर्णये लोकव्यवहारस्यैव प्रामाणिकत्वात्। अत एतेन व्याख्यानेनावच्छेदकतासम्बन्धोऽत्र सामानाधिकरण्यनियामक इति निरस्तम्। वस्तुतस्तु मतमिदं मीमांसकसम्मतम्, न तार्किकाभिमतमिदमिति तदीयसम्मतिश्चिन्त्या।

समवायेन रूपादिकम्प्रति द्रव्यस्य कारणत्वे सामानाधिकरण्यानुपपत्तिर्न स्यादित्यर्थमेव द्रव्यस्यापि द्रव्ये सत्त्वं स्वीकृतम्। युक्त्यन्तरत्वेन 'भ्रमेऽधिष्ठानत्वमपि बौद्धस्यैवे'ति ग्रन्थकारेण महामतिना नागेशोपाध्यायेन लिखितम्। दृश्यते एवं शुक्तौ रजतभ्रान्तिः। तत्र शुक्तौ भ्रमत्वप्रयोजकस्य रजतस्य ज्ञानं बौद्धशुक्त्यादेरेवेति ज्ञेयम्। बौद्धपदार्थस्य सत्तासत्वादेव 'अङ्गदी कुण्डली व्यूढोरस्को कृतबाहुरीदृशो देवदत्तः' इति वाक्ये 'ईदृशः' इति सामर्थ्यात् कुण्डल्यादिपदैर्बौद्धदेवदत्तस्याभिधानादीदृशपदघटकेदं शब्देन तस्य परामर्शात् 'अयं देवदत्तः' इति वाक्येन पूर्वं ज्ञातस्य देवदत्तस्यानेकव्यक्तिषु निर्देशेनायं देवदत्त इति बाह्यस्यान्तरत्वेन भेदात् बौद्धार्थसत्ताऽस्तीति।

बौद्धार्थसत्ताऽस्तीत्यत्र भगवतः पाणिनेरपि सम्मतिरिति प्रतिपादयन्नाह मञ्जूषायां भट्टनागेशेन—"हेतुमति च" (पा० सू० ३-१-२६) इति सूत्रे, 'पङ्क्तिविंशतिः' (पा० सू० ५।१।५९) इति सूत्रे, 'मतुपसूत्रे' (पा० सू० ५-२-९४) च भाष्यकैयटयोः स्पष्टमिदम्'[1]।

तत्र हि भाष्ये कैयटे उद्द्योते च यथा 'हेतुमति चे'ति भाष्ये 'इह कथं वर्तमानकालता 'कंसं घातयति' 'बलिं बन्धयति' इति। चिरहते च कंसे चिरबद्धे च बलौ ? अत्रापि युक्त्यैव। कथम् ? ये तावदेते शौभिका नाम, चित्रेष्वप्युद्गूर्णनिपतिताश्च प्रहारा दृश्यन्ते कंसस्य च कृष्णस्य च। ग्रन्थिकेषु कथम्, यत्र शब्दग्रथनमात्रं लक्ष्यते ? तेऽपि हि तेषामुत्पत्तिप्रभृत्यविनाशात् तद्वृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति'[2] इत्युक्तम्। अत्रत्यभाष्योद्द्योते च—चिरहत इति वध्यघातकभावस्यातीतकालिकत्वात् प्रयोजकव्यापारस्य वर्तमानत्वासम्भवः।

---

१. वै० सि० ल० म० रत्नप्रभा०—पृ० सं० २०४। २. महाभाष्ये ३।१।२७।

'आख्यानात् कृतस्तदाचष्टे' इत्युपसङ्ख्यानारम्भे तु न दोषः, आख्यानस्य वर्तमानत्वात्। शौभिका इति–कंसाद्यनुसारिणां नटानां व्याख्यानादित्यर्थः। कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या गृहीतः कंसो भाष्ये विवक्षितः। ग्रन्थिकेष्विति–कथकेष्वित्यर्थः। तेऽपीति–तदुक्तं हरिणा—

शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते[1]॥ इति।

ननु 'चिरहते च कंसे' इत्युक्त्या प्रयोजकव्यापारस्य वर्तमानकालत्वाभावेनोक्त इति 'कथं वर्तमानकालतां ? इति प्रश्नासङ्गतिरत आह– चिरहते इति कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्त्वेन तत्प्रयोजकव्यापारस्यापि चिरप्रवृत्तत्त्वमेवेति भावः। कंसाद्यनुसारिणां—कंसादिसदृशानाम्। भाष्ये प्रत्यक्षमिति—तादृशेनैव—वासुदेवेनैव। उद्गूर्णाः– उद्यताः। 'गुरी उद्यमने' इत्यतो निष्ठायां रूपम्। एवञ्च चित्रकारा अपि चित्रस्थं कंसं तादृशत्वेनैव ( कृष्णत्वेनैव ) घातयन्ति। ग्रन्थिक इति--ग्रन्थशब्दात् 'अत इनि ठनौं' ( पा० सू० ५।२।११५ ) इति साधुः। शब्दः कथं केनोच्चार्यमाणः। ग्रन्थः—तद्धस्तस्थपुस्तकरूपः। गडः–मनुष्यसंघातः। न तेषु कश्चिदपि कंसादिबुद्धिविषयः। तेऽपि–ग्रन्थिका अपि। तद्धिः–तदैश्वर्याणि। तानि कथयन्तो ग्रन्थिकाः स्वबुद्धिविषययान् सतः—विद्यमानान् कंसादीन प्रकाशयन्ति श्रोतृबुद्धौ समर्पयन्तीत्यर्थः[2]' इति।

'पङ्क्तिविंशतिः' सूत्रस्थभाष्यप्रदीपे च–तत्र भाष्ये–'ननु चोक्तं विंशत्यादयो दशदर्थे चेत् समासवचनानुपपत्तिः। परिणामिनि चेत्, पुनः स्वार्थे प्रत्ययविधानम्, षष्ठीवचनविधिश्चेति। नैष दोषः, समुदाये विंशत्यादयो भविष्यन्ति। किं वक्तव्यमेतत् ? न हि। कथमनुच्यमानं गंस्यते ? सङ्घ इति वर्तते। सङ्घः, समूहः, समुदाय इत्यर्थान्तरम्'[3] इत्युक्तम्।

अत्रत्यभाष्यप्रदीपे कैयटेन च—'अस्त्येत्यनुवृत्या परिमाणमात्रे प्रत्ययलाभो न तु तद्विशेष इत्याह किमिति। वर्तत इति पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि 'सङ्घ' शब्दस्यैव स्वरितत्वादिहानुवृत्तिः। ननु प्राणिसमूहः सङ्घ इति वृक्षाणां विंशतिरिति न प्राप्नोतीत्याह सङ्घः समूह इति–सामान्येन प्राणिनामप्राणिनाञ्च समुदायः सङ्घ इत्यर्थः। ननु चोक्तं परिणामिनि चेत् 'पुनः स्वार्थे प्रत्ययविधानमिति। नैष दोषः, द्रव्यसङ्घयोर्दशतोः सङ्घे प्रत्ययो निपात्यते। ननु द्रव्यसङ्घे इह द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च पारमार्थिको भेदो नास्ति, केवलं

---

१. वाक्यपदीये —२।७।५। २. महाभा० उद्द्योते—३।१।२६।
३. महाभा०—५।१।५९।

बुद्ध्या परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवभेदे भेदमवगमयन्ति'[१] इत्युक्तम् ।

मतुपसूत्रे च महाभाष्ये—"अथास्ति ग्रहणं किमर्थम् ? सत्तायां प्रत्ययो यथा स्यात्, नैतदस्ति प्रयोजनम्, न सत्तां पदार्थो व्यभिचरति । इदं तर्हि प्रयोजनं सम्प्रति सत्तायां यथा स्यात् । भूतभविष्यत्सत्तायां मा भूद्गावोऽस्यासन् गावोऽस्य भवितारः[२]" इति प्रतिपादितम् ।

अत्रत्यभाष्यकैयटे-अथास्तिग्रहणमिति-सम्भवे व्यभिचारे च विशेषणविशेष्यभावो भविष्यति यथा "नीलोत्पलम्" इति । सत्तां तु पदार्थो न व्यभिचरति, तामन्तरेण पदोच्चारणासम्भवात्, तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्नः । सत्तायां प्रत्ययो यथा स्यादिति-सत्तायां वर्तमानात् सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः । न सत्तामिति-यावद् बुद्धचा पदार्थो न विषयीकृतस्तावत् पदस्य प्रयोगाभावस्तस्माद् बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बध्यते 'वृक्षोऽस्ति', 'वृक्षो नास्ति', 'वृक्षो जायते' इति । अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः । तस्माद् बुद्धचारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचार इत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतया भासते । यदि वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तुवाच्यं स्यात्तदा 'वृक्षः' इत्यतः सत्ताऽवगमाद् 'अस्ति' इत्यस्य गतार्थत्वात्प्रयोगो न स्यात् । 'नास्ति' इत्यस्य च सत्ताविरोधात्प्रयोगाप्रसङ्गः, 'अङ्कुरो जायते' इति च प्रयोगो न स्यात्[३]' इत्युक्तम् ।

कैयटोक्तस्याशयस्तु-सम्भवे इति-तामन्तरेणार्थबोधाय पदोच्चारणासम्भवात् । तस्या एव—बुद्धिसत्ताया एव, प्रवृत्तौ-प्रयोगे । ननु न सत्ताप्रकृत्यर्थ इति 'सत्तायां वर्तमानाद्' इत्ययुक्तमतस्तदर्थमाह-सत्तोपाधिकादिति-प्रकृतेस्तदर्थवृत्ताविति भावः । ननु वर्तमानार्थशत्रन्तप्रकृतिसत्तापदार्थो न भूतभविष्यतोरिति कथं पदार्थस्तान्न व्यभिचरतीत्यत आह यावदिति, सम्बध्यते 'बहिः सत्त्वासत्त्वादिप्रतिपादनाय' इति शेषः । नन्वत्यन्तासतः शशविषाणादीन् सत्तामभिचरतीत्यत आह—अत्यन्तेति । उपेति-बौद्धसत्ताया एव मुख्यत्वात् । ननु तस्या न शाब्दजबोधविषयत्वं तद्विशिष्टस्य नयनाद्यसम्भवादत आह—सैवत्विति-बहिः सत्तासत्त्वे तु तत्समानाधिकरणतया, असत्त्वे तु केवलायास्तस्या एव बहीरूपत्वेन भानम् । अत एव घटशून्यादपि गृहाद् 'घटमानय' इत्युक्तेर्घटानयने प्रवृत्तिर्दृश्यते । पश्चात्तदभावनिर्णये तु वक्तृज्ञानस्याप्रमात्वं बोध्यते । अन्तःकरणस्य रागादिदोषवशेन तस्या

१. महाभा० प्रदीपे—५।१।५९ । २. महाभा०—५।२।९४ ।
३. तत्रैव कैयटे—५।२।९४ ।

एव तत्त्वेन भानमिति तात्पर्यम् । बाह्यसत्ताया एव प्रयोगनियामकत्वे दोषमाह—यदित्विति—"सूक्ष्मरूपेण स्थितस्यैव स्थूलरूपापत्तिर्जन्म" इति मतेऽपि 'अङ्कुर' पदोपात्तास्थूलरूपावच्छिन्नस्य सत एव जन्मेति भावः । नन्वेवं बुद्धिसत्तायाः सर्वत्र भाने 'अस्ति' इत्यस्य प्रयोगो न स्यादत आह—बुद्धीति-तया च बाह्यसत्त्वाभावस्य जननस्य चाविरोधादिति भावः । एवं ह्यत्र कैयटोक्तिः समञ्जिता भवति ।

तार्किकैरपि बौद्धार्थसत्तास्वीकार्यमेवेति विचिन्त्य उक्तवान् नागेशभट्टः । तथा हि "गौतमोऽप्यसत एवोत्पत्तिकर्तृत्वं कथम् ? इत्याशङ्क्य सूत्रितवान् 'बुद्धिसिद्धं तु तदसत्' ( न्या० द० ४-१-५० ) इति । तत्कार्यमुत्पत्तेः प्राङ्नाशोत्तरं चासदपि बुद्धिविषयतया ( तु ) सिद्धमिति तदर्थः[1]" ।

न्यायदर्शनस्यायमंशो नागोजिभट्टेन यतो गृहीतन्तत्र पूर्वसूत्रेषु—'नासत्, न सत् न तदसत् सदसते । वैषम्यात्[2], इत्युक्तम् । अस्य सूत्रस्यार्थस्तु—उत्पत्तेः प्राक्कार्यं नासत्, असतः उत्पत्तेरसम्भवात् । अन्यथा शशविषाणादिरप्युत्पद्येत । स्याच्च सिकतादावपि तैलम् । न च सत्, सतोऽप्युत्पत्तेरसम्भवात्, पुनरप्युत्पादप्रसङ्गाच्च, न तदसत् सदसतोऽसाधर्म्यात् सत्वासत्त्वयोः सामानाधिकरण्यासम्भवात् । ततः सिद्धान्तितम्—उत्पत्तिधर्मकं प्रागुत्पत्तेरसत् । कस्मात् ? इति हेत्वाकाङ्क्षायाम्—"उत्पादव्ययदर्शनात्[3]" इति । कार्यस्योत्पादो विनाशश्च दृश्यते, तेनोत्पत्तेः प्रागसत्त्वं सिद्धम् । ननु असतः उत्पत्तावनियमप्रसङ्ग इत्याशङ्क्य 'बुद्धिसिद्धन्तु तदसत्[4]' इति । अस्य सूत्रस्थार्थः उपरि एव मूलनिरूपणप्रसङ्गे दर्शितः । अतो नागोजिभट्टाः नैयायिकानामपि बौद्धार्थसत्तास्वीकृता एवेति साधितवन्तः ।

बौद्धार्थसत्तावेदान्तिसम्मता इति भट्टनागेशेनेदं व्यवस्थापयतोक्तम् 'जन्मादि' सूत्रे ( वे० सू० १।१।२ ) वाचस्पतिरप्याह चेतनो हि नामरूपे बुद्धावालिख्य 'घट' इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति । निर्वर्त्यस्यापि घटस्यान्तः सङ्कल्पात्मना सिद्धस्य कर्मकारकत्वम् 'घटं करोति' इत्यादौ[5]" ।

वेदान्तसूत्रन्तु 'जन्माद्यस्य यतः[6]' इति । सूत्रार्थस्तु अस्य दृश्यस्य प्रपञ्चस्य जन्मादि-जन्मस्थितिनाशा यतः यस्माद्येन यस्मिंश्च जायते तद् ब्रह्मेत्यर्थः । अत्र सूत्रे 'यतः' इति सर्वविभक्त्यन्ततसन्तस्य तन्त्रेण निर्देशः । तथा हि श्रुतिः—'यतो वा इमानि भूतानि जायन्ते, येन यातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति विजिज्ञासस्व तद् ब्रह्म[7]' इति । तथाचैतत्प्रकरणमालक्ष्यैव वेदान्तपरिभाषायां विषय-

---

१. वै० सि० ल० म० बौ० नि० पृ० सं०—२०४ ।
२. न्यायदर्शने—४।१।४८ ।
३. तत्रैव—४।१।४९ ।
४. तत्रैव—४।१।५० ।
५. वै० सि० ल० म० बौ० नि० पृ० सं०—२११ ।
६. वे० सू०—१।१।२ ।
७. तैत्ति० उपनि०—३।१।

परिच्छेदे धर्मराजाध्वरीन्द्राः प्राहुः—'तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्च-वैचित्र्यहेतुप्राणिकर्मसहकृतोऽपरिमितानिरूपितशक्तिविशेषविशिष्टो मायासहितः सन्नामरूपात्मकनिखिलप्रपञ्चं प्रथमं बुद्धावाकलय्येदं करिष्यामिति सङ्कल्पयति 'तदैक्षत बहुस्यां प्रजायेय' ( छा० ६।२।३ ) इति, 'सोऽकामयत बहुस्यां प्रजायेय' ( तै० २।६ ) इत्यादि श्रुतेः[१] । अतो नागेशोक्तं बुद्धिसत्तासाम्राज्यं वेदान्तिनो यथावदेवामनन्ति ।

आन्तरस्यैव बाह्यरूपेण भानं भवतीत्यनुमानादिस्थलेऽप्येवमेव दृश्यते । यथा यत्र यत्र धूमस्तत्रतत्र वह्निरिति व्याप्तौ धूमाद्याकारा या अन्तःकरणवृत्ति-स्तत्प्रतिबिम्बनमेव धूमादिव्याप्यज्ञानम् । तज्ज्ञानप्रयोज्यव्यापकबाह्याकारप्रति-बिम्बनं वह्न्यनुमितिः । एवं शब्दाकारा या अन्तःकरणवृत्तिस्तत्र यच्चैतन्य-प्रतिबिम्बनं तदेव 'शब्दज्ञानम्' इत्युच्यते । तत्प्रयोज्या या बौद्धशब्दार्थाकारा अन्तःकरणवृत्तिस्तत्र प्रतिबिम्बनमेव शब्दार्थज्ञानं शाब्दबोध इति । तदुक्तन्नागोजि-भट्टेन—

"एवं व्याप्याकारवृत्तिप्रतिबिम्बरूपव्याप्यज्ञानोत्तरं शब्दाकारवृत्तिप्रति-बिम्बरूपशब्दज्ञानोत्तरं च जायमानं बौद्धव्यापकशब्दार्थरूपतत्तदर्थाकारवृत्तिप्रति-बिम्बनमेवानुमितिः शाब्दबोधश्च । शशशृङ्गाद्यलीकादिशब्दानां प्रातिपदिकत्व-सिद्धिरपि बौद्धार्थवत्त्वेनैवोपपद्यते[२]" इति ।

शशशृङ्गाद्यलीकपदार्थानां बाह्यसत्ताऽभावेपि शशशृङ्गादिशब्दाद् बोध-दर्शनाद्दान्तरबौद्धसत्ता अवश्यं स्वीकर्तव्या । एतदर्थं मञ्जूषायां वाक्यपदीयस्य प्रमाणान्यप्युपस्थापितानि । तानि च—

यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः ।
स बाह्यं वस्त्विवति ज्ञातः शब्दार्थः सम्यगिष्यते[३] ।। इति

एवञ्च—

शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ।।

बुद्धिप्रवृत्तिरूपं च समारोप्याभिधातृभिः ।
अर्थेषु शक्तिभेदानां क्रियते परिकल्पना[४] ।। इति च ।

इत्येवं रूपेण महाविदुषा भट्टनागेशेन सत्तर्कैराचार्याणां वचनप्रमाणैः स्वानु-भवप्रकाशनैश्च बौद्धार्थ एवार्थो बहिः समुल्लसतीति साधितम् ।

---

१. वेदान्तपरिभाषायां विषयपरिच्छेदे० पृ०—१६९-१७० ।
२. वै० सि० ल० म० बौ० नि० पृ० सं०—३१६ ।
३. वाक्य०—२।१३४ । ४. तत्रैव—३।७।५-६ ।

## तन्त्रागमदृष्ट्या बौद्धार्थपदार्थविवेचनम्

तुर्यतदतीतदशयोर्यः परः साक्षात्कारः स एव वस्तुतो मुख्यतया आ समन्तादर्थं शिवादिधरण्यन्ततत्त्वजातं गमयति पारमार्थिकस्वरूपतस्तथाविधस्वभावतश्च बोधयति साक्षात्कारयतीत्यागमोऽन्वर्थनामा। किञ्चागमशब्देऽक्षरत्रयस्य 'आगतं' 'गतं' 'मतं' इत्यस्य सन्निवेशो दृश्यते। अत आ समन्ताद् गमयति अभेदेन शिवादिधरण्यन्तं पारमेशं स्वरूपं विमृशति इत्यागमशब्देन परशक्तेरेव ग्रहणात् परशक्तिरेवागम इति। स चागमो ज्ञानरूपोऽनन्तशास्त्रेषु व्यवहृतो भवति। तस्मादुक्तम्--

आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः।
शास्त्रं शब्दात्मकं सर्वम्..........[1]॥ इति।

स चागमो भगवतो महेश्वरस्येशानतत्पुरुषाघोरवामदेवसद्योजातात्मकस्य पञ्चमुखस्य प्रभावादेवोदेति। निखिलशास्त्रनिष्णाताद् गुरोः शम्भुनाथस्य मुखादागमज्ञानं परम्परातः प्रस्फुटति। तस्मादत्र शास्त्रे सूक्तिरियं सर्वत्र सिद्धान्तरूपेणोल्लसति—

आगतं शिववक्त्रेभ्यो गतं च गिरिजानने।
मतं हि वासुदेवस्य तस्मादागम उच्यते[2]॥

महामतिना भर्तृहरिणाऽप्यागमस्य ज्ञानात्मकत्वं स्फुटं स्वीकृतम्। यथा—

चैतन्यमिव यश्चायमविच्छेदेन वर्तते।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते[3]॥ इति।

अतः प्रत्यक्षेणाकलितमपि वस्त्वागमप्रामाण्यादेव प्रामाण्यमादधाति। अतस्तुर्यतदतीतदशयोर्यः परः साक्षात्कारः स एव वस्तुतो मुख्यतया शिवमारभ्य धरण्यन्तं विमृशति। स एवागमस्तदेव बौद्धपदार्थ इति पदेनापि बोध्यः। तदुक्तं तन्त्रग्रन्थेषु—

चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद् बहिः।
योगीव निरुपादानमर्थजातं प्रकाशते[4]॥ इति।

शब्दानां मूलं परा पराम्बा, अर्थानाञ्च मूलं परमेश्वरः शिवः। इममेव सिद्धान्तं 'वागर्थाविव सम्पृक्तौ......पार्वतीपरमेश्वरौ'[5] इति पदेन कविकुलगुरुः कालिदासोऽपि मनुते।

आगमस्यैवापरसंज्ञा तन्त्रं नाम। तदीदृशेन निर्विकल्पकसाक्षात्कारेण

---

१. स्वच्छन्दतन्त्रे—४।३४। २. रुद्रयामलवचनम्। ३. वाक्य०—१।४१।
४. ई० प्र० वचनम्—१।५।७। ५. र० म०—१।१।

यत्साक्षात्कृतं तत्तु विकल्पात्मकैर्मध्यमावैखरीमयैः शब्देर्नैव यथार्थतया वक्तुं शक्यते ।

तत्रागमतन्त्रनाम्नि स्वतन्त्रशिवाद्वयदर्शने परमेश्वरः स्वतन्त्रश्चिद्घनसंवित्स्वभावः स्वया स्वातन्त्र्याख्यया शक्त्या सततं शिवादिधरण्यन्ततत्तद्भुवनभूततत्वात्मना कीडनादिशीलत्वात् कृत्यपञ्चकविधायी। वस्तुतः क्रमराहित्येऽपि विश्वसृष्टौ आभासनमात्रसारेण पारमार्थिककार्यकारणभावेन क्रममपि उद्भावयन् अनाख्यत्वेऽपि स्वेच्छयैव स्वात्मभित्तौ तच्छिवादितत्त्वाभिख्याम् आभासयति। तथात्वेऽपि षट्त्रिंशतत्त्वमयकुलस्वरूपपरामर्शनात् आखण्डचेन विश्वभरितां स्वचमत्कारविमर्शसारामनुत्तरानन्दघनावस्थां नोज्झति। तथा च षट्त्रिंशतत्त्वानि, चतुर्दशभुवनात्मकानि ब्रह्माण्डानि, निवृत्यादयः पञ्चकलाः, अकलादिसकलान्ताः सप्तकोटिभाजः प्रमातारः, तुर्यातीतादिजाग्रदन्ताः पञ्चावस्थाः, प्राणादिव्यानान्ताः पञ्चप्राणाः, मन्त्राद्याः षडध्वान इत्येवं प्रकारेण सर्वमपि तस्मिन् परिपूर्णकर्तृज्ञातृस्वरूपे परमेश्वरे वर्तते। न चेत्तत्र नैव वर्तेत, तर्हि तदिच्छयापि कथं बहिः सृष्टिकाले विसर्ज्येत। यदेव यस्यान्तस्तिष्ठति तदेव तस्मात् बहिरागच्छेत्। अन्तर्बहीरूपताया वक्तुमशक्यत्वात्। ततोऽत्र शास्त्रेऽहमात्मकप्रमात्रैकरूपत्वमान्तरत्वमिदमात्मकप्रमेयरूपत्वं च बहिष्ट्वम्। उक्तञ्च—

प्रमात्रैकात्म्यमान्तर्यं ततो भेदो हि बाह्यता[1] ॥ इति ।

दृश्यते हि जगति—यथा बीजे वृक्षो बीजरूपतया, दध्नि च नवनीतं दधिरूपतया, मृदि च पत्रपुष्पफलादीनि मृन्मयतया तिष्ठन्ति, तथैव परिपूर्णाहिमात्मनि परमेश्वरे सर्वमपि सदैव शुद्धपरिपूर्णाहंरूपतयैव तिष्ठति। एषा एव शुद्धाहन्तया विमर्शक्रिया प्रादुर्भवति। उक्तञ्च—

निर्मले मुकुरे यद्वद्भान्ति भूमिजलादयः।
अमिश्रास्तद्वदेकस्मिंश्चिन्नाथे विश्ववृत्तयः[2] ॥

इयञ्च स्वस्वभावाभिव्यक्त्युन्मुखी परमेश्वरतामयी दिव्यातिदिव्या भेदनिष्ठा च कापि सुविचित्राश्चर्यमयीच्छा। इयमेव परमेश्वररूपस्य शिवस्य शक्तिः। अस्या इच्छाशक्तेरेव कारणात् विश्वस्य सृष्टिः सम्भवति। इयमेव तन्त्रशास्त्रे कामकला कामेश्वरीसृष्टिमूलकारणभूता सिसृक्षात्मिका कलेत्यभिधीयते।

## मातृकाया बौद्धार्थे उपयोगः

मातृकैव विश्वनिर्मात्री, स्वतन्त्रा, अलुप्तप्रभावा क्रियाशक्तिरस्ति। सैव घोषरावस्वनशब्दस्फोटध्वनिझङ्कारध्वङ्कृतिप्रभृतिभिरष्टप्रकारकैः शब्दैरभि-

---

१. ईश्वरप्रत्यभिज्ञायायां—१।८।८। २. श्रीतन्त्रालोके—२।४।

व्याप्ता अकारमारभ्य क्षकारान्तपञ्चाशद्वर्णभट्टारकरूपतया समस्तमन्त्रादिमय-शुद्धाशुद्धजगज्जननी अज्ञाता माता मातृका परमेश्वरी क्रियाशक्तिः। एषैव च अक्रमा अपि समस्तवाच्यवाचकात्मवाङ्मयाभासरूपतया सक्रमा क्रियोच्यते। तदुक्तं श्रीनेत्रतन्त्रे —

यदा स्वतन्त्रा लुप्ता सा क्रियाकरणरूपिणी।
वर्णरूपाष्टभेदेन स्फोटादिध्वनिरूपिणी॥

मातृका सा विनिर्दिष्टा क्रियाशक्तिर्महेश्वरी।
क्रियाख्या परमा सा तु सर्ववाङ्मयरूपिणी[1] ॥ इत्यादयः।

मातृका शक्तिरेव परभेदप्रथात्मकापरभेदप्रथात्मकज्ञानयोराधारभूता सती सततं राजते[2]। अकारादिक्षकारान्तवर्णसमाम्नायेनोत्पन्ना ब्राह्मीप्रभृतिशक्तयः पुरुषस्योपभोगं साधयन्ति[3]। सम्पूर्णा हि मन्त्रा वर्णात्मका, वर्णानि हि शक्तेः पुञ्जानि। शक्तिरपि मातृकाभिरभिन्ना, सा च शिवेनाभिन्ना। परतेजसा समन्वितेयं मातृकाशक्तिः समस्तेदं स्थूलसूक्ष्मं जगद्व्याप्य तिष्ठति[4]। अतो देशिकेन्द्र-दुर्वाससोक्तं वचनमिदं संगच्छते—

पञ्चाशन्निजदेहजाक्षरमयैर्नानाविधैर्धातुभि-
र्बह्वर्थैः पदवाक्यमानजनकैरर्थाविना भावितैः।
साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं,
विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके[5] ॥ इति।

'स्फुरणया' अन्वितं ज्ञानमेव प्रकाशनाम ब्रह्म। इदं हि सर्वज्ञत्वसर्वेश्वर-त्वादिशक्तिभिः सदा युज्यते। अस्यानन्दरूपांशे स्फुरणमेव पराहन्ता-विमर्श-

---

१. नेत्रत०—२१।३७, ३८।

२. 'ज्ञानाधिष्ठानं मातृका'—शिवसूत्रम्—प्रथमप्रकाशः।
ज्ञानस्यैव द्विरूपस्य परापरविभेदतः।
स्यादधिष्ठानमाधारः शक्तिरेकैव मातृका ॥ २३ ॥ शिवसूत्रवार्तिकम्।

३. शिवसूत्रविमर्शिनी पृ० १६।

४. सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका॥
या सा तु मातृका देवी परतेजः समन्विता।
तया व्याप्तमिदं विश्वं स ब्रह्म भुवनान्तकम्॥
(श्रीतन्त्रसद्भावववचनम्, शिवसूत्रविमर्शिन्यामुक्तम् पृ० ५१)

५. श्रीत्रिपुरसुन्दरीमहिम्नस्तोत्रे—२७।

परा-ललिताभट्टारिका-त्रिपुरसुन्दरीप्रभृतिनामभिरुल्लाप्यं भवति। वटबीजे तस्य सूक्ष्मरूपस्य सदृशं शब्दसृष्टेः सूक्ष्मरूपधारिण्या उक्तायास्त्रिपुरसुन्दर्या एव परा-वाणीतिपदेन व्यवहारः। इमामेव निर्माण-तरण-शब्दविधानात्मकगुणैर्मातृकेति पदेन व्यवहरन्ति तत्राचार्या भास्कररायाः। तथा हि—

'स्फुरणान्वयि ज्ञानमेव प्रकाशाभिधं ब्रह्म। तच्च सर्वज्ञत्वसर्वेश्वरत्वसर्व-कर्तृत्वपूर्णत्वव्यापकत्वादिशक्तिसंवलितम्। तस्य चानन्दरूपांश एव स्फुरणम्, परा-हन्ता, विमर्शः, पराललिताभट्टारिका, त्रिपुरसुन्दरीत्यादिपदैर्व्यवह्रियते[1]'।

एवञ्च — 'वटबीजान्तर्गतवटवृक्षीयसूक्ष्मरूपतुल्यशब्दसृष्टिसूक्ष्मरूपशालिनी पूर्वोक्तरूपा त्रिपुरसुन्दर्यैव तादृशसूक्ष्मरूपवत्त्वप्रवृत्तिनिमित्तकपरापदवाच्या। सैव च माति तरति कायतीति व्युत्पत्त्या मातृकेत्युच्यते[2]' इति।

आचार्याभिनवगुप्तपादाश्च सिद्धयोगीश्वरीमतानुसारेणानन्दात्मिकां विसर्ग-शक्तिमेव शब्दराशिरथवा मातृकेति पदेन व्यवहरन्ति। अत्र प्रकाशतत्त्वमेव 'अ' वर्णद्योतकमनुत्तरपदम्, 'ह' वर्णद्योतकमेव विसर्गतत्त्वमुभयोः संघट्ट एव 'अहम्' तत्त्वमिति। अत्र परतत्त्वमेवानुत्तरतत्त्वमकुलः शिवो वा उच्यते, अस्यैव प्रभोः परा कौलिकी नाम्नि शक्तिरेव विसर्ग इति पदेन व्यवह्रियते। तदुक्तम्—

> अनुत्तरं परं धाम तदेवाकुलमुच्यते।
> विसर्गस्तस्य नाथस्य कौलिकीशक्तिरुच्यते[3] ॥ इति।

अत्राकुलकौलिकी प्रभृतिशब्दैर्बोध्योऽथवा अकारहकाराभ्यां संकेतितं शिवशक्तिसङ्घट्टमेव आनन्दशक्तिपदाभिलाप्यं भवति, तयैव जगदिदं प्रादुर्भवति। अमुमेव तत्त्वं सार-हृदय-विसर्गादिपदैस्तत्र तत्र तन्त्रागमशास्त्रे व्यवह्रियते। देवी-यामलग्रन्थे कालकर्षिणी महाडामरकयागेषु च श्रीपरा श्रीपूर्वशास्त्रे च मातृसद्भा-वाख्येनैतस्य वर्णनमुपपन्नम्[4]। तथा चेयमेव परा प्रतिभानाम्नाऽपि संबोध्या भवति। यथोक्तम्—

---

१. वरिवस्यारहस्ये—पृ० ४। २. तत्रैव—पृ० १७।

३. श्रीतन्त्रालोके०—३।१४३।

४. तयोर्यद्यामलं रूपं स सङ्घट्ट इति स्मृतः।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते ॥
परापरात्परं तत्त्वं सैषा देवी निगद्यते।
तत्सारं तच्च हृदयं स विसर्गः परः प्रभुः ॥
देवीयामलशास्त्रे सा कथिता कालकर्षिणी।
महाडामरके यागे श्रीपरा मस्तके तथा ॥ (श्रीतन्त्रा०—३।६८-६९-७०)।

तां परां प्रतिभां देवीं सङ्गिरन्ते ह्यनुत्तराम्[1] ॥ इति ।

अकुलधाम्नः शिवस्य विसर्गशक्तिरेव सर्वत्र विद्यमाना सती आनन्दरसमुद्भावयति । तदुक्तम्—

विसर्गशक्तिर्या शम्भोः सेत्त्थं सर्वत्र वर्तते ।
तत एव समस्तोऽयमानन्दरसविभ्रमः[2] ॥ इति ।

गीतादिविषये व्यक्तेर्या एकतानता हृदये परिस्फुरणरूपा भवति सैवानन्दशक्तिर्यया जडोऽपि सचेतन इव भवति । लोकेऽप्यानन्दातिशयस्य भोक्तारमेव सहृदय इति पदेन बोध्यते । तथा हि—

तथा हि मधुरे गीते स्पर्शे वा चन्दनादिके ।
माध्यस्थविगमे याऽसौ हृदये स्पन्दमानता ।
आनन्दशक्तिः सैवोक्ता यतः सहृदयो जनः[3] ॥ इत्युक्तम् ।

एवं हि पारमेश्वरी कौलिकीप्रभृतिपदैर्बोध्या विसर्गशक्तिरेव तेषु तेषु रूपेषु स्फुटिता सती नानारूपाकारतां समधिगच्छति । सैव जीवभूता चिदात्मिका कुण्डलिनी अप्यस्ति यया ध्रुवेच्छोन्मेषाः, अकारेकारोकारेति त्रिकम्, वैसर्गिकी कला, हकारपर्यन्तः समग्रवर्णराशिश्च समुद्भवति । अतो विसर्गशक्तिरियं विश्वकारणमिति । ऐतरेयाख्योपनिषदि भगवद्गीतायाञ्चेदमेव तत्त्वं तत्र तत्रोपनिबद्धं दृश्यते[4] । इयमेव विसर्गशक्तिर्मातृकापदेनाभिधेया[5] । कामकलाविलासटीकायाञ्च—

'स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहन्तारूपिणी प्रकाशानन्दसारा बिन्दुत्रयसमष्टिरूपलिप्यक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी मातृका

---

१. मन्त्र और मातृकाओं का रहस्य—पृ० ९२ । २. श्रीतन्त्रा०—३।२०८ ।

३. तत्रैव—३।२०९-२१० ।

४. अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ( गी०—८।३ )

५. सात्र कुण्डलिनी बीजजीवभूता चिदात्मिका ।
तज्जं ध्रुवेच्छोन्मेषाख्यं त्रिकं वर्णास्ततः पुनः ॥
आ इत्यवर्णादित्यादि यावद्वैसर्गिकी कला ।
विसर्गशक्तिर्विश्वस्य कारणं च निरूपिता ॥
ऐतरेयाख्यवेदान्ते परमेशेन विस्तरात् ।
शब्दराशिः स एवोक्तो मातृका सा च कीर्तिता ॥
( ई० प्र०—३।१।३।२२०-२२१-२२६-२३२ )

परमयोगिभिः महामहेश्वरैरनिशमनुस्मर्तव्या[१]' इत्युक्तम् । वामकेश्वरतन्त्रसिद्धान्तानुसारं हि मन्त्रमयी मातृका भगवती कालरूपेण स्फुरणात् गणेश ग्रह-नक्षत्र-योगिनी-राशिरूपा अस्ति । देशरूपेणावभासनादियं पीठरूपेण वर्णमातृकारूपेण वा व्यवहारपदं प्राप्नोति । तदुक्तं यथा—

गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम्[२] ।। इति ।

मातृकायां मूर्तिशक्तेः क्रियाशक्तेश्च विद्यमानवैचित्र्येणानयैव देशक्रमकालक्रमयोर्विस्तारो भवति । इयमेव वर्णमन्त्रपदरूपकालाध्वानं कलातत्त्वभुवनरूपदेशाध्वानं च षडध्वं जनयति । जगद्विधातुरियमेव समवायिनी शक्तिरिति । इयमेव मातृका परावाक् चितिशक्तिः स्वातन्त्र्यशक्तिश्च । देशकालविशेषिणी इयमेव परमेश्वरस्य हृदय-सारा इत्युक्ता । तथा हि—

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ।।

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः[३] ।। इत्युक्तम् ।

इयं हि मातृकाशक्तिः कालस्यावस्थाविशेषेणोत्पन्नस्य तुटिलवनिमेषादिकलनानां प्रशमयित्री, स्वमहिम्ना अपरिच्छिन्ना, परसंविदेकघनरूपेण द्योतमाना सती महादेवी, परमेश्वरी, दुर्घटा च स्वातन्त्र्यशक्तिर्भवति । तदुक्तं नित्याषोडशिकार्णवे—

प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम्[४] ।। इति ।

अस्या एकाक्षरमात्रस्य सिद्धे सति मनुष्यः सूर्य-ताक्ष्र्य-इन्दु-कन्दर्प-शङ्कर-अनल-विष्णुप्रभृतिदेवैरपि स्पर्धते । सर्वेश्वर्या महासिद्धमातृकादेव्या एकाक्षररूपस्य चन्द्रमसो ज्योत्स्नया त्रिणि भुवनानि सन्ति किल प्रकाशितानि । ब्रह्माण्डादिकटाहान्तं शक्त्यण्डं तस्यान्तं च चराचरात्मकं जगत् तस्या आदिसिद्धमातृकाया वर्णमये महासूत्रे ग्रथितमस्ति[५] । अनुत्तररूपोऽकार आनन्दरूपश्चाकार इकारात्मकयेच्छाशक्त्या इकारेण नियोजिते सति बीजत्रय ( अ-आ-इ ) सङ्घट्टेनैकारात्मक—

---

१. का० क० वि० टी०—पृ० १० ।
२. नित्याषोडशि०—१।१ ।
३. ई० प्र० भि०—१।५।१० ।
४. नि० षो०—२।१ ।
५. यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।
रविताक्ष्र्येन्दुकन्दर्पशङ्करानलविष्णुभिः ।।

जन्माधाररूपैकादशमबीजस्योदयः, यं हि त्रिकोणमिति पदेन व्यवह्रियते। इदं हि परमानन्दमयस्थानम्, अनेनैवाद्यापि जगदिदमुदेति। ज्ञानरूपरत्नानामागारः, समग्रसुखानामालयः, एकारस्याकृतिरूपोऽयं गुप्तत्रिकोणो मातृकाया एवास्ति प्रसारः। 'अ—आ—इ' इत्येषां वर्णानां संयोगेनोत्पन्ना उत्कृष्टाधारात्मिकेयं परापराशक्तिः, अ क च ट त प य शात्मिकाष्टवर्गमयी चेयं मातृका शिर-शिखा-ललाट-हृदयादिदेशेष्ववस्थिता भवति। तदुक्तम्—

अनुत्तरानन्दचिती इच्छाशक्ती नियोजिते।
त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम्[1] ॥ इति।

एवञ्च तत्र टीकायामुक्तम्—

त्रिकोणमेकादशमं वह्निगेहं च योनिकम्।
शृङ्गाटं चैव एकारं नामभिः परिकीर्तितम् ॥

त्रिकोणं भग इत्युक्तं वियत्स्थं गुप्तमण्डलम्।
इच्छाज्ञानक्रियाकोणं तन्मध्ये चिञ्चिनीक्रमम् ॥

एकाराकृति यद्दिव्यं मध्ये षट्कारभूषितम्।
आलयः सर्वसौख्यानां बोधरत्नकरण्डकम्[2] ॥ इति।

इयं हि मातृका नववर्गात्मिका[3], अष्टवर्गात्मिका[4], सप्तवर्गात्मिकेति[5] भेदेन तत्त्वज्ञैर्दृष्टा सती जगदाधारतामधिगच्छति।

---

यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम्।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥
यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं वन्दे तां सिद्धमातृकाम् ॥
यदेकादशमाधारं बीजं कोणत्रयोद्भवम्।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥
अकचटादि टतोन्नद्धपयसाक्षरवर्गिणीम्।
ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम् ॥
तामिकाराक्षरोद्धारसाराधारां परापराम्।
प्रणमामि महादेवीं परमान्दरूपिणीम् ॥ (नि० षो०—१।१।३ तः ८ श्लोकाः।)

१. श्रीतन्त्रा०—३।९४। २. तत्रैव टी०। ३. वरिवस्यार पृ०—१७।
४. नित्याषोडशिका०—१।११।
५. अकचटपयाद्यैः सप्तभिर्वर्णवर्गैर्विरचितमुखबाहापादमध्याख्यहृत्का।
सकलजगदधीशा शाश्वता विश्वयोनिर्वितरतु परिशुद्धिं चेतसः शारदा वः ॥
(श्रीप्रपञ्चसारतं०—१।१)

अत्रेदं तत्त्वम्—'आदिः प्रथमो वर्गः—अनुत्तरादेर्विसर्गान्तस्य विश्वाप्यायिनः षोडशकस्य स्वयं राजमानतया शब्दनस्वाभाव्येन भेदोपताप कारितया विश्वाक्षेपेण च स्वरशब्दवाच्यस्य गर्भीकृताशेषवाच्यवाचकादियोनितत्त्वप्रसरसमाश्रयत्वात् तदुल्लासकत्वाच्च बीजव्यपदेशस्य परसंवित्स्फारस तत्त्वस्य भेदेने वैचित्र्येण साक्षाद्भैरवोऽशेषविश्वमयत्वात् वाच्यवाचकयोरभेदाच्च, कादीनां तु बीजस्थानीभावरूपत्वेन घनत्वाद् बीजव्यङ्ग्यत्वेन व्यञ्जनशब्दव्यपदेश्यानामुक्तबीजसंसर्गेण जगत्कारणत्वात् योनिता, तथैव चेति वर्गरूपतया संहारेण क्षकारेण भैरवी, मातृकाधिष्ठातारं भैरवं—तत्स्फाररूपतयैव भरणरवणवपनपरमार्थं निष्कलभट्टारकस्वरूपम् अवर्गेण व्यावर्णितस्वरूपेण षोडशकेन प्रपूजयेत्, भैरवी अपि निष्कलभट्टारकाभिन्नस्वरूपैव कादिना क्षान्तेन योनिवर्गग्रामेणाविभक्तेन तदधिष्ठातृ उमा योगिश्वरीरूपा पूज्या[1]'इति।

एतेनाष्टवर्गेण भैरवतत्त्वस्य बोधो भवति। अनुत्तराकारादारभ्य विसर्गान्तं षोडशवर्णसमुदायं 'स्वर' इति पदेन ज्ञायते। स्वतः प्रकाशितेन शब्दनस्वभावशीलत्वेन च भेदरूपोपतापतया विश्वस्याक्षेपेण च भैरवः स्वरशब्दवाच्यो भवति। स्वरान् 'बीज' इति पदेन 'क' आदि व्यञ्जनांश्च 'योनि' इति पदेन उच्यते। कादियोनिवर्णतत्त्वानां प्रसार अपि एभिः स्वरवर्णैरेव जायते। अतः स्वराणामवर्गस्य वा अधिष्ठाता भैरव एव भवति। बीजवर्णान्येव घनीभूतानि 'क' 'च' 'ट' पादिवर्णरूपाणि गृह्णन्ति। इमानि खलु बीजवर्णान्युत्पादनीयानि भवन्तीति, अत एतानि व्यञ्जनान्युच्यन्ते। एतानि खलु बीजवर्णजनितत्वानि जगतो हेतुभूतानि 'योनि' पदवाच्यानि भवन्ति। तस्माद् भैरव-भैरवीपूजा अत्रैतत् रूपेण समुपदिष्टा इति। अयमेव क्रमः शिवशक्तिरूपेणापि तत्र तत्रोपदेष्टव्यो भवति। तथोक्तम्—

बीजयोन्यात्मकाद् भेदात् द्विधा बीजं स्वरा मताः।
कादिभिश्च स्मृता योनिर्नवधावर्ग—भेदतः॥
बीजमत्रशिवः शक्तिर्योनिरित्यभिधीयते[2] ॥ इत्यादि।

एतदेव तत्त्वं श्रीतन्त्रालोके विवेकटीकायामप्यधिगतम्। तथाहि—'पदवाक्याद्यात्मना विभक्तानां स्थूलानां शब्दानां अविभागस्वभावतः कारणात्मा राशिः, मातृकेति पशुभिः—

सर्वेषामेव मन्त्राणां विद्यानां च यशस्विनी।
इयं योनिः समाख्याता सर्वमन्त्रेषु सर्वदा॥

---

१. स्वच्छन्दोद्योते—पृ० १।२८।
२. मालिनीविजयोत्तरतन्त्रे—३।१०-११-१२।

इत्यादिनिरूपितेन स्वेन रूपेण अज्ञाता माता इत्यर्थः। क्षोभ्या योनयः, क्षोभकाणि बीजानि, तेषां भावः क्षुभिक्रियायां कर्तृकर्मरूपः, सम्बन्धस्तत्र य आवेशः परस्परसङ्घट्टात्मा लोलीभावः ततो भिन्ना बीजैर्भेदिता योनयो व्यञ्जनानि यस्याः सा तथाविधा सती मालिनी-मलते विश्वं स्वरूपे धत्ते इति विश्वरूपिणी इत्यर्थः'[1] इति।

एवमेव मातृकायां वर्णाननुसृत्य वर्ण-रूप-स्वरूप-अभिरूप-महिमा-कला-देवता-शक्ति-ऋषि-छन्दांस्याधृत्य सुभगोदये चन्द्रकलानाम्नि व्याख्यायाम्, सनत्कुमारसंहितायाम्, सूतसंहितायाम्, मातृकाचक्रविवेके, सौभाग्यभास्करे, कामधेनुतन्त्रे, शारदातिलके, श्रीप्रपञ्चसारे च बहुप्रपञ्चितमस्ति। एतत्तत्त्वं तत एवावगन्तव्यमिति दिक्।

## इदन्ताअहन्तयोश्च स्वरूपम्

परमकारुणिकस्य परमेश्वरस्य योऽसौ चैतन्यसंरम्भः तत्प्रभावेणासौ सततं बहिर्मुखत्वमन्तर्मुखत्वं च युगपदेवात्रवभासयति। अन्तर्मुखतयाऽहमित्यवभासो बहिर्मुखतया चेदमिति। परिपूर्णशुद्धापरिमितप्रमातृमात्रस्वभावः सन्नपि स्वात्मन्यद्वैतरूपे प्रतिबिम्बकल्पतया भेदाभेदं भेदं चाप्यवभासयति। भेदाभेदावभासतोऽहमिदमिति इदमहमिति वा विमृशन् विद्यादशामाविर्भावयति। भेदं चावभासयन् देहप्राणबुद्धिशून्येष्वायमिति, नीलादौ सुखादौ चान्तरे बाह्ये वा प्रमेयं इदमिति विमर्शमुल्लासयति। अत्र भेदोल्लासे परिमितः प्रमाता प्रमेयादपि भिद्यते प्रमात्रन्तरादपि च प्रमेयमपि च प्रमेयान्तरात्। इयं भेदभावप्रधाना तु मायादशा। तदिमा अभेदभेदाभेदप्रधानाः शक्तिविद्यामायादशा अवभासयननेन सोपानत्रयेणानन्तै रूपैरवतरत्यप्युत्तरत्यपि च। तदवतरणमुत्तरणञ्च सप्रपञ्चं प्रतिपाद्यमानं सृष्टिस्थितिसंहारपिधानानुग्रहात्मककृत्यपञ्चकरूपतयोपपाद्यतेऽत्र शैवदर्शने।

एवञ्चैषां कृत्यपञ्चकलीलायाश्चैतन्यसंरम्भरूपायाः कामकलात्मिकाया इच्छाया विजृम्भयाभिनयन्नकलादिसकलान्ताः प्रमातृभूमिकाः, शिवादिधरण्यन्तानि तत्त्वानि, तुर्यातीतादिजाग्रदन्ता अवस्थाः, व्यानादिप्राणान्ताश्च प्राणानाविर्भावयन् विश्वात्मकत्वतां स्वस्याभिव्यनक्ति परमेश्वरः। सर्वं चैतद्विलापयन् संविन्मात्रस्वरूपं स्वस्य प्रकाशयन् विश्वोत्तीर्णत्वमप्यात्मनः प्रकटयति। उभयं चैतत्समकालमेव सततं प्रकाशयन्नेवास्ते। तदैतद् विश्वमयत्वं संविद्रूपस्य भगवतो विमर्शांशाभिव्यक्तिमयं शक्तिरूपत्वं विश्वोत्तीर्णत्वञ्च प्रकाशांशाभिव्यक्तिमयं

---

१. शब्दराशिः स एवोक्तो मातृका सा च कीर्तिता।
क्षोभ्यक्षोभकतावेशान्मालिनीं तां प्रचक्ष्महे॥ (श्रीतन्त्रा० टी०—३।२३२)

शिवरूपत्वं प्रतिपाद्यते शास्त्रेषु। एवंविधशिवशक्तिसामरस्यं शक्तिस्वभावः, शिवस्वभावः, सामरस्यस्वभावोऽप्युच्यते। इदमेवतत्त्वमिदन्ताऽहन्तारूपेणापि विविच्यते तन्त्रागमराद्धान्ते।

## विमर्शस्वरूपम्

शिवशक्तिसामरस्यं प्राप्त एष विमर्शः चित्, चैतन्यम्, स्वरसोदिता परावाक्, स्वातन्त्र्यम्, परमात्मनो मुख्यमैश्वर्यम्, कर्तृत्वम्, स्फुरत्ता, सारः, हृदयम्, स्पन्द इत्यादिपरसहस्रैश्शब्दैरागमतन्त्रेषु व्यवह्रियते। अत एव अकृत्रिमाहमिति सतत्वतः स्वयं प्रकाशरूपः परमेश्वरः, पारमेश्वर्या शक्त्या शिवादिधरण्यन्तजगदात्मना स्फुरति प्रकाशते च। एतदेवास्य जगतः कर्तृत्वमजडत्वं च। जगतः कार्यत्वमपि एतदधीनप्रकाशत्वमेव। एवं भूतं जगत् प्रकाशरूपात् कर्तुर्महेश्वरादभिन्नमेव, भिन्नवेद्यत्वेऽप्रकाशमानत्वेन प्रकाशनायोगात् न किञ्चित्स्यात्। अनेन च जगता अस्य भगवतः प्रकाशात्मकं रूपं न कदाचिल् तिरोधीयते। एतत्प्रकाशनेन प्रतिष्ठां लब्ध्वा प्रकाशमानमिदं जगत् आत्मनः प्राणभूतं कथं निरोद्धुं शक्नुयात्, कथं च तन्निरुध्य स्वयमातिष्ठेत। अतश्चास्य वस्तुनः साधकमिदं बाधकमिदं प्रमाणमित्यनुसंधानात्मकसाधकबाधकप्रमातृरूपतया चास्य सद्भावः। तत्सद्भावे किं प्रमाणमिति च जिज्ञासायाम् प्रष्टृरूपतया च पूर्वसिद्धस्य महेश्वरस्य स्वयंप्रकाशत्वं सर्वस्य स्वसंवेदनसिद्धम्।

किञ्च, प्रमाणमपि यमाश्रित्य प्रमाणितं भवति तस्य प्रमाणस्य तदधीनशरीरप्रणनशीलसुखादिवेद्यं चातिशय्य सदा भासमानस्य वेदनैकरूपस्य सर्वप्रमितिभाजः सिद्धौ अभिनवार्थप्रकाशस्य प्रमाणवराकस्य कश्चोपयोगः। एवञ्च शब्दराशिमयपूर्णाहन्तापरामर्शसारत्वात् परमशिव एव षट्त्रिंशत्तत्वात्मकः प्रपञ्चः। तथा च षट्त्रिंशतत्त्वानि १-शिवः, २-शक्तिः, ३-सदाशिवः, ४ ईश्वरः, ५—शुद्धविद्या, ६-माया, ७-कला, ८-विद्या, ९-रागः, १०-कालः, ११ नियतिः, १२-पुरुषः, १३-प्रकृतिः, १४-बुद्धिः, १५-अहंकारः, १६-मनः, १७-श्रोत्रम्, १८-त्वक्, १९-चक्षुः, २०-जिह्वा, २१-घ्राणः, २२-वाक्, २३-पाणिः, २४—पादः, २५—पायुः, २६—उपस्थः, २७—शब्दः, २८- स्पर्शः, २९- रूपम्, ३०-रसः, ३१—गन्धः, ३२—आकाशः, ३३—वायुः, ३४—वह्निः, ३५—सलिलम्, ३६ - भूमय इत्येतानि।

परमेशितुर्हृदयबीजमेवाखिलं तत्त्वजातं बहिः प्रकाशते इत्येव तात्पर्यमवसीयते। अत्र इदमवधेयं यत् आत्मस्थमेवाखिलतत्त्वजातं यदा परमशिवभट्टारको बहिः प्रसारयति तदा बुद्धिस्थमेव ज्ञानं बहिस्तत्तदाकारेण परिणमित इति भट्टनागेशस्य कथनं तन्त्रपथ एवानुकरोति। यतश्च—

यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः।
तथा हृदयबीजस्थं विश्वमेतच्चराचरम्[1] ॥ इत्युक्तम्।

## तन्त्रागमशास्त्रे आन्तरस्यैवार्थस्य बहिः प्रकाशनम्

परमेश्वरभावविजृम्भणमेव सृष्टिमूलं प्रतिष्ठते तन्त्रागमशास्त्रे। एतस्मात् कारणादान्तरस्यैव बुद्धिगतशब्दार्थयुगलभावस्य बहिः प्रकाशनं तन्त्रराद्धान्ते प्रगाढश्रद्धां द्योतयति भट्टनागेशस्य। तन्त्रागमशास्त्रे मन्त्रदैवतयोरैक्यं प्रतिपादितम्। यादृशो ह्यत्र शिवशक्त्योरभेदस्तादृश एव शब्दार्थयोरभेदः। शब्दाःशक्तिरूपाः, अर्थाश्च शिवरूपाः। शिवशक्त्योरभेद इव तयोरभेदः। उक्तञ्च वायवीयसंहितायाम्—

शब्दजातमशेषं तु धत्ते शङ्करवल्लभा।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥ इति।

एष एव सिद्धान्तो भर्तृहरिणाऽपि—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[2] ॥ इतिकारिकायामप्युक्तम्।

हृदिस्थस्यैवास्य शब्दार्थयुग्मीभावस्य वागर्थप्रतिपत्तये येन सर्वात्मना बहिः प्रकाशनेन लोकानुरञ्जनं स्यात्, तदर्थं कविकुलगुरुः कालिदासो बहिः प्रकाशितवान्—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[3] ॥ इति श्लोकेन।

वह्निदाहकयोरिव, चन्द्रचन्द्रिकयोरिव शिवशक्त्योरभेदो वागर्थाविवेष्टः। तन्त्रशास्त्रे चिच्छक्तिरेव चेतनपदार्थः, सैव कारणशब्देनाप्यभिधीयते। चिद्रूपत्वाच्चेतनश्चायं प्रपञ्चः, कार्यकारणयोरभेदेन चितिरात्मस्थमेव भावं बहिः प्रकाशयति। अत एवोत्पलाचार्याः—

वर्तमानावभासानां भावानामवभासनम्।
अन्तःस्थितवतामेव घटते बहिरात्मना[4] ॥ इत्याहुः।

अन्यत्र च—

---

१. पराप्रवेशिकायां पृष्ठ सं०—११। २. वाक्य०—१।१२३।
३. रघुवंशमहा०—१।१। ४. ई० प्र०—१।५।१।

चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद् बहिः ।
योगीव निरुपादनमर्थजातं प्रकाशते[१] ।। इत्युक्तम् ।

दर्पणे यथा मुखाकृतिर्भूमिर्जलादिकश्च दृश्यते तद्वदेव चिन्नाथे भगवति सर्वा विश्ववृत्तयो दृश्यन्ते । यथा चोक्तम्—

निर्मले मुकरे यद्वद् भान्ति भूमिजलादयः ।
अमिश्रास्तद्वदेकस्मिश्चिन्नाथे विश्ववृत्तयः ।। इति ।

तन्त्रागमे बौद्धज्ञानं बौद्धमज्ञानमुभेऽपि भवतः । तदुक्तम्—

विशेषणेन बुद्धिस्थे संसारोत्तरकालिके ।
संभावनां निरस्यैतदभावे मोक्षमब्रवीत्[२] ।। इति ।

एवमेव—

ज्ञानाज्ञानस्वरूपं यदुक्तं प्रत्येकमप्यदः ।
द्विधा पौरुषबौद्धत्वभिदोक्तं शिवशासने ।।
यत्र पुंसो यदज्ञानं मलाख्यं तज्जमप्यथ ।
स्वपूर्णचित्क्रियारूपशिवतावरणात्मकम् ।।
संकोचिदृक्क्रियारूपं तत्पशोरविकल्पितम् ।
तदज्ञानं न बुद्ध्यंशोऽध्यवसायाद्यभावतः ।।
अहमित्त्थमिदं वेद्मीत्येवमध्यवसायिनी ।
षट्कञ्चुकाविलाणूत्त्थप्रतिबिम्बनतो यदा ।।
धीर्जायते तदा तादृग्ज्ञानमज्ञानशब्दितम् ।
बौद्धं तस्य च तत्पौंस्नं पोषणीयं च पोष्ट्र च[३] ।। इत्याद्युक्तम् ।

बौद्धं ज्ञानमेव बौद्धमज्ञाननिवर्तकमिति सिद्धान्तस्तान्त्रिकाणाम् । अतो बौद्धमज्ञानं तत्त्वज्ञानेन यदा विलियते तदैव जीवन्मुक्तो जन इत्युच्यते लोके ।

तदुक्तं श्रीतन्त्रालोके—

बौद्धज्ञानेन तु यदा बौद्धमज्ञानजृम्भितम् ।
विलीयते तदा जीवन्मुक्तिः करतले स्थिता[४] ।। इति ।

एवं हि सर्वत्रैवागमग्रन्थेष्वान्तरस्यैव भावस्येच्छाशक्त्या बहिः प्रकाशनं भवतीति तन्त्रशास्त्रं भूयोभूयः समालोड्य महामहोपाध्याया नागोजिभट्टा

१. ई० प्र०–१।५।७ । २. श्रीतन्त्रालोके–१।२४ ।
३. तत्रैव —१।३६ तः ४० श्लोकाः ।
४. " —१।४४ ।

बौद्धार्थपदार्थस्य पृथक् प्रकरणं वैयाकरणलघुमञ्जूषाग्रन्थे निरूपितवन्तः। तत्र हि तेनैतत्साधकानि परमार्थसारतन्त्रग्रन्थवचनानि भूयस्त्वेनोक्तानि। एकमुदाहरणं यथा—

'तदुक्तं परमार्थसारे—

'यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु।
तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा[1] ॥ इति (प०सा० २३),

इत्थमुपर्युक्तविवेचनैः सर्वथा इदं प्रमाणितं भवति यदान्तरसत्तैव बहिः प्रकाशते। अतो मञ्जूषाग्रन्थोक्तकूर्मपुराणवचननिरूपणेनेदं प्रकरणं पूर्यते।

'कौर्मेऽपि—

विप्र ! पृथिव्यादि चित्तस्थं न बहिस्थं कदाचन।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते[2] ॥ इत्युक्तम्।

एवमेवात्र बौद्धपदार्थस्तत्तच्छास्त्रानुरूपो यथामति मयाऽत्र समासेन निरूपितः, विषयविस्तारश्च सुधीभिः स्वयमेव विभावनीय इति शिवम्।

●

१. वै० सि० ल० म० बौ० नि०—पृ० सं० २८४। २. तत्रैव–पृ० सं०—२४१।

## पञ्चमोऽध्यायः

### नागेशभट्टाभिमतवर्णसमाम्नायव्याख्याप्रवृत्तिस्तन्त्रागमानुसारिणी

**भाष्योद्द्योते लघुशब्देन्दुशेखरस्य संज्ञाप्रकरणादौ च नागेशभट्टस्य माहेश्वरसूत्रविषये विचारः—**

'तुरीयं वाचो मनुष्या वदन्ति' इति निगमवचनेन परापश्यन्त्याद्यपेक्षया वैखर्य्या एव व्यवहारभूमावुपयोगेन तदाधारभूतम् 'अइउणि' त्यादिवर्णसमाम्नायं भगवान् विश्वात्मा परमेश्वरः परमकारुणिक्या प्रीत्या पाणिनये ढक्कानिनादेन नवपञ्चवारं समुपदिदेश। तदेवानुसृत्य महावैयाकरणेन भट्टोजिदीक्षितेन सिद्धान्तकौमुद्याम्, तच्छिष्येण वरदराजाचार्य्येण लघुसिद्धान्त-मध्यसिद्धान्तकौमुद्याञ्च— "इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि[1]' इत्युक्तम्। 'मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम्[2]'—इति वचनात् भट्टोजिदीक्षितविरचितमनोरमा एवोमा स्वरूपभूता लघुशब्देन्दुशेखर एव शिवस्वरूपभूतः। अतः कौमुदीगतविचारप्रकर्षो मनोरमायां तद्गतविचारप्रकर्षश्च लघुशब्देन्दुशेखरे इति परम्परयोत्तरोत्तरं प्रामाण्यात् माहेश्वरसूत्रगतवर्णसमाम्नायवैशिष्टचविवेचनं लघुशब्देन्दुशेखरे प्रभूततरं वर्तत इति स्वोक्त्या एव भट्टनागेशः अङ्गीकरोति। किञ्च, लघुशब्देन्दुशेखर इति स्वग्रन्थसंज्ञाविधानेन शब्दस्वरूपस्य शक्त्यभिन्नशिवस्यैवार्थजातरूपस्य 'तनुतेऽर्थप्रकाशकम्' इति ग्रन्थादौ मङ्गलमाचरणात् ग्रन्थे शब्दाडम्बरापेक्षयाऽर्थस्यैव प्राधान्याच्छब्दार्थयोः शक्तिशिवरूपयोरर्थस्य शिवरूपता संगच्छते। अतो नागेशस्य शब्दराशेः शिवत्वस्वीकारप्रकारः तन्त्रागमसंस्कारस्यैव माहात्म्यं द्योतयति।

'ज्ञानमिच्छेन्महेश्वरात्' इत्यभियुक्त्या माहेश्वराणि सूत्राणि अणादिसंज्ञार्थानि 'चतुर्दशसूत्राणि व्याकरणोपजीव्यानि रक्षोहागमलघ्वसंदेहाः[3]' इत्यर्थानि 'तेऽसुराः' इत्यारभ्य' 'सुदेवोऽसि वरुण[4]' इत्यन्तानि च समुल्लसन्ति इति महाभाष्यात्, तत्र नागेशभट्टस्य 'कृतभूरिपरिश्रमात्,' लघुशब्देन्दुशेखरग्रन्थाच्चावगम्यते। अतो महेश्वरसकाशादागमनाद् व्याकरणशास्त्रस्यापि 'व्याकरणागमः' इति नामागमशास्त्रानुबन्धित्वं साधयति। अतो नागोजिभट्टाः स्वरचनास्वागमसिद्धान्तान्नेवोपजीव्यत्वेनाङ्गीचक्रुः। अत ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिन्यामुक्तम्—

'प्रतिभानलक्षणा इयं शब्दभावनाख्य आगम एवेति[5]'।

---

१. सिद्धान्तकौमुद्यां संज्ञाप्रकरणे–१। २. लघुशब्देन्दुशेखरे आदौ मङ्गलाचरणे–३।
३. महाभा० पस्पशा०—१।१। ४. तत्रैव—। ५. ई० प्र० वि० वि०—पृ० ६३।

स्वच्छन्दतन्त्रे च—

अदृष्टविग्रहात् शान्ताच्छिवात्परमकारणात्।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम्॥

अमूर्ताद् गगनाद्यद्वन्निर्घातो जायते महान्।
शान्तात्संविन्मयात् तद्वच्छब्दाख्यं शास्त्रम्[1]॥ इत्युक्तम्।

एवं हि स्वच्छन्दतन्त्रस्य चतुर्थपटले—

'आगमो ज्ञानमित्युक्तमनन्ताः शास्त्रकोटयः' इति व्याख्यायां—'आसमन्ताद् गमयति अभेदेन विमृशति पारमेशं स्वरूपमिति कृत्वा परशक्तिरेवागमः, तत्प्रतिपादकस्तु शब्दसन्दर्भः तदुपायत्वात् शास्त्रस्य[2]' इत्युक्तम्।

## लघुशब्देन्दुशेखरे चतुर्दशसूत्राणां माहेश्वरत्वस्वीकृतिः

लघुशब्देन्दुशेखरेऽपि 'ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इति व्यवहारानुपपत्तिराम्नायसमाम्नायशब्दयोर्वेद एव प्रसिद्धेरित्यत आह-माहेश्वराणीति। महेश्वरादागतानीत्यर्थः। महेश्वरप्रसादलब्धानीति फलितम्। एवञ्चैवमानुपूर्वीका श्रुतिरेवैषा। तत्प्रसादात्पाणिनिना लब्धा। श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्। अत्र प्रमाणम्—

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तम्—॥ (पा० शि०—५७।) इति शिक्षावचनम्। 'लण्' सूत्रे णकारविषयाचार्यप्रवृत्तिर्ज्ञापयति—'व्याख्यानत' इत्यादावाचार्यपदेन महेश्वरः[3]' इत्युक्तम्।

भट्टनागेशस्य चतुर्दशमाहेश्वरसूत्रविषयेऽयं सिद्धान्तः—'आनुपूर्वीका श्रुतिरेवैषा' इति स्वच्छन्दतन्त्रेणापि पुष्णाति। तथा हि—

मन्त्राख्यं तु महाज्ञानमीशानात्तु विनिर्गतम्[4]॥ इति।

सदाशिवाख्यसूर्यस्योद्ध्वमुखादहर्निशं ज्ञानं निर्गच्छति। तद्ग्रहणाय तदनुरूपायाः शक्तेरावश्यकता वरीवर्ति। सा च गिरिजाख्याशक्तिः कस्यचिद् साधनसम्पत्तियुतस्य भाग्यशालिनोऽन्तःकरणे सम्बुद्ध्य ज्ञानधारामात्मसात्करोति। सैव महाभागेभ्यो मुनिभ्यस्तन्माहेश्वरज्ञानमाविष्करोति। एष एवायासो लोके आगमपदेन व्यवह्रियते। अतो महेश्वरादागतं गिरिजायां गतञ्च मतम् आगमपदेन व्यवह्रियते तन्त्रराद्धान्ते। यथा—

---

1. स्वच्छन्दत०—४। 2. स्वच्छन्दोद्द्योते—४।२१४।
3. लघुशब्देन्दुशे० संज्ञाप्र०—पृ० ६। 4. स्वच्छन्दत०—११।४५।

आगतः शिववक्त्रेभ्यो गतश्च गिरिजानने।
मग्नश्च हृदयाम्भोजे तस्मादागम उच्यते[1] ।। इति।

महामतिर्नागोजिभट्टः अनुबन्धानामपि माहेश्वरकर्तृत्वं साधयति "अनुबन्धाश्च महेश्वरकृता एवेत्यनुपदं स्फुटीभविष्यति[2]" इत्यनेन। एतेनानुबन्धानामप्यानर्थक्यं न जायते। 'इकोयणचि[3]' इति भाष्येऽपि वर्णानामनर्थकत्वन्निराकृतम्, 'सामर्थ्ययोगान्न हि किञ्चिदत्र पश्यामि शास्त्रे यदनर्थकं स्यात्' इत्यनेन। वर्णसमाम्नाये किञ्चिद् दृष्टादृष्टार्थवत्, किञ्चिच्छुद्धादृष्टार्थवत्, सर्वथाऽनर्थकं न किञ्चिदिति तदर्थः। 'वृद्धिरादैच्[4], इति सूत्रभाष्येऽपि 'वर्णेनाप्यनर्थकेन न भवितव्यम्' इति विवेचनादनुबन्धानामप्यनर्थकत्वं नास्तीति नागेशभट्टा आमनन्ति। लघुशब्देन्दुशेखरे पुनश्च—'अत एव सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः' इति भाष्यमुपादायोक्तं भर्तृहरिणा-'यथैवेदमव्युच्छिन्नं चन्द्रतारकादि एवमस्याक्षरसमाम्नायस्य न कश्चिद् आधुनिकः कर्ताऽस्ति। एवमेव वेदपारम्पर्येण स्मर्यमाणः इति। आधुनिकः शरीरी। पुष्पितत्वं तन्मूलकशब्दशास्त्रद्वारेण शब्दप्रयोगेण च फलितत्वम्। उक्तञ्चैतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृतकाशिकायाम्—

'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च(१४) वारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम् ।।

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम्।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ।। इति।

धात्वर्थं धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम्। अत एव 'अनुबन्धकरणार्थश्च वर्णानामुपदेशः' इत्युक्तं भाष्ये। अत्र करणशब्दप्रयोगेणानुबन्धानां सादित्वं सूचितम्। तत्करणञ्चोपदेशकर्तृकमेव प्रत्यासत्तेः। तेन तदव्यतिरिक्तस्य सर्वस्यानादित्वं सूचितम्। अत्र सनकाद्युद्धरणेच्छयाऽस्य ब्रह्मोपदेशरूपत्वं सूचितम्। तच्च श्रुतित्वाभावे न सङ्गच्छेत। 'श्रोतव्यः श्रुतिवाक्येभ्यः इत्युक्तेः[5]'।

नागेशोक्तौ प्रमाणप्रदर्शनवाक्ये वर्णचतुर्दशमित्यस्य व्याख्यानन्तु वर्णाश्चतुर्दश इत्यर्थे आर्षसाधुत्वम्। 'अन्त्या वर्णाश्चतुर्दश' इति क्वचित्पाठः। अत्रोदाहरणे प्रबलतर्कैः प्रमाणैश्च चतुर्दशसूत्राणामनादित्वं कूटस्थत्वमविचालित्वञ्च नागोजिभट्टेन सूचितम्।

वर्णानामनादित्वं माहेश्वरत्वमेवास्ति इत्यत्र श्रुतिप्रमाणमपि नागेशेनोद्धृतम्। श्रूयते हि पाणिनेः प्राक् बहवो वैयाकरणा आसन्। परम्परेयमीश्वरा-

---

१. वाचस्पत्यं कोषे रुद्रयामलवचनत्वेन निरूपितम्—पृ० ६१६।
२. लघुश० संज्ञा प्र०—पृ० ६। ३. अष्टा०—६।१।७७।
४. तत्रैव—१।१।१। ५. लघुश०संज्ञा प्र०—पृ० ७।

दारभ्य यथोत्तरं मुनीनां प्रामाण्यमभ्युपागच्छन्ती पाणिनि-पतञ्जलिपर्यन्तमागच्छति। उक्तञ्च—

इन्द्रश्चन्द्रः काशकृत्स्नापिशलीशाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः[1] ॥ इति।

उक्तरीत्या प्रवाहानादितया व्याकरणशास्त्रस्याप्यनादित्वं सुतरां सिद्धम्। तत्रानेके व्याकरणतत्त्वविदः पाणिनेः पूर्वं बभूवुः, येषां मूलमाकलय्य पाणिनिरष्टाध्यायीं निर्ममे। अतः पाणिनेः पूर्वं शाक्टायनऋषिप्रोक्तस्य शाकटायनव्याकरणस्य स्थितिः पूर्वमासीदिति ऐतिह्यविदो वदन्ति एव। तत्र शाक्टायनऋषिवाक्याधारमादाय नागोजिभट्टो माहेश्वरसूत्रवैशिष्ट्यं पुनरालोचयति—

'ऋक्तन्त्रव्याकरणे शाक्टायनोऽपि—'इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः' इति। ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः। तत्त्वञ्च नन्दिकेश्वरकृतकाशिकायां स्पष्टम्। पाणिनेर्लाघवेन शास्त्रप्रवृत्तिफलको यः समवायो वर्णानां क्रमेण तदर्थं इति तदर्थः। स चाणादिप्रत्याहारद्वारा शास्त्रप्रवृत्त्यर्थः। एवञ्चायमुपदेशः पाणिनेरन्यकृत इति स्पष्टमेवोक्तम्। मन्त्रोपदेश इतिवच्चात्रोपदेशपदप्रयोगः। अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यं फलमिति भाष्ये उक्तम्। व्याकरणमुपक्रम्य 'वेदानां वेदः' इति छान्दोग्यश्रुतिरप्यैतत्परैवेति दिक्[2]' इति।

एतेन चतुर्दशसूत्राणामनादित्वं सर्ववेदपारायणफलशालित्वं वेदानामपि वेदत्वं नागेशोक्तिः साधयति। व्याकरणागमस्य प्रक्रिया परिष्कारो दर्शनञ्चेति त्रीणि रूपाणि प्रतिपादयन्ति शाब्दिकाः। तत्र दर्शनपक्षमाश्रित्येयमुक्तिः नागेशभट्टस्य। वाग्व्यवहारमाश्रित्य प्रवृत्तिनिमित्ताश्रयवतामर्थवद्धातुप्रभृतीनां संज्ञा-परिभाषादिषड्विधसूत्राणां प्रक्रियाप्रवृत्तिः, निर्दुष्टलक्षणसमन्वयार्थं परिष्कारः, वाक्तत्त्वविमर्शाय दर्शनदृष्टिरिति व्याकरणाध्ययनस्य प्रयोजनानि। वाक्तत्वमयाः शब्दस्वरूपा हि वेदास्तद्रक्षणाय व्याकरणाध्ययनस्य प्रयोजनमिति महाभाष्यकारस्य पतञ्जलिमुनेः, वाक्यपदीयकारस्य भर्तृहरेः, तट्टीकाकर्त्रोः पुण्यराजहेलाराजयोश्च विशिष्टः प्रयासो दृश्यते। तदत्र पाणिनीयव्याकरणव्याख्यातृपरम्परायामधुना नागेश एवावसानसीमामधिरोहति। तदत्र स्वप्रबन्धेषु व्याकरणशास्त्रस्य दर्शनस्वरूपविवेचनेन नागोजिभट्टा महाभाष्यस्योद्द्योतादारभ्य परिभाषेन्दु–लघुशब्देन्दु-

१. नवाह्निके महाभाष्ये चौखम्त्राप्रकाशने भूमिकायाम्—पृ० सं० १।

२. लघुश० संज्ञा० पृ०—७।

मञ्जूषाप्रभृतयो ग्रन्था प्रणीतवन्तः। किञ्च, स्वमातापित्रोः शिवभट्टसतीदेव्योः स्मरणेनापि वाक्तत्त्वस्य संविद्स्वरूपयोः उमामहेश्वरयोश्च स्मरणं संपादयन्ति।

## महाभाष्योद्द्योते चतुर्दशसूत्राणां माहेश्वरत्वसाधनम्

भगवान् पतञ्जलिर्महाभाष्ये चतुर्दशसूत्रभाष्यावसरे प्रोक्तवान् 'अथ किमिदमक्षरमिति'। व्याख्याकारः कैयटश्च—'अक्षरसमाम्नाय इति व्यवहाराद्यो वा इमां स्वरसोऽक्षरश इति चोक्तत्वात्प्रश्नः'। नागोजिभट्टाश्च—'अइउण्' सूत्रेऽयं व्यवहारो भाष्ये। प्रश्न इति तद्घटकीभूताक्षरपदार्थावगमायेति भावः[1]' इति प्रोक्तवन्तः।

अक्षरं किमिति प्रश्नस्योत्तरं भाष्ये स्वयमेव भगवान् पतञ्जलिः प्राह—तथा हि 'अक्षरं न क्षरं विद्यात्'। 'न क्षीयते न क्षरतीति वाऽक्षरम्' इति। अत्रत्ये प्रदीपे—'अक्षरं न क्षरमिति। क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति। अत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम्। तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम्। व्यवहारनित्यतया तु वर्णपदवाक्यस्फोटानां जातिस्फोटस्य वा' इत्युक्तम्।

नागोजिभट्टाश्च—'ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भविशेषणमाह–परमार्थतो नित्यमिति। यतस्तत् प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः। नन्वेवं प्रकृते किमायातमतआह—व्यवहारनित्यतया चेति। सर्वेषां शब्दानामाकाशादिवत् सृष्ट्यादावुत्पत्तिः प्रलये च नाश इत्यर्थः। एवं च व्यवहारनित्यतयाक्षरब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः। एवं च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः[2]' इति प्राहुः। नागेशः—'एवं चाक्षरसमाम्नाय इत्यस्य श्रुतिरूपो वर्णसंघात इत्यत्र तात्पर्यम्' इत्युक्त्वा वर्णसमाम्नायस्य चतुर्दशसूत्रात्मकस्य श्रुतिमूलकत्वमाचष्टे।

अक्षरसमाम्नायस्योपदेशः किमर्थ इति जिज्ञासायां महाभाष्ये—

'वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते।
तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते'॥ इत्युक्तम्।

सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः सर्ववेदफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते[3]' इत्युक्तम्।

महाभाष्यपङ्क्तेराशयः कैयटेनेत्थं व्याख्यातः। 'वर्णज्ञानमिति वर्णा-येन

---

१. महाभाष्ये–१।१।२। २. म० भा० उ०—१।१।२। ३. तत्रैव।

शास्त्रेण ज्ञायन्ते तद्वाचो विषयः, शास्त्रेण वाग्विसीयते आबध्यते, शास्त्रेण तस्या परिज्ञानादित्यर्थः। यत्र चेति। ब्रह्म वेदः पदे वर्तते। तस्य च शास्त्रं विषयः इष्टबुद्ध्यर्थमित्यस्य–कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः। लघ्वर्थमिति। अनुबन्ध-करणार्थमित्यर्थः। वाक्समाम्नाय इति। एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः। पुष्पितः फलित इति। दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां च। चन्द्रतारक-वदिति। अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति। ब्रह्मराशिरिति। ब्रह्मतत्त्व-मेव शब्दरूपतया प्रतिभातीत्यर्थः। सर्ववेदेति। सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीत्यर्थः।' इत्येवं रूपेण कैयटेन भाष्याशयो व्याख्यातः।

उद्द्योतकाराश्च—'येन शास्त्रेणेति। चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनि-व्याकरणेन चेत्यर्थः। तत्–शास्त्रम् भाष्ये यत्र चेत्यनेन वाक् परामृश्यते। का सा वाग्? यत्र ब्रह्म च वर्तते। चात्पुराणादि इति भाष्याक्षरार्थः। वाग्व्यवहारस्येति तत्संग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः। यथा श्रुतौ हि भाष्येऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादाय हरिणा—'अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्ताऽस्त्येवमेव वेदे पारंपर्येण स्मर्यमाणम्' इति व्याख्यातम्। ब्रह्मतत्त्वमेवेति। तदुक्तं नन्दिकेश्वरेण–'अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः' इत्यादिना सर्ववर्णानां मेहश्वररूपता वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता तदाह—सर्ववेदे-त्यादि। अन्ये तु वर्णज्ञानं चतुर्दशसूत्र्यात्मकं शास्त्रं वाचो वेदशास्त्रपुराणरूपायाः सकलवाचो विषयो बन्धनम्। यत्र च वर्णसमाम्नाये ब्रह्मबोध्यतया वर्तते। व्याख्याता चैषा चतूर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण तदर्थं सकलवाग्ज्ञानार्थं च। अनेन सकलवेदाध्ययनेन यत् फलं तदक्षरसमाम्नायज्ञानेन सूचितम्। वाग्विषय इत्यस्य व्याख्या वाक्समाम्नाय इति, सर्ववाग्रूपत्वात्। 'चन्द्रतारकवत् प्रतिमण्डित' इत्यनेनास्यानादित्वं सूचयति। तादृशोऽयं ब्रह्मराशिर्वेदितव्यः। बोध्यबोधकयोर-भेदात्। सर्ववेदेति। सर्ववेदाध्ययनजन्यपुण्यफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञानेऽध्ययनमात्रे, भवति। इदमेव पूर्वं पुष्पितत्वम्। तादृशपुत्रवत्वेन च मातापित्रोः स्वर्गे पूजा भवति। यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति[1]' प्राहुः।

अत्रोद्धृतेन भाष्यप्रदीपोद्द्योतवक्तव्येन माहेश्वरसूत्राणामध्ययनेन सर्ववेद-शास्त्रपुराणरूपायाः सकलवाचः अध्ययनस्य फलमवाप्यते। अत एवोक्तं केनचिद-भियुक्तेन—

'यद्यपि बहुनाधीषे तथापि पुत्र पठ व्याकरणम्॥ इति।

महाभाष्ये च —

१. महाभाष्ये प्रदीपे—उद्द्योते–१।१।२।

'पुराकल्प एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं समाधीयते[1]' इत्युक्तम् ।

अत्रोक्तरीत्या दर्शनांशे व्याकरणागमस्योपरि तन्त्रागमस्य प्रभावः स्पष्ट एव दरीदृश्यते। तन्त्रागमे निखिलमेव षट्त्रिंशत्तत्वजातं शिवशक्त्योरभेदेन स्थितस्य संविदः परावाचो महिम्नैव समुल्लसति । पाणिनीयं हि व्याकरणं चतुर्दश-माहेश्वरसूत्रनिर्देशं विना निष्प्रयोजनं भविष्यति। अतः पाणिनीयसूत्राणामपि सूत्रभूतानीमानि माहेश्वरसूत्राणि तन्त्रागमस्य रहस्यभूतानि पाणिनीयव्याकरण-स्योपजीव्यभूतानीति नागेशभट्टा आमनन्तीत्यलम् ।

## तन्त्रशास्त्रे माहेश्वरसूत्राणां तत्रत्यवर्णानाञ्च विमर्शः

अनन्तकोटिब्रह्माण्डाधीशस्य परमेशितुः सृष्ट्युपयोगित्वेन शब्दार्थमयस्य रूपद्वयस्य स्थितिः समुल्लसति। चरमावस्थायामिमौ संवित्स्वरूपौ सामरस्यापन्नौ शक्तिशक्तिमतोरिवाभेदेन स्थितावविनाभावेन वर्तेते। शब्दब्रह्मापरप्रणवनाम्ना अर्थब्रह्म च परप्रणवनाम्नाऽपि व्यवह्रियते। तान्त्रिकेष्वियं सृष्टिः परमशिवस्य चितिशक्त्या वा परिणामभूतेति । सृष्टिरूपेण परिणतेऽपि महेश्वरे वैकृत्यं नोप-पद्यते । उक्तञ्च—

या सा शक्तिर्जगद्धातुः कथिता समवायिनी ॥[2] इति ।

अन्यच्च—

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥

सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः[3] ॥ इति ।

अपि च—

आस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद्घटादिवत्[4] ॥ इति ।

अयं भावः—'यदि नाम महेश्वरः प्रतिनियतेन केनचिद्रूपेण अवतिष्ठेत, तदास्य घटादिन्यायेन माहेश्वर्यं संविद्रूपत्वं च न स्यात् । एतदेव हि अस्य माहेश्वर्यं संविद्रूपत्वं च यत् तत्तदनियतवाच्यवाचकात्मना परिस्फुरेत इति । तथा हि—'एकमेवेदं संविद्रूपं हर्षविषादाद्यनेकाकारविवर्तं पश्यामस्तत्र यथेष्टं संज्ञाः क्रिय-न्ताम्' इत्याद्युक्तयुक्त्या संवित् तावदनेकाकारतया परिस्फुरति, इति नास्त्यत्र विवादः। न चास्यास्तत्तदाकारतया परिस्फुरणे 'तस्यातिरेकानतिरेकविकल्पो-

१. महाभा० पस्पशाह्निके 'सुदेवो असि' इति प्रयोजननिरूपणे ।
२. मातृकाचक्रविवेके—३।५। ३. ई० प्र०—१।५।१०। ४. श्रीतन्त्रालोके—३।१००।

पहतत्त्वात्' अविद्यादि निमित्तम्, किन्तु स्व एव स्वभावो यः 'स्वातन्त्र्यम्' इति 'माहेश्वर्यम्' इति च सर्वत्रोद्घोष्यते, तत्तत्प्रतिनियतेऽस्य स्वरूपे प्रकाशमाने 'माहेश्वर्यं संविद्रूपत्वं च' न स्यात्, इति जाड्यमेवापतेत्, जड एव हि घटादिः 'इदमिदानीमत्र भाति' इत्येवमात्मनियतावभासो भवेत्, न परः प्रकाशः[1]' इति। एतेनानेकाकारतया परिस्फुरणेन हेतुना, सिन्धोरिवोर्मयोर्बोधात् उल्लसनशीलाः, स्वा आत्मभूता इच्छाद्याः शक्तयः स्वात्मसंघट्टेन परस्परलोलीभावेन, चित्रतामाश्रयन्ति—तत्तद् ग्राह्यग्राहकात्मना तत्तत्परामर्शरूपतया च परिस्फुरन्तीत्यर्थः। तदुक्तम्—

तेन बोधमहासिन्धोरुल्लासिन्यः स्वशक्तयः।
आश्रयन्त्यूर्मय इव स्वात्मसंघट्टचित्रताम्॥

स्वात्मसंघट्टवैचित्र्यं शक्तीनां यत्परस्परम्।
एतदेव परं प्राहुः क्रियाशक्तेः स्फुटं वपुः[2]॥ इति।

अत्र हि साधनप्रधाने तन्त्रागमराद्धान्ते शिवस्याभिन्ना शक्तिस्त्रिधा विभज्य लोकोपयोगाय निरूपिता अस्ति। सा चेच्छाज्ञानक्रियात्मिका। इच्छाशक्तेरुदयेन ज्ञानशक्तेः सञ्चारः ज्ञानशक्त्या च क्रियाशक्तेरुन्मेष इत्येवं क्रमः। अत उक्तम्—

शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः॥ इति।

त्रिशक्तिभिर्मण्डितो महेश्वरः स्वविचित्रस्वातन्त्र्यशक्त्या जगदिदं सृष्टिस्थित्यन्तनिग्रहानुग्रहैरनुकम्पयति। आसां शक्तीनां प्रतीकत्वेनैव शिवस्त्रिशूलं करे धारयति। तदुक्तमत्र श्रीतन्त्रालोके—

अस्मिंश्चतुर्दशे धाम्नि स्फुटीभूतत्रिशक्तिके।
त्रिशूलत्वमतः प्राह शास्ता श्रीपूर्वशासने[3]॥ इति।

अकारादारभ्य हकारपर्यन्तस्य वर्णसमाम्नायस्याहमित्यस्याद्वैतताऽस्ति। तत्राकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः अस्ति। हकारश्च चरमावयवस्थितः विमर्शस्वरूपः। अनयोः सामरस्यमेव पराहन्ता स्वरूपेण समुल्लसति। उक्तञ्च—

अहमित्येकमद्वैतं यत्प्रकाशात्मविभ्रमः।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः॥

हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः।
अनयोः सामरस्यं यत्परस्मिन्नहमि स्फुटः[4]॥ इति।

श्रीमद्भगवद्गीतायामपि—

---

१. श्रीतन्त्रालोके—टीकायाम् ३।१००।
२. तत्रैव—३।१०३-१०४।
३. तत्रैव—३।१०५।
४. वरिवस्यारहस्ये-पृष्ट ५०।

'अक्षराणामकारोऽस्मि'[1] इत्युक्तम् ।

योगिनीहृदये च—

प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात् ।
प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम्[2] ।। इत्युक्तम् ।

अत्रायमाशयः—शून्यश्चासावकारश्चेति शून्याकारः । शून्यत्वं पुनरत्र निरस्तसमस्तप्रपञ्चत्वात् । अत एव परमशिवः । तदुक्तं सङ्केतपद्धत्याम्— 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः' इति । अत्र श्रुतिः—'अ इति ब्रह्म' इति । विसर्गोऽन्ते यस्य स विसर्गान्तस्तस्मात् । बिन्दोः प्रस्पन्दसंविदः बिन्दुरग्नी-षोमात्मकः कामाख्यो रविः शिवशक्तिसामरस्यवाच्यात्मा जातः । तदुक्तं चिद्गगन-चन्द्रिकायाम्—

भोक्तृभोग्यमयगाविसर्शनाद् देवि मां चिदुदधौ दृढां दशाम् ।
अर्चयन्ननलसोममिश्रणं तद्विमर्श इह भानुजृम्भणम्[3] ।। इत्युक्तम् ।

अतः शिवशक्तिसामरस्यरूपकामाख्यस्य बिन्दोः संसारः प्रस्पन्द इह नेन्दूरूपसितशोणबिन्दुद्वयात्मक अकारहकारसामरस्यविन्दोः प्रस्पन्दात् संसारात् सितशोणबिन्दुयुगलात् संविच्चिन्मयी दहनेन्दुरूपचित्कला जायते इति ।

तथा च प्रकाशमरमार्थत्वात् स्फुरत्तालहरीयुतादित्यस्य भावस्तु प्रकाश-विमर्शवह्निसम्पर्काद् घृतस्येव धारा विमर्शशक्तेः स्रावो जायते । अत एव प्रकाशस्य परमार्थत्वम् । स्फुरत्ताया विमर्शशक्तेर्लहरी बिन्दुद्वयान्तरालनिःसृता हार्धकलारूपा तया युक्तात् एवं भूतात् कामकलाक्षरात् । प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकं बैन्दवं चक्रम् । विश्वलहरीस्थानं विश्वलहर्यो वीचयः षट्त्रिंशत्तत्त्व-रूपास्तासां स्थानमुत्पत्तिहेतुत्वात् । मातृत्रयात्मकं पश्यन्तीमध्यमावैखरीरूपम् । एवं तत्समष्टिरूपपरमात्मकसदाशिवाख्यतुरीयबिन्दोरुत्पन्नत्वाद् बैन्दवं चक्रं मध्यत्रिकोणप्रसरम् । एतदत्रैव वक्ष्यति—

आत्मनः स्फुरणं पश्येद्यदा सा परमा कला ।
अम्बिकारूपमापन्ना परा वाक् समुदीरिता ।।

बीजभावस्थितं विश्वं स्फुटीकर्तुं यदोन्मुखी ।
वामा विश्वस्य वमनादङ्कुशाकारतां गता ।।

इच्छाशक्तिस्तदा सेयं पश्यन्ती वपुषा स्थिता ।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ।।

ऋजुरेखामयी विश्वस्थितौ प्रथितविग्रहा ।
तत्संहृतिदशायां तु बैन्दवं रूपमास्थिता ।।

---

१. गीतायाम्-१०।३३ । २. यो॰ हृ॰—१।१०-११ । ३. चिद्गगनचं—२१२ ।

प्रत्यावृत्तिक्रमेणैवं शृङ्गाटवपुरुज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा[1] ॥ इति ।

किञ्च, 'चक्रं कामकलारूपं, प्रसारपरमार्थतः[2]' इत्युक्त्या कामकलाक्षरात् प्रसृतस्य श्रीचक्रस्य कामकलाक्षररूपं परमार्थस्तद्रूपं बैन्दवं चक्रमित्यर्थो वेदितव्य इति ।

अत्रायं सृष्टिक्रमः—यथा हि कश्चित् पुरुष उत्पत्स्यमानपुत्राद्यदृष्टवशादुत्पादनेच्छाविशिष्टः स्वीयामुत्पादनशक्तिमवलोक्य स्वार्धशरीरात्मिकायां भार्यायां स्वयमन्तः प्रविशति शुक्लरूपेण, 'पतिमेकादशं कृधि', 'आत्मा वै पुत्रनामासि' इत्यादि श्रुतेः । प्रवेश्यमानस्य स्वभिन्नत्वात् स्थूलतरभेदाक्रान्तत्वाच्च नाभेदभानम् । ततस्तस्य शुक्लस्यान्तः शोणितबिन्दुरूपेण भार्या प्रविशति । तेन च स बिन्दुरुच्छूनो भवति । स एष बटोदुम्बरादिबीजस्थानीयः । तस्मादङ्कुरविशेषाद्युत्पत्तिक्रमेण कालान्तरे पुत्राद्युत्पत्तिरिति । यथा वा सूर्याभिमुखदर्पणे तदन्तः प्रविष्टकिरणादुभयकिरणसंकलनरूपस्तेजो बिन्दुविशेषः कुड्यादौ प्रादुर्भवति, तथा प्राण्यदृष्टवशात् स्वान्तः संहृतविश्वसिसृक्षया प्रकाशरूपं ब्रह्म स्वीयां शक्तिमवलोकयितुं तदभिमुखीभूय तदन्तस्तेजोरूपेण प्रविश्य शुक्लबिन्दुभावमयते । ततस्तं बिन्दु रक्तरूपाशक्तिः प्रविशति । तेन संमिश्रो बिन्दुरूच्छूनो भवति । तत्र च हार्दकलारूपोऽप्येकः पदार्थविशेषो भवति ।

एवं हि स बिन्दुः समष्टिरूपेणैकः स्फुटशिवशक्तिसामरस्यनामा 'कामो रविरग्नीषोमात्मकः' इत्यादिशब्दैर्व्यवह्रियते । व्यष्टिरूपेण द्वयम् । तत्र शुक्ल इन्दु रक्तोऽग्निरिति बिन्दुद्वयात्मकत्वात् विसर्ग इति च व्यवह्रियते । अत एव च खे रात्रावग्नावमावास्यायां चन्द्रे च प्रवेशस्य श्रुत्यादिसिद्धत्वात् समष्टिबिन्दोरवित्वम् । एवं च कामाख्यो बिन्दुर्विसर्गो हार्दकला चेति त्र्यवयवक एकः पदार्थोऽणादिप्रत्याहारवत् कामकलेत्युच्यते । इदमेव च समस्तसृष्टिबीजम् । अत एवाकारहकारयोर्मध्ये सर्ववर्णपाठः 'अल्' प्रत्याहारवदिति । ककारस्य लकारादभिन्नत्वात्, क्षकारस्य 'क्ष्' योगरूपत्वान्न तद्बहिर्भावः । एतन्मूलभूत ब्रह्म तु तुरीयबिन्दुरित्युच्यते, तद्रूपाभ्यां शून्यस्वरूपाभ्यामकारहकाराभ्यामुत्पन्ना कामकला व्यक्ताव्यक्तविलक्षणा 'अहं' पदवाच्या इति अकारहकारोभयात्मकत्वं शिवशक्तिरूपद्वयं चाहं पदस्य निष्कृष्टोऽर्थः । अत एव सूक्ष्मादिस्थूलान्तानामखिलसृष्टीनामहंपदवाच्यत्वम् ।

## उपनिषत्स्वहमितिपदस्य निर्देशः

माहेश्वरचतुर्दशसूत्रेष्वादिमोऽकारः, अन्त्यो हकारस्तयोः समाहारः 'अहम्'

---

१. यो॰ हृ॰—१।३६ तः ४० श्लोकाः । २. तत्रैव—१।२४ ।

इति । वेदान्तदर्शने चतुर्षु महावाक्येषु 'अहं ब्रह्मास्मि' इत्यवसानिकोऽन्त्यग्निकश्च वाक्यः । तत्राहमिति ज्ञातेन ब्रह्मणा तादात्म्यं सम्पादयता साधकेनाहमितिवर्णसमाम्नायस्य तात्त्विकपरिज्ञानं व्यज्यते । उक्तश्च बहुत्र उपनिषत्सु—

'ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मीति'[1] ।

'त्वं वा अहमहं वेत्थम्[2]', 'कस्त्वमित्यहमिति होवाच त्वमेवेदं सर्वं तस्मादहमिति सर्वाभिधानम्[3], 'अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम्',[4] इत्याद्युक्तम् ।

## विरूपाक्षपञ्चाशिकायामहमित्यस्य विचारः

पाणिनीयव्याकरणोपजीव्यभूतस्य माहेश्वरचतुर्दशसूत्रघटितस्याल् प्रत्याहारस्थितस्य वर्णसमाम्नायस्यैवाहमितिपदव्यवहारो विरूपाक्षपञ्चाशिकायामपि जातः । तथा हि—

प्रत्यवमर्शात्मासौ चितिः स्वरसवाहिनी परावाग् सा ।
आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा ।।

स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ ।
अहमिति स एक उक्तोऽहन्ता स्थितिरीदृशी तस्य[5] ।। इति ।

अयंभावः—ग्राहकत्वादिविशेषविगलनेन सामान्यरूपा येयं स्वरसवाहिनी चितिः, नेयम् अहमिति प्रतीयते । अतः कथमियमहन्तेत्याशङ्क्याह—प्रत्यवमर्शात्मासावित्यादि । प्रत्यवमर्शात्मा विमर्शस्वभावा । असौ सर्वस्यैव स्वानुभवसिद्धत्वाद् असावित्यध्यक्षतया निर्देष्टुमुचिता । चितिः विगलितचेत्योपरागा चेतनस्य स्वरूपेणावस्थितिः । स्वरसवाहिनी निरोधकाभावादनिशं स्फुरद्रूपा । सा विमर्शमयत्वाद् वाक् । तत्रापि स्वरूपज्योतिष्ट्वेनैव प्रकाशनात् स्वरूपव्यतिरिक्तपश्यन्त्यादिरूपा नेयम्, अपि तु परैव, यदागमः—"स्वरूपज्योतिरेवैषा सूक्ष्मा वागनपायिनी[6], इति । शुद्धवाग्रूपत्वाद् येयं वर्णात्मिका, सा प्रत्याहारयुक्त्या गृहीताभ्यामकारहकाराभ्यामहन्तेति निरुच्यते, न पुनरहमिति प्रतीयमानतयैवेयमहन्ता ।

नन्वहन्ता नामाहमो धर्मः । सः कोऽन्य उपलभ्यते, यः प्रत्यवमर्शरूपचितिव्यतिरिक्तोऽहंव्यपदेशमर्हतीत्यत आह—स्वपरावभासनक्षम इत्यादि । स्वं निकृष्टप्रकाशात्मकं परं च प्रत्यवमर्शादिनीलान्तमवभासयितुं शक्तश्चेतनाचेतनात्मकस्य जगतः स्वात्मभूतो योऽयमस्ति प्रकाशः, स देशकालादिभेदकानां

---

१. बृहदारण्यकोपनिषदि । २. ऐतरेयोपनिषदि । ३. तापनीयोपनिषदि ।
४. छान्दोग्योपनिषदि । ५. विरूपाक्षपञ्चाशिकायां—२। ९-१० ।
६. वा० प०—१।१४२ ।

स्वात्मन्यसम्भवाद् एकोऽद्वितीयः सन्नागमेषु अहमिति आम्नातः। यस्य समनन्तर-निरूपितचरी प्रत्ययमर्शात्मिका दशैव अहन्ता। अत्रायमाशयः—योऽयं प्रत्यवमर्शा-दिनीलान्तस्य वेद्यस्यावभासको वेदनैकस्वभावः सर्वप्रमितिभाक् प्रकाशो नासौ स्वयमिति पर इति वा व्यपदेशमर्हति, तयोर्वेद्यत्वात्। अतः स एक एव, तस्य भेदकस्य प्रमाणस्यासम्भवात्। तस्य प्रत्याहृताभ्यामकारहकाराभ्यामहमित्युक्ति-रागमेषु। तत्रापि यद्यपि अहेति प्रकृतिमात्रमर्थवत्, तथापि केवलायाः प्रकृतेर्व्य-वहारानर्हत्वादहमिति प्रत्ययसध्रीचीनतया व्यवहारः। तस्य कारणतायां येयमुद्-भूतप्रत्यवमर्शता साऽहन्तेति।

एवमेव—

ईश्वरताकर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति।
एतेऽहन्तायाः किल पर्यायाः सद्भिरुच्यन्ते॥

बिन्दुं प्राणं शक्तिं मन इन्द्रियमण्डलं शरीरं च।
आविश्य चेष्टयन्तीं धारय सर्वत्र चाहन्ताम्[1]॥ इत्यादयः।

ननु येयमहन्ता, सा भावनामात्रपरिनिष्पन्नविकासा, न पुनरीश्वरत्वक-र्तृत्वादिधर्मोत्कर्षशालिन्यनुभूयते। अतः कथमेवंविधसिद्धिसम्भव इत्यनास्थां शमयितुं 'ईश्वरताकर्तृत्वम्' इत्याद्युक्तम्। अतोऽत्र येयमहन्ता आख्याता सैव ईश्वरता सैव च कर्तृत्वं स्वातन्त्र्यं चिन्मयत्वं च। यो यः शास्त्रेष्वीश्वरत्वादिः सिद्धयतिशयः स सर्वोऽप्यहन्तामय एव। अत ईश्वरत्वादयः पर्याया वाचकाः। अनेनाहन्तायामीश्वरत्वाद्यननुभवनिबन्धना येयमनास्था सा निरस्ता, यथा यथा प्रत्यभिज्ञानदार्ढ्यं तथा तथा नित्यसिद्धानामीश्वरत्वकर्तृत्वादीनां विभूतीनामावि-र्भाव इत्यासूत्रितं चेति शिवम्।

एवमकारहकारयोरवयवयोरदर्शनेऽपि शास्त्रप्रामाण्यात् सूक्ष्मरूपौ तौ स्त इति स्वीकार्यम्। तस्यैव च हार्दकलायोगे दीर्घताऽपि संपद्यत इति तुरीयस्वरस्य कामकलारूपत्वं मन्त्ररहस्यविद्भिः प्रतिपाद्यते। अत एवाकारहकारयोः काम-कलात्वं सिद्धयति। तद्भूते मन्त्रे विजातीयाक्षरवत्त्वान्यथानुपपत्त्यापि तयोर्गर्भे सूक्ष्मरूपेणान्येषां वर्णानामर्थसृष्टेश्चावस्थानं सिद्ध्यति यथा बटबीजरूपसंपुटे पर्णकाष्ठादेः।

किं च बटादिबीजानां स्फोटेनैवाङ्कुराद्युत्पत्तिरिति बीजस्य पूर्वार्धोत्तरा-र्धयोर्वियोग इत्यविवादम्। तच्चार्धद्वयं महति वृक्षे कस्मिन् कस्मिन् भागेऽस्तीति दुर्ज्ञेयमिति दिक्।

---

१. वि० पं०—१।८७।

## वरिवस्यारहस्ये अहमितिवर्णघटितस्य माहेश्वरसूत्रसमुदायस्य सर्वशक्तिमत्त्वम्

माहेश्वरसूत्रघटितानि अच् हल् वर्णानि विश्वमयानि। अस्यैव माहात्म्यं भट्टनागेशेन लघुशब्देन्दुशेखरे संज्ञाप्रकरणे प्रकटितम्। नागेशोक्तमेव वरिवस्यारहस्ये भास्कररायेणापि समर्थितम्—

अहकारौ शिवशक्ती शून्याकारौ परस्पराश्लिष्टौ।
स्फुरणप्रकाशरूपावुपनिषदुक्तं परं ब्रह्म॥

विश्वसिसृक्षावसतः स्वार्धां शक्तिं विलोकयद् ब्रह्म।
बिन्दू भवति तमिन्दुं प्रविशति शक्तिस्तु रक्तबिन्दुतया॥

एतत् पिण्डद्वितयं विसर्गसंज्ञं हकारचैतन्यम्।
मिश्रस्तु तत्समष्टिः कामाख्यो रविरकारचैतन्यम्॥

एषाहंपदतुर्यस्वरकामकलादिशब्दनिर्देश्या।
वागर्थसृष्टिबीजं तेनाहंतामयं विश्वम्॥

अन्त्यप्रथमे मध्यचतुर्थे मन्त्रेऽपि तौ व्यक्तौ।
तेनाम्बामनुजगतामभेद एवात्र भावार्थः[१]॥ इत्यादिभिः।

श्री महाविद्याया अखिलं शरीरं वर्णमयमेवास्ति। तत्र यद्यपि प्रकाशविमर्शसामरस्यात्मकवस्तुविशेषस्यैव शब्दार्थसृष्टिजनकत्वमविशिष्टम्, तथापि प्रकाशांशस्यैवार्थसृष्टौ विमर्शांशस्यैव शब्दसृष्टौ जनकत्वम्, तयोः परस्परसापेक्षत्वेनैव स्वस्वकार्यजनकत्वस्य श्रुतिस्मृतिसिद्धत्वात्। एकस्य स्वकार्यजनकत्वेऽपरस्य तत्कारणतावच्छेदकत्वमावश्यकम्। एवं च कारणतावच्छेदककारणतयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण द्वयोरपि प्रातिस्विककारणत्वसिद्धिः। तदभिप्रायेणैव हि तन्त्रेष्वन्यतरस्यैव कारणताबोधकानि वचनानीति ज्ञेयम्।

एवञ्च प्रथमं विमर्शशक्तेर्हकार उत्पन्नस्ततः प्रकाशाद् व्योमः, ततो विमर्शात् सकारस्ततः प्रकाशाज्जलम्, ततो विमर्शाल्लकारस्ततः प्रकाशात् पृथिवी इत्येवं क्रमेण पञ्चमहाभूतोत्पत्तौ सत्यामपि हकारवदविमर्शविशिष्टप्रकाशस्यैव व्योमं प्रति कारणत्वादुक्तरीत्या कारणत्वावच्छेदकत्वस्य हकारे सिद्धेर्विनिगमनाविरहात् कारणत्वमपि सिद्ध्यति। एवमेव ककारादिषु द्रष्टव्यम्। न चैवं हकारादेर्वाय्वादिकं प्रत्यपि कारणत्वापत्तिः, उक्तरीत्या परम्परया कारणतायामवच्छेदकत्वात्, एवं व्योमादेरपि ककारादिकं प्रति जनकत्वापत्तिरिति च न वाच्यम्; तेषामन्यथासिद्धत्वादिष्टत्वाद् वा। उक्तञ्च वारिवस्यारहस्ये—

---

१. वरिवस्यारहस्ये—२। ६९ तः ७३ श्लोकाः।

व्योमादिजनकहकरसलार्णँघटनेन पञ्चभूतमयी ।
पञ्चचतुस्त्रिद्व्येकगशब्दादिगुणात्मपञ्चदशवर्णाः[1] ॥ इत्युक्तम् ।

अत्र श्लोके व्योमाकाशः । आदिना वाय्वग्निजलभूमिपरिग्रहः । एतत्पञ्चकस्य जनका ये हकरसलार्णास्तैर्घटनेनेयं विद्या पञ्चभूतमयी पञ्चभूताभिन्ना इति ।

तत्रैव च टीकायाम्—

हकारात् व्योम सम्भूतं ककारात्तु प्रभञ्जनः ।
रेफादग्निः सकाराच्च जलतत्त्वस्य संभवः ।
लकारात् पृथिवी जाता तस्माद्विश्वमयी च सा ॥ इत्युक्तम् ।

अत्रायमभिसन्धिः— आकाशः पञ्चविधः, वायुश्चतुर्विधः, अग्निस्त्रिविधः, जलं द्विविधम्, पृथिव्येकविधेति पञ्चीकरणवार्तिकविधिना बोध्यम् । एषां पञ्चादिसंख्याकानामाकाशादीनां गुणाः शब्दादयोऽपि तादृशसंख्याका एव भवन्ति । तेन व्योमादिषु पञ्चसु पञ्च शब्दाः, वाय्वादिषु चतुर्षु चत्वारः स्पर्शाः, अग्न्यादिषु त्रिषु त्रीणि रूपाणि, जलभूम्योर्द्वौ रसौ, पृथिव्यामेको गन्ध इत्येवं संहत्य पञ्चदशगुणा विद्यास्थैः पञ्चदशभिर्वर्णैरभिन्ना इति पञ्चदशानां वर्णानामुपपत्तिः । एवं पञ्चदशभिर्गुणैः पञ्चदशानां वर्णानामभेद उपादानोपादेयभावाद् वाच्यवाचकभावाद्धर्मधर्मिभावाद् वा वाच्यः । स च न सम्भवति । तथा हि—अत्र हि पञ्चदशसंख्यात्वमचां प्राधान्येन व्यञ्जनानां तद्भक्तत्वेन चोपपादनीयम्, 'एष वै सप्तदशः प्रजापतिः' इति वेदे, 'चतुरश्छयतावाद्यक्षरलोपश्च' इति पाणिनीयसूत्रवार्तिके, 'चतुःशतमुत्कृतिः' इत्यादिच्छन्दःसूत्रेषु च तथैव निर्णीतत्वादित्थस्यार्थस्य छन्दोभास्करे भास्कररायभिः सविस्तरमुपपादनात् । न ह्यत्रत्यानां पञ्चदशानामचां गुणजनकत्वं गुणवाचकत्वं गुणाश्रयत्वं वा सम्भवति, मानाभावात् । ननु हकारपञ्चकस्य व्योमपञ्चकजनकत्वेन तद्वाचकत्वेन चाभेदे सिद्धे तद्गुणैः शब्दैरपि सहाभेदः सिद्धप्रायः एव, गुणगुणिनोरभेदेन गुणस्य गुण्यभिन्नाभिन्नत्वस्य न्यायसिद्धत्वात् । यथैव वाच्यवाचकभावस्याभेदे नियामकता तथैव लक्ष्यलक्षकभावस्यापि । अस्ति हि प्रकृते हकाराणां शब्दलक्षकत्वम्, शब्दस्य हकारशक्यसम्बन्धित्वात् । अत एव योगिनीहृदये 'व्योमबीजैस्तु विद्यास्थैर्लक्षच्छब्दपञ्चकम्' इत्युक्तम् ।

अयमेव प्रकारः हादिविद्या कादिविद्या च भेदेन योगिनीहृदयतन्त्रे विशदेन निरूपितः । अत्रैव विमर्शेन चक्रमयीसृष्टिः श्रीयन्त्रस्य च सिद्धिः सम्पद्यते ।

## नित्याषोडशिकार्णवे माहेश्वरसूत्रोक्तवर्णानां स्थितिसमीक्षणम्

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका[2] ॥

१. वरिवस्यारहस्ये —२।७४ ।

२. तन्त्रसद्भाववचनम् नित्याषोडशिकार्णवभूमिकायां ६२ पृष्ठे द्रष्टव्यम् ।

इति तन्त्रसद्भावववचनात् शिवशक्त्यादिप्रतिनियतव्यपदेशासहिष्णुरनाख्यः परपरामर्शात्मनाऽनुत्तरः प्रकाश एव परं तत्त्वम्। स एव स्वस्वातन्त्र्याद् विश्वमवविभासयिषुः प्रथमं शिवशक्तिरूपतां स्वात्मन्यवभासयति, अकारादिहकारान्तां मातृकामुल्लासयति। अत्रानुत्तरलिपिरकारः, विमर्शलिपिश्च हकारः। एतमेवार्थम्—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः[1] ॥ इति संकेत पद्धतिवचनमुपोद्बलयति।

वर्णसंघट्टशरीरा शब्दराशिर्मातृका मालिनी कालिकेत्यादिभिः पदैस्तत्र तत्र शास्त्रेषूच्यमाना परभैरवीयपरावागात्मिका मातृका ज्येष्ठारौद्रयाम्बिकाख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयकारणभूता वर्णसंघट्टशरीराणां सप्तकोटिमहामन्त्राणां जननी। तथा च परावागात्मनाहतभट्टारकपरमशिवस्वरूपा षट्त्रिंशत्तत्वप्रसरणहेतुभूता संविदेव नित्याषोडशिकार्णवे ऋजुविमर्शिनी टीकायाञ्च मातृकापदेन व्यवहृता। एवं हि ग्रन्थे प्रारम्भे एकादशश्लोकेषु महामहिमामयीमातृकैव स्तुता दृश्यते। यथा च—

गणेशग्रहनक्षत्र-योगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम्[2] ॥

किं स्वरूपा च सा मातृकेति जिज्ञासायाम्—माति त्रातीति मातृका। स्वतेजोविजृम्भितानुग्राह्यजीवराशिं माति त्रातीति मातृकेत्यर्थः। एवञ्च—

प्रणमामि महादेवीं मातृकां परमेश्वरीम्।
कालहल्लोहलोल्लोलकलनाशमकारिणीम्[3] ॥

इत्यत्र 'कालहल्लो इत्यादिपदस्य' व्याख्यानन्त्वर्थरत्नावल्यां यथा—कालस्य हल्लोहलः कालहल्लोहलः, तस्य उल्लोलः कालहल्लोहलोल्लोलः, उल्लोलो यथाभूतस्तेन कलना बन्धः, तस्याःशमं करोति। प्रकारान्तरेण च—कालस्य हल्लोहलो वेगः, तस्य उल्लोल आवर्तविवर्तनम्, चञ्चलीभाव इति, तेन कलना बन्धनम्, तस्याः शमो नाश इत्यर्थः। शमकारिणीमिति पदस्य व्याख्यानन्तु—तस्य शान्तिसम्पादनस्वभावाम्। तस्मादयञ्च निष्कृष्टार्थः

तादृशीं मातृकां शमकारिणीं प्रणमामि या स्वभक्तान् मृत्युवक्त्रात् उत्तारयति। तथा चात्र श्लोके द्वितीयपूर्वार्धेन प्रथमसूत्रप्रतिपादितं वर्णक्रममनूद्योत्तरार्धेन तदुपासकस्य मृत्युत्तरणाख्यं फलं दर्शयति। कालहल्लोहलः। कालस्य

---

१. नित्याषोडशिकार्णवभूमिकायां—सङ्केतपद्धवितचनम् पृ० ६२।

२. नित्यषो०—१।१।    ३. तत्रैव— १।२

हल्लोहलः कालहल्लोहलः । हल्लोहलो वेगः । उल्लोलः तस्य कालस्यातिरेकः । कलना तेन बन्धनम् तस्य शमकारिणीमिति तस्य शान्तिसम्पादनस्वभावामित्यर्थः । नाशयतीत्यन्तिकोऽर्थः, मृत्युवक्त्रात् स्वभक्तं तारयतीति तात्पर्यम् ।

एतादृश्या मातृकाया अक्षराणां मध्ये एकाक्षरमात्रेऽपि संसिद्धे सम्यक् सिद्धिं प्राप्तः सन् 'रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः' साधकः स्पर्धां विधत्ते । तथा च 'तेजस्विता निर्विषीकरणाह्लादसौभाग्याप्रधृष्यत्वौज्ज्वल्यपालकत्वाख्यवान्तरफलं वर्णक्रमोपासकस्य सम्भवतीति[1] तात्पर्यम् ।

एवञ्च यस्याः पूर्णाहन्तायाः पराशक्तेः कलाभूतानि यान्यक्षराणि तान्येव विश्वसूचकतया तेषु प्रकर्षेण तादात्म्येन एतज्जगत्त्रयं ब्रह्माण्डादिकटाहान्तं समुल्लसति । किञ्च, मूलाधारादारभ्य ब्रह्मरन्ध्रपर्यन्तमित्यर्थः । इयमेव मातृका पञ्चाशद् रुद्राणां श्रीकण्ठादीनामपि जननी । उक्तञ्च —

यदक्षरमहासूत्रप्रोक्तमेतज्जगत्त्रयम् ।
ब्रह्मादिकटाहान्तं तां वन्दे सिद्धमातृकाम्[2] ।। इति ।

वर्णात्मिकेयं मातृका सप्तवर्गात्मिका, अष्टवर्गात्मिका, नववर्गात्मिका च तन्त्रशास्त्रे मतमतान्तरेण निरूपिता । प्रपञ्चसारे सप्तवर्गात्मिकामातृकास्तुता । तथा हि—'अकचटपयाद्यैः सप्तभिवर्णवर्गैः[3]' इति । शैवेषु अष्टवर्गात्मिका, नित्याषोडशिकार्णवे चाष्टवर्गात्मिका मातृका उक्ता । यथा हि—

वर्गानुक्रमयोगेन यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्धचष्टकेश्वरीम्[4] ।। इत्युक्तम् ।

[5]मालिनीविजये च नववर्गात्मिका । सङ्केतपद्धतौ अष्टवर्गात्मिका नववर्गात्मिका वा मातृका स्वीकृता । तत्राष्टवर्गात्मिकैव मातृका प्रायशोऽद्यत्वे तान्त्रिका आमनन्ति । अष्टवर्गश्च 'अकचटतपयशादयः' इति ।

## परात्रिंशिकादृष्टचा माहेश्वरसूत्रोक्तवर्णसमाम्नायसमीक्षणम्

तथा च ग्रन्थार्थः - अभिधेयं 'त्रिशिका' इति । त्रिशिका नाम तिसृणां शक्तीनाम् इच्छा-ज्ञान-क्रियाणां सृष्ट्यादयः सृष्टिस्थितिसंहारतिरोधानानुग्रहाः सृष्टयादयः, उद्योगादयः उदयावभासचर्वणकालग्रासस्वरूपविश्रान्तयः, एभिर्नामभिर्वाच्यानाम् ईशिका ईश्वरी, ईशना च ईशितव्याव्यतिरेकेणैव भाविनी इति एतच्छक्तिभेदत्रयोत्तीर्णा तच्छक्त्यविभागमयी संविद् भगवती भट्टारिका परा अभिधेयम्, तद्योगादेव च इदमभिधानं त्रिशिकाख्यम् । त्रिंशिका इत्यपि केचन

---

१. नित्याषो०—१।३ । २. तत्रैव—१।५ । ३. प्रपञ्चसार०—१।१ ।
४. नित्याषो०—१।११ । ५. मालिनीविजयोत्तरे—३।११ ।

पठन्ति; अक्षरवादसाम्यात् च निरुक्तमाहुः—तिस्रः शक्तीः कायति इति त्रिंशिका, न तु त्रिंशश्लोकयोगात् त्रिंशिका; एतावतोऽपि त्रिंशिकार्थत्वात्। तथा हि श्रीतन्त्रसारे उक्तम्—

त्रिंशिकार्थस्त्वया प्रोक्तः सार्धकोटिप्रविस्तरः॥ इति।

एवं हि पराया आद्यायास्त्रिपुरसुन्दर्या लीलाविलासोऽयं त्रिंशिकाग्रन्थः, वर्णसमाम्नायपर इत्यवगन्तव्यम्।

वर्णमालामयी अक्षमाला मातृका वा न केवलं सामान्यजनैरपितु शिवेनाप्यनुष्ठेया। अयमेव भावोऽन्यत्रापि परात्रिंशिकायामुक्तम्। तथा हि—

अनुत्तरं कथं देव सद्यः कौलिकसिद्धिदम्।
येन विज्ञातमात्रेण खेचरीसमतां व्रजेत्[1]॥ इति।

**अत्रायमाशयः**—परमेश्वरः प्रपञ्चकृत्यमयः, स हि सतम् अनुग्रहमय्या परारूपया शक्त्या आक्रान्तो वस्तुतोऽनुग्रहैकात्मैव, न हि शक्तिः शिवात् भेदमामर्शयेत्। सा च शक्तिः लोकानुग्रहमयी प्रथमतः परामर्शमय्या पश्यन्त्या आसूत्रयिष्यमाणानन्तशक्तिशताविभिन्ना, प्रथमतरं परमहामन्त्रमय्याम् अदेशकालकलितायां संविदि निरुढा, तावत् पश्यन्त्युद्भविष्यदुक्तिप्रत्युक्त्यविभागेनैव वर्तते। सैव च सकलप्रमातृसंविदद्वयमयी सततमेव वर्तमानरूपा, ततस्तु पश्यन्ती यद्यत् अभीप्सितं तत्तदेव समुचितकारणकारणनियमप्रबोधितं बोधसूत्रमात्रेण विमृशति, यथा अनेकभावाभावज्ञानसंस्कारसंस्कृताया मेचकधियः स्मृतिबीजप्रबोधकौचित्यात् किञ्चिदेव स्मृतिर्विमृशति; नहि प्रथमज्ञानकाले भेदोऽत्र अस्फुरत्, यत्र वाच्यवाचकविशेषयोः अभेदः, मध्यमा पुनः तयोरेव वाच्यवाचकयोर्भेदमादर्श्य समानाधिकरण्येन विमर्शव्यापारा; वैखरी तु तदुभयभेदस्फुटतामय्येव, इति तावत् व्यवस्थायां स्वसंवित्तिसिद्धायां यैव परावाग्भूमिः, सैव मायीयशब्दशक्तिपरमार्थस्वभावासांकेतिकाकृतकपारमार्थिकसंसारसारा वक्ष्यमाणनयेन मन्त्रवीर्यभूतांशचोदिता, तदुत्तरं पश्यन्त्यादिदशास्वपि वस्तुतो व्यवस्थिता, तया विना पश्यन्त्यादिषु अप्रकाशतापत्त्या जडताप्रसङ्गात्। तत्र च इदम्, एवम्, अत्र, इदानीम् इत्यादिभेदकलना न काचित्; तत एव च परममहामन्त्रवीर्यविसृष्टिरूपाया आरभ्य वैखरीप्रसृतभावभेदप्रकाशपर्यन्तं यत् इयं स्वचमत्कृतिमयी स्वात्मन्येव प्रकाशनमये विश्रम्य स्फुरति, तदेवं स्फुरितमविच्छिन्नतापरमार्थम् 'अहम्' इति। तन्मध्य एव तु पश्यन्त्यां भेदांशस्यासूत्रणम्, यत्र च मध्यमायां भेदावभासः, तत्र उभयत्र ज्ञानक्रियाशक्तिमये रूपे सदाशिवेश्वरसारे सैव 'अहम्' इति चमत्कृतिः अन्तःकृतानन्तविश्वेदन्ताचमत्कृतिपूर्णवृत्तिः, तत् पश्यन्तीमध्यमात्मिका स्वात्मानमेव वस्तुतः परसंविदात्मकं परैव च संवित् 'देवी' इत्युच्यते। इयता पश्यन्त्यादिसृष्टिक्रमेण

---

१. परात्रि—१।

बाह्यनीलादिपर्यन्तेन स्वविमर्शानन्दात्मना क्रीडनेन, सर्वोत्तीर्णत्वेन सर्वोत्कर्षावस्थितेर्भगवतो भैरवस्य सर्वोत्कर्षेण स्थातुमिच्छया विजगीषात्मना, इयदनन्तज्ञान-स्मृतिसंशयनिश्चयादिव्यवहारकरणेन, सर्वत्र भासमाने नीलादौ तन्नीलाद्यात्म-भासनरूपेण द्योतनेन, सर्वैरेव तदीयप्रकाशावेशैस्तत्प्रवणैः स्तूयमानतया तदुक्तम्—

स्तुत्याख्यं नास्ति वस्त्वन्यद् व्यापकात्परमेश्वरात् ।
सर्वोत्तीर्णादिरूपेण शिवोऽहमिति हि स्तुतिः[1] ।। इति ।

यथेच्छं च देशकालावच्छेदेन सर्वात्मतागमनेन; अत एव मुख्यतो भैरवनाथस्यैव देवत्वमिष्यते, तच्छक्तेरेव भगवत्या देवीरूपता । यदुक्तम्—'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु' । तथा चैवंविधमुख्यपारमैश्वर्यमयदेवत्वांशांशिकानुग्रहात् विष्णुविरिञ्च्यादिषु देवताव्यवहारः । एवं भगवती पश्यन्ती मध्यमा च स्वात्मानमेव यदा विमृशति 'अहमेव परावाग्देवतामयी एवमवोचम्' इति, तदा तेन रूपेण उल्लसन्मायारम्भतया स्वात्मापेक्षतया तन्मायीयभेदानुसारात् तामेव पराभुवं स्वात्ममयीं भूतत्वेनाभिमन्वाना, भेदावभासप्राणनान्तर्बहिष्करणपथ-व्यतिवर्तिनीत्वात् परोक्षतया सूर्यादिसंचारायत्तदिनविभागकृताद्यतनानवच्छेदात् ब्रह्मणोऽनेककल्पसम्मितमहः, ततोऽपि विष्णुप्रभृतेः अन्तश्च प्राणचारादौ, यतो हि बाह्यदिने सशतषट्कैकविंशसहस्रप्राणचारास्तत्रैव षष्टयब्दोदय इति प्राणीयशत-सहस्रांशेऽपि अहर्व्यवहार इति अवस्थितम्, काल्पनिकं चाद्यतनत्वम् अकाल्पनिके संविद्वपुषि कथम् ? इति न्यायात् भूताद्यतनपरोक्षार्थपरिपूरणात् परोक्षोत्तम-पुरुषक्रमेण विमृशेत्, 'अहमेव सा परावाग्देवीरूपैव सर्ववाच्यवाचकविभक्ततया एवमुवाच' इति तात्पर्यम् । 'सुप्तोऽहं किल विललाप' इति हि एवमेव उपपत्तिः ।

तथा चात्र ध्येयम्—ताम् अतीतामवस्थां न स्मरति प्रागवेद्यत्वात् । इदानीं पुरुषान्तरकथितमाहात्म्यात् अतिविलापगानादिक्रियाजनितगद्गदिकादिदेहविक्रि-यावेशेन वा तदवस्थां चमत्कारात् प्रतिपद्यते, न हि अप्रतिपत्तिमात्रमेव एतत् 'मत्तः सुप्तो वा अहं किल विललाप' इति मन्दस्वप्नमूर्च्छादिषु हि वेद्यविशेषानव-गमात् परोक्षत्वम्, परावस्थायां तु वेद्यविशेषस्य अभाव एव इति केवलमत्रवेदक-तादात्म्यप्रतिपत्या तुर्यरूपत्वात्, मदादिषु तु मोहावेशप्राधान्यात् इति इयान् विशेषः, परोक्षता तु समानैव । एवं सर्व एव प्रमाता गुरुशिष्यादिपदे अन्यत्र वा व्यवहारे स्थितः, सर्वकालमेव यत् किञ्चित् कुर्वाणः एनामेव संविदमनुप्रविश्य सर्वव्यवहारभाजनं भवति । अतः तामेव वस्तुतो विमृशति देवी, 'उवाच' इति यावदुक्तं स्यात्, अहमेव सततं सर्वमभेदेन विमृशामि पराभूमौ, अन्यथा पश्यन्ती मध्यमा भूमिगं स्फुटमिदं प्रथनं न स्यात् । अतोऽत्र देवी-भैरव इति पदाभ्याम् 'अहम्' तत्त्वं विज्ञापितं भवतीति दिक् ।

---

१. तत्रैव टीका०—पृ० ६ ।

एतद्धि 'अहं' तत्वं परमं गुह्यमिति परात्रिंशिकायामुक्तम् 'एतद्गुह्यं महागुह्यम्[1]' इत्यादिभिः। अत्र गुह्यमप्रकटम्, यतो हि गुहायां मायायां स्वरूपापरिज्ञानमय्यां सत्यां स्थितमपि अप्रकटम्। अतः सर्वथा हि प्रकाशस्वरूप आत्मा ( शिवः ) तावत् प्रकाशत एव, न केनापि अंशेन न प्रकाशते इति, अप्रकटमिति सर्वथा हृदयङ्गमीभावमप्राप्तमित्यर्थः। अत आत्मविश्रान्तिरूपकं स्वाभाविकाकृत्रिमपरपरवाङ्मन्त्रवीर्यचमत्कारात्मकम् 'अहम्' इति पदम्। तदुक्तम्—

प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः[2] ॥ इति।

स अहमिति शिव एव—

तयोर्यद्यामलं रूपं स संघट्ट इति स्मृतः।
आनन्दशक्तिः सैवोक्ता यतो विश्वं विसृज्यते[3] ॥ इत्युक्त्या प्रसरात्मना रूपेण विसर्गरूपतामश्नुवानो विसर्गस्यैव कुण्डलिन्यात्मक—ह-शक्तिमयत्वात् पुनरपि तच्छाक्तप्रसराभेदवेदकरूपबिन्द्वात्मना नररूपेण ( वर्णरूपेण ) प्रसरति। एतदेव तत्त्वमन्यत्राप्युक्तम्। तथा हि—

इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम्[4] ॥ इत्युक्तम्।

ईश्वरप्रत्यभिज्ञायामपीदमेवतत्त्वमुपदिशति—

घटोऽयमित्यध्यवसा नामरूपातिरेकिणी।
परेशशक्तिरात्मैव भासते न त्विदन्तया[5] ॥ इत्यनेन।

एतदेवतत्त्वं श्रीसोमानन्दपादैः 'शिवदृष्टिः' इति ग्रन्थे 'अबीजं शुद्धशिवरूपम्' इत्यनेनोक्तम्।

'अहं' पदस्य सृष्टौ अन्वयं संयोजयन् परात्रिंशिकायामाह—'नर-शक्ति-शिवात्मकं हि इदं सर्वं त्रिकरूपमेव जगत्। तत्र भेदप्रधानो नरः, भेदाभेदप्रधाना शक्तिः, केवलमभेदप्रधानः शिव इति। तदुक्तम्—

विभागाभासने चास्य त्रिधावपुरुदाहृतम् ॥ इति।

तत्र यत् केवलं स्वात्मनि अवस्थितं तत् केवलं जडरूपयोगिमुख्यतया नरात्मकं घटः तिष्ठति इतिवत्, एष एव प्रथमपुरुषविषयः शेषः। यत्पुनरिदमित्यपि भासमानं[6], यदामन्त्र्यमाणतया आमन्त्रकाहंभावसमाच्छादिततत्तद्भिन्नेदं भावं

---

१. परात्रिं० श्लो०—२। २. तत्रैव टीका०—पृ० ५५। ३. तत्रैव—पृ० ५६।
४. तत्रैव। ५. ई० प्र०—१।५।२०।
६. 'इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता।
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ॥ ( परात्रिं० पृ० ७४ )

युष्मच्छब्दव्यपदेश्यं तच्छाक्तं रूपं, त्वं तिष्ठसि इत्यत्र हि एष एव युष्मच्छब्दार्थः, आमन्त्रणतत्त्वं च। तथा हि यथा अहं तिष्ठामि तथैव अयमपि इति, तस्यापि अस्मद्रूपात्रच्छिन्नाहं भावचमत्कारस्वातन्त्र्यमविच्छिन्नाहं चमत्कारेणैव अभिमन्वान आमन्त्रयते, यथार्थेन मध्यमपुरुषेण व्यपदिशति, सेयं हि भगवती परापरा, सर्वथा पुनरविच्छिन्नचमत्कारनिरपेक्षस्वातन्त्र्याहं विमर्शे अहं तिष्ठामि इति पराभट्टारिकोदयः, यत्र उत्तमत्वं पुरुषस्य, यदुक्तम् —

> यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
> अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। इति ।

अतः स्वतन्त्रप्रकाशघनाविनश्वरवस्तुतत्त्वं हि परमार्थः, यतो हि शिवः अर्थस्वरूपः, शक्तिश्च वर्ण-शब्दरूपा सत्वादर्थ एव स्वस्वातन्त्र्यात् गृहीतदेहाद्यहंभावोऽपि अहमित्युच्यते। शिवशक्त्योरभेदे सति ऐक्यात् क्षराक्षररूपात् उभयोरपि उत्तमत्वम् 'अस्मि' इत्यस्मदर्थे उक्तम्। तस्मादहमित्यनेन शिवस्येदमित्यनेन शक्त्या सर्वत्र शैव-शाक्तागमेषु बोधात् युस्मदस्मद्शब्दयोरलिङ्गता संगच्छत इति ज्ञेयम्।

किञ्च, 'अहम्' इति प्रकाशैकवपुः शिवः, 'म ह् अ' इति विमर्श स्वभावा शक्तिः। अहमेव तत्त्वं संहाररूपकलनेन 'म ह् अ' इति संपद्यते। तच्च नरात्मकं लीनं बिन्द्वात्मशक्तौ 'म' इति कुण्डलिनी महाशक्तिः, 'ह्' इति कलारूपायां प्रविश्य परिपूर्णनिर्गलचमत्कारे सर्वाविच्छिन्ने 'अ' इत्यनुप्रविष्टं तथा भवति। तदेवं भगवती परावाग्भूमिः गर्भीकृत स्वस्वातन्त्र्यसत्तोद्भविष्यत्पश्यन्त्यादिविनिविष्टपरापराभट्टारिकादिप्रसरात् तद्गर्भीकारवशाविवादघटितसकलभूतभुवनभावादिप्रपञ्चप्रबोधैक्यचमत्कारसारा परमेश्वरभैरवभट्टारकाविर्भावप्रथिततथाविधाद्भुतभूतपरमार्थस्वरूपा स्वात्मविमलदर्पणनिर्भासितानन्तसृष्टिस्थितिसंहारैक्यमयमहासृष्टिशक्तिरादि-क्षान्तरूपा 'अहन्ता' इत्युच्यते। एतदेव स्वरव्यञ्जनवर्णसमुदायघटकमनन्तजगज्जातं तत्त्वं विभज्य निरूप्यते —

'अकारादि विसर्गान्तं शिवतत्त्वम्, कादि ङान्तं धरादिनभोऽन्तं भूतपञ्चकम्, चादि-ञान्तं गन्धादिशब्दान्तं तन्मात्रपञ्चकम्, टादि-णान्तं पादादिवागन्तं कर्माक्षपञ्चकम्, तादि-नान्तं घ्राणादिश्रोत्रान्तं बुद्धिकरणपञ्चकम्, पादि-मान्तं मनोऽहङ्कारबुद्धिप्रकृतिपुरुषाख्यं पञ्चकम्, वाय्वादिशब्दवाच्या यादयो वकारान्ता रागविद्याकलामायाख्यानि तत्त्वानि, धारयन्ति पृथग्भूततया अभिमानयन्ति इति धारणानि, द्वौ अत्र णिचौ प्रयोज्यप्रयोजकभावद्वैरूप्यात्। तथा हि—ध्रियन्ते स्वात्मनि एव सर्वे भावाः प्रकाशात्मनि परमपरिपूर्णे पदे भैरवात्मनि सर्वात्मनि[1]' इति।

---

१. परात्रिं०—पृ० ११२-११३।

माहेश्वरसूत्रघटितो वर्णसमाम्नायो माहेश्वरप्रयुक्तत्वादीश्वरस्वरूप एवेति विमृशन्नाह। यथोक्तम्—

अत्रापरत्वं भावानामनात्मत्वेन भासनात्।
परताहन्तयाच्छादात्परापरदशा हि सा[1] ॥ इति।

अत्र परत्वं पूर्णत्वमनन्यापेक्षाहमिति, अपरत्वमपूर्णतान्यापेक्षतेदमिति। तथैव ईश्वरप्रत्यभिज्ञायामपि – 'सामान्याधिकरण्यं च सद्विद्याहमिदंधियोः' इति प्रकाशस्य यदात्ममात्रविश्रमणेऽनन्योन्मुखः स्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽहमित्युच्यते, यस्त्वन्योन्यमुखः स इदमिति। स च स्वप्रकाशनमात्रे पुनरन्योन्मुखे रूपे विश्राम्यति परमार्थतः। तत्राद्ये विमर्शे शिवतत्त्वम्, द्वितीये विद्येश्वरता मध्यमे तु रूपेऽहमिदमिति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथे ईश्वरभट्टारके च, इदं भावस्य तु ध्यामलाध्यामलताकृतो विशेषः—ये एते अहमिति इदमिति धियौ तयोर्मायाप्रमातरि पृथगधिकरणत्वम्, अहमितिग्राहके इदमिति च ग्राह्ये तन्निरासेन चैकस्मिन्नैवाधिकरणे यत्संगमनं संबन्धरूपं तत् सती शुद्धा विद्या अशुद्धविद्यातो मायाप्रमातृगताया अन्यैव। तत्र यदाहमित्यस्य यदधिकरणं चिन्मात्ररूपं तत्रैवेदमंशमुल्लासयति तदस्यास्फुटत्वात् सदाशिवता, अहमिदमिति इदमहमिति तु इदमंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्शं निषिञ्चति तदेश्वरतेति विभागः[2]' इति।

अत उक्तम्—

कथयामि वरारोहे यन्मया जप्यते सदा।
अकारादिक्षकारान्ता मातृका वर्णरूपिणी ॥

चतुर्दशस्वरोपेता बिन्दुत्रयविभूषिता।
कलामण्डलमास्थाय शक्तिरूपं महेश्वरि ॥

ककारादिक्षकारान्ता वर्णास्तु शक्तिरूपिणः।
व्यञ्जनत्वात् सदानन्दोच्चारणं सहते यतः ॥

उच्चारे स्वरसम्भिन्नास्ततो देवि न संशयः।
पञ्चाशद्वर्णभेदेन शब्दाख्यं वस्तु सुव्रते ॥

अकारः प्रथमं देवि क्षकारोऽन्त्यस्ततः परम्।
अक्षमालैति विख्याता मातृका वर्णरूपिणी[3] ॥ इति।

---

१. परात्रिं० टी०—पृ० १३१। २. परात्रिं० टीका—पृ० १३१-१३२।

३. परात्रिंशिकाटीकायां पृ० १९४।

एवमेवैतद् तच्छिवतत्त्वन्तदनन्तविचित्रस्वातन्त्र्यस्फारस्फुरणशक्तिचमत्कारभरितोपात्तभैरवभावं गम्यते । एतदागमसर्वस्वप्राणतयैव युक्तियुक्ततया हृदयङ्गमं कर्त्तव्यम् । स एष परमेश्वरो विसृजति विश्वं वर्णरूपेण, तच्च धरादिशक्त्यन्तं कादिक्षान्तरूपमिति एतावती विसर्गशक्तिः 'षोडशीकला' इति गीयते । एषा हि शक्तिर्नहि सांख्येया, नापि वैदान्तिकी दृक्, अपितु शैव्यैव । विसर्गशक्तिरेव च पारमेश्वरी परमानन्दभूमिबीजम् । एवं हि अकारादिरूपं घनतापत्या योनिरूपतां गृहीत्वा स्वरूपाप्रच्युतं तदेव स्वस्वरूप एव योनिरूपे संक्रामद् विसर्गपदमित्युच्यते । तदुक्तं यथा—

स विसर्गो महादेवि यत्र विश्रान्तिमृच्छति ।
गुरुवक्त्रं तदेवोक्तं शक्तिचक्रं तदुच्यते[1] ॥ इति ।

अत्राकारस्यैव घनता 'कवर्गः' कण्ठ्यत्वात्, इकारस्यैव घनता 'चवर्गः' तालव्यत्वात्, उकारस्य 'पवर्गः' औष्ठ्यत्वात्, ऋकारस्य 'टवर्गः' मूर्धन्यत्वात्', लृकारस्य 'तवर्गः' दन्त्यत्वात्, 'यशौ' चवर्गस्यान्तः, 'रशौ' टवर्गस्य, 'लसौ' तवर्गस्य, वकारोऽपि 'तपवर्गयोः' घनता । तदुक्तं टीकायाम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च[2] ॥ इति ।

अत उक्तम्—अकुहविसर्गाः कण्ठ्याः । इचुयशास्तालव्याः । ऋटुरषा मूर्धन्याः । लृतुलसा दन्त्याः । उपूपध्मानीया ओष्ठ्याः । ञमङणना नासिक्याः । ऐदैतोः कण्ठतालव्यौ । ओदौतौ कण्ठ्योष्ठौ, जिह्वामूलीयमेव, जिह्वामूल्यम् । अनुस्वारो नासिक्यः इति ।

एवं हि क्रियाशक्तिरेव कवर्गादिषट्कक्रमेण पञ्च-पञ्च प्रसृता षड्गुणिता सती ककारमारभ्य ज्ञ पर्यन्तगा षड्भिः सह षट्त्रिंशत् भवन्तीति । तदेवं शिवबीजमेव स्वातन्त्र्यात् घनीभूततया क्वचिद्वपुषि शाक्तरूपे कुसुमतया तिष्ठत् योनिरित्यभिधीयते, तदेव हि पुष्पं पूर्वोक्तनयेन ग्राह्यग्रहणग्राहककोणत्रयमयं वस्तुतः प्रसूतिपदं बीजसंमिश्रतयैव भवति तदैव पुष्परूपत्वात्, अन्यदा तु योग्यतयैव योनिरूपतया व्यपदेशः । तथा च तत् कुसुममेव त्रिकोणतया योनिरूपं तत्स्फुटीभूतविभक्तग्राह्यादिरूपसोमसूर्याग्निसृष्टिस्थितिसंहृति इडापिङ्गलासुषुम्नाधर्माधर्मशबलादिकोणत्रितया पारमेश्वरी भैरवी भट्टारिका मुद्रा तद्रूपयोन्याधारतया योनिरिति निर्दिष्टा । अयमेव भावः कुब्जिकामतेऽपि द्रष्टव्यः । तथा हि—

---

१. परात्रिं० टीका—पृ० १८२ २. तत्रैव ।

माहेश्वरसूत्रघटितो वर्णसमाम्नायो माहेश्वरप्रयुक्तत्वादीश्वरस्वरूप एवेति विमृशन्नाह। यथोक्तम्—

अत्रापरत्वं भावानामनात्मत्वेन भासनात्।
परताहन्तयाच्छादात्परापरदशा हि सा[1] ॥ इति।

अत्र परत्वं पूर्णत्वमनन्यापेक्षाहमिति, अपरत्वमपूर्णतान्यापेक्षतेदमिति। तथैव ईश्वरप्रत्यभिज्ञायामपि – 'सामान्याधिकरण्यं च सद्विद्याहमिदंधियोः' इति प्रकाशस्य यदात्ममात्रविश्रमणेऽनन्योन्मुखः स्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽहमित्युच्यते, यस्त्वन्योन्यमुखः स इदमिति। स च स्वप्रकाशनमात्रे पुनरन्योन्मुखे रूपे विश्राम्यति परमार्थतः। तत्राद्ये विमर्शे शिवतत्त्वम्, द्वितीये विद्येश्वरता मध्यमे तु रूपेऽहमिदमिति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथे ईश्वरभट्टारके च, इदं भावस्य तु ध्यामलाध्यामलताकृतो विशेषः—ये एते अहमिति इदमिति धियौ तयोर्मायाप्रमातरि पृथगधिकरणत्वम्, अहमितिग्राहके इदमिति च ग्राह्ये तन्निरासेन चैकस्मिन्नैवाधिकरणे यत्संगमनं संबन्धरूपं तत् सती शुद्धा विद्या अशुद्धविद्यातो मायाप्रमातृगताया अन्यैव। तत्र यदाहमित्यस्य यदधिकरणं चिन्मात्ररूपं तत्रैवेदमंशमुल्लासयति तदस्यास्फुटत्वात् सदाशिवता, अहमिदमिति इदमहमिति तु इदमंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्शं निषिञ्चति तदेश्वरतेति विभागः[2]' इति।

अत उक्तम्—

कथयामि वरारोहे यन्मया जप्यते सदा।
अकारादिक्षकारान्ता मातृका वर्णरूपिणी ॥
चतुर्दशस्वरोपेता बिन्दुत्रयविभूषिता।
कलामण्डलमास्थाय शक्तिरूपं महेश्वरि ॥
ककारादिक्षकारान्ता वर्णास्तु शक्तिरूपिणः।
व्यञ्जनत्वात् सदानन्दोच्चारणं सहते यतः ॥
उच्चारे स्वरसम्भिन्नास्ततो देवि न संशयः।
पञ्चाशद्वर्णभेदेन शब्दाख्यं वस्तु सुव्रते ॥
अकारः प्रथमं देवि क्षकारोऽन्त्यस्ततः परम्।
अक्षमालैति विख्याता मातृका वर्णरूपिणी[3] ॥ इति।

---

१. परात्रिं० टी०—पृ० १३१। २. परात्रिं० टीका—पृ० १३१-१३२।

३. परात्रिंशिकाटीकायां पृ० १९४।

एवमेवैतद् तच्छिवतत्त्वन्तदनन्तविचित्रस्वातन्त्र्यस्फारस्फुरणशक्तिचमत्कारभरितोपात्तभैरवभावं गम्यते। एतदागमसर्वस्वप्राणतयैव युक्तियुक्ततया हृदयङ्गमं कर्त्तव्यम्। स एष परमेश्वरो विसृजति विश्वं वर्णरूपेण, तच्च धरादिशक्त्यन्तं कादिक्षान्तरूपमिति एतावती विसर्गशक्तिः 'षोडशीकला' इति गीयते। एषा हि शक्तिर्नहि सांख्येया, नापि वैदान्तिकी दृक्, अपितु शैव्यैव। विसर्गशक्तिरेव च पारमेश्वरी परमानन्दभूमिवीजम्। एवं हि अकारादिरूपं घनतापत्त्या योनिरूपतां गृहीत्वा स्वरूपाप्रच्युतं तदेव स्वस्वरूप एव योनिरूपे संक्रामद् विसर्गपदमित्युच्यते। तदुक्तं यथा—

स विसर्गो महादेवि यत्र विश्रान्तिमृच्छति।
गुरुवक्त्रं तदेवोक्तं शक्तिचक्रं तदुच्यते[1] ॥ इति।

अत्राकारस्यैव घनता 'कवर्गः' कण्ठ्यत्वात्, इकारस्यैव घनता 'चवर्गः' तालव्यत्वात्, उकारस्य 'पवर्गः' औष्ठ्यत्वात्, ऋकारस्य 'टवर्गः' मूर्धन्यत्वात्', लृकारस्य 'तवर्गः' दन्त्यत्वात्, 'यशौ' चवर्गस्यान्तः, 'रशौ' टवर्गस्य, 'लसौ' तवर्गस्य, वकारोऽपि 'तपवर्गयोः' घनता। तदुक्तं टीकायाम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च[2] ॥ इति।

अत उक्तम्—अकुहविसर्गाः कण्ठ्याः। इचुयशास्तालव्याः। ऋटुरषा मूर्धन्याः। लृतुलसा दन्त्याः। उपूपध्मानीया ओष्ठ्याः। ञमङणना नासिक्याः। ऐदैतोः कण्ठतालव्यौ। ओदौतौ कण्ठ्योष्ठौ, जिह्वामूलीयमेव, जिह्वामूल्यम्। अनुस्वारो नासिक्यः इति।

एवं हि क्रियाशक्तिरेव कवर्गादिषट्कक्रमेण पञ्च-पञ्च प्रसृता षड्गुणिता सती ककारमारभ्य ञ पर्यन्तगा षड्भिः सह षट्त्रिंशत् भवन्तीति। तदेवं शिवबीजमेव स्वातन्त्र्यात् घनीभूततया क्वचिद्वपुषि शाक्तरूपे कुसुमतया तिष्ठत् योनिरित्यभिधीयते, तदेव हि पुष्पं पूर्वोक्तनयेन ग्राह्यग्रहणग्राहककोणत्रयमयं वस्तुतः प्रसूतिपदं बीजसंमिश्रतयैव भवति तदैव पुष्परूपत्वात्, अन्यदा तु योग्यतयैव योनिरूपतया व्यपदेशः। तथा च तत् कुसुममेव त्रिकोणतया योनिरूपं तत्स्फुटीभूतविभक्तग्राह्यादिरूपसोमसूर्याग्निसृष्टिस्थितिसंहृति इडापिङ्गलासुषुम्नाधर्माधर्मशबलादिकोणत्रितया पारमेश्वरी भैरवी भट्टारिका मुद्रा तद्रूपयोन्याधारतया योनिरिति निर्दिष्टा। अयमेव भावः कुब्जिकामतेऽपि द्रष्टव्यः। तथा हि—

---

१. परात्रिं० टीका—पृ० १८१' २. तत्रैव।

मायोपरिमहामाया त्रिकोणानन्दरूपिणी[१] ।। इति

अत एव तथाविधबीजकुसुमैकघनभावशिवशक्तिसंघट्टः स्वयं स्वात्मनैव पूज्य इत्युपदिष्टं श्रीत्रिकतन्त्रसारे—

शिवशक्तिसमापत्या शिवशक्तिघनात्मकः ।
शिवशक्तिसमापत्तित्रिकं संपूजयेत्परम्[२] ।। इति ।

एवं घनीभावोऽपि वैखरीरूपे यद्यपि स्फुटीभवति तथापि सर्वात्मनि परावाग्वपुषि मुख्यतयावतिष्ठते । तत्र परं कण्ठोष्ठस्थानकरणान्यपि सर्वसर्वात्मकमेव इति विशेषः । वर्णोच्चारणे यस्तु भेदः सः स्थानादिकृत एव, यतो हि वर्णानां श्रुत्येकप्राणत्वम् । एतेनैव व्यवहारबोधनेन स्थानप्रयत्नकृतो भेदः संगच्छते ।

अत्रायं भावः—स एव प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृतो यदा कोष्ठमभिहन्ति कोष्ठेऽभिहन्यमाने मनाक् गलबिलस्य संवृतत्वात् संवारो वर्णधर्म उपजायते विवृतत्वाद् विवारः, संवृतो गलबिले नादः, अव्यक्तश्च नादः, विवृतश्वासे उपरिवर्ती तौ श्वासनादावनुप्रदानमित्याचक्षते—वर्णनिष्पत्तेरनु पश्चात् प्रदीयते इति अनुप्रदानम् । अन्ये तु ब्रुवते—अनुप्रदानमनुस्वानो घण्टानिनादवत् । यथा घण्टानिनादोऽनुस्वानमनु भवति तथा तत्र स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गात् घोषो जायते । यदा श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गादघोषः । महति वायौ महाप्राणः । अल्पे वायौ त्वल्पप्राणः ।

वैयाकरणसिद्धान्तकौमुद्यां वर्णानां बाह्यत्वं साधितम् । यथा बह्यप्रयत्ना अष्टौ इति महाभाष्ये, तद्यथा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण इति । तत्र विभागो यथा—ख फ छ ठ थ च ट त क प श ष सा विवाराः श्वासा अघोषाश्च । ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड दाः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यरलवाश्च अल्पप्राणाः, वर्गाणां द्वितीयचतुर्थौ श ष स हाश्च महाप्राणा इति । तदुक्तम—

'अतो यत्र सर्वसर्वात्मकबोधैकघनकण्ठौष्ठादिधाम्नि तथाविधबोधैकघनविमर्शात्मकस्वातन्त्र्यसारमहामन्त्ररूपवर्णभट्टारकनिवेशः, बोधैकघनतानिर्विशेषतायाम् इदं स्थानम्, इदं करणम्, अयं वर्ण इति कथंकारं विभागः ? इति चेत् यदेवं स्वातन्त्र्यं तथाविधे स्वात्मनि घटोऽयं, सुखमिदम्, ज्ञानमिदम्, ज्ञाताहम् इत्यवभासयति । तस्यैवंविधचित्रतररूपावभासेन को वा कियान् वा प्रयाशः । अत एव सर्वे पाषाणतरुतिर्यङ्मनुष्यदेवरुद्रकेवलिमन्त्रतदीशतन्महेशादिका एकैव पराभट्टारिकाभूमिः सर्वभावात्मनैव परमेश्वररूपेणास्ते इति । तद्विचित्रस्थाना-

---

१. परात्रिं० टीका–पृ० १८४ । २. तत्रैव ।

दिसार्वात्म्यनिर्विशिष्टस्फुटास्फुटव्यक्ताव्यक्तादिरूपशब्दशरीरा 'मन्त्रवीर्यम्' इति गीयते। तथा हि वीणाविपञ्चीकच्छपिकामुरजादिषु स एव स्वनोऽन्यतोऽन्यतो देशादप्युद्भवन्नेकस्थान इति कथ्यते। एवं तारमध्यमन्द्रेष्वपि[1] तत्स्थायिस्वरैकात्म्येऽपि वाच्यम्, अत एव च स एव वर्णः क्वचित्प्राणिनि स्थानान्तरसमुल्लास्यपि भवति[2]' इति।

## स्वरशब्दनिरुक्तिः

तथा चैवं तन्त्रागमशास्त्रोपपादिता पञ्चदश-षोडश-अष्टादशात्मिका वा कला एव ह्लादनामात्रचित्तवृत्यनुभावकाः 'स्वराः' इत्युच्यन्ते। तन्निरुक्तिस्तु नैवापेक्षते। यतो हि 'चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यवचनेन संज्ञाशब्देषु व्युत्पत्तिर्नावश्यकी, तथापि 'सर्वं वै नाम धातुजम्' इति शाकटायनोक्त्या 'स्वृ-शब्दोपतापनयोः' इति धातोः 'स्वरन्ति शब्दायन्ते' इति व्युत्पत्या 'पचाद्यच[3]' इत्यचि प्रत्यये रूपम् अथवा 'स्वर्यन्ते अर्था एभिः इतिः स्वराः' इति व्युत्पत्या 'पुंसि[4]......' इति सूत्रेण घ प्रत्यये सति स्वरशब्दसिद्धिः। यद् वा 'स्वेन राजन्ते इति स्वराः' इति व्युत्पत्या 'राजृ-दीप्तौ' इति धातोः 'अन्येभ्योऽपि दृश्यते[5]' इति डः प्रत्यये स्वरशब्दसिद्धिः। स्वरा अच्पदवाच्याः। तस्माच्चतुर्दशमाहेश्वरसूत्रगतं स्वरवर्णमादाय सिद्धान्तकौमुद्यामादावेवोक्तम्–'अचः स्वराः' इति। तद्धर्मत्वादुदात्तादयोऽपि स्वरा एव। तदुक्तम्—

स्वरो नासासमीरे स्यान्मध्यमादित्रिकस्वरे।
उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान्[6] ॥ इति।

विश्वकोशे तु—

स्वरोऽकारादिमात्रासु मध्यमादिषु च ध्वनौ।
उदात्तादिष्वपि प्रोक्तः स्वरो नासाममीरणे[7] ॥ इत्युक्तम्।

मेदिनीकोशे चैवम्—

..........'स्वरो नासासमीरणे उत्पादयः'।
उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान्[8] ॥ इत्युक्तम्।

---

१. स प्राण उत्थितो नाभेरुरःकण्ठशिरोधृतः।
मृदुमध्योत्तमैर्याति मन्द्रादिध्वनिनादताम् ॥
मन्द्रमध्यमतारैर्हि ध्वनिभिः सवनत्रये।
शंसन्ति शास्त्रे गायत्रं त्रैष्टुभं जागतं क्रमात् ॥ (परात्रिं० टीका पृ० १८८)

२. परात्रिं० पृ०—१८६ तः १८९। ३. अष्टाध्या०—३।१।१३४।

४. तत्रैव—३।१।११८। ५. अष्टाध्यायां वार्तिकम्—३।२।१०१।

६. अमरकोशे—१।६।४। ७. वि० को०—१२५।९। ८. मे० को०—१२९।९४-९५।

अभिनवगुप्तपादाश्च—'स्वरयन्ति शब्दयन्ति सूचयन्ति चित्तं स्वं च[1] स्वरूपात्मानं सन्ति एवम् इति परप्रमातरि संक्रामयन्तो ददति स्वं च आत्मीयं कादियोनिरूपं रान्ति[2] एवम् इति परप्रमातरि संक्रामयन्तो ददति स्वं च आत्मीयं कादियोनिरूपं रान्ति बहिः प्रकाशयन्तो ददति इति स्वराः। एत एव हि चित्तवृत्तिसूचका नादात्मकाः करुणाशृङ्गारशान्तादिकां चित्तवृत्तिमाक्रन्दनचाटुकरतुत्यादौ केवला वा योनिवर्णनिविष्टा वा तिर्यक् तत्तदहर्जातादिष्वपि प्रथमत एवापतन्तः संकेतविघ्नादिनैरपेक्ष्येणैव संविदासन्नवर्तित्वात् स्वरकाक्वादिरूपतामश्नुवानाः प्रकाशयन्ति इत्यर्थधर्मा उदात्तादय उपदिष्टाः। तेषामेव चित्तवृत्त्यनुभावकषड्जादिस्वरूपत्वात्। एवं सर्वत्र संवेदने सर्वा एवैता वैचित्र्यचर्याचारचतुराः शक्तय 'आदिक्षान्ताः' समापतन्त्योऽहमहमिकया अक्रममेव भासमानाः कलनामयतयैव ज्ञानक्रमसंक्रमणमेव दिश्यमानं देशमुत्थापयन्ति[3]' इत्याहुः।

अत्रोदात्तानुदात्तस्वरितस्वरमधिकृत्य विविच्यते किञ्चित्—यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठविवरस्य चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तदोदात्तस्वरमाचक्षते। यदा तु मन्दप्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठविवरस्य महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति तदानुदात्तस्वरमाचक्षते। उदात्तानुदात्तस्वरितसन्निकर्षात् स्वर इत्येवं लक्षणा बाह्याः प्रयत्नाः। स्रंसनमिति शैथिल्यं स्निग्धता मृदुता कण्ठरन्ध्रस्य महत्त्वादेव शीघ्रं वायुर्निष्क्रामन् जलावयवान्न शोषयति च, अतः स्वरस्य स्निग्धता भवति। कण्ठरन्ध्रस्याणुत्वादेव वायुः शनैः शनैर्निष्क्रामन् जलावयवान् शोषयतीति रुक्षता–अस्निग्धता भवति। तदुक्तं महाभाष्ये—

'आयासो दारुण्यमणुता खस्येत्युच्चैः करणानि शब्दस्य'। इति। आयासो गात्राणां दारुण्यं दारुणता स्वरस्य रुक्षता खस्य कण्ठविवरस्य च संवृतता। अथ 'नीचैः करणानि शब्दस्य अन्ववसर्गो मार्दवमुरुता खस्येति' इति। अन्ववसर्गो गात्राणां शिथिलता स्वरस्य मार्दवं महत्ता कण्ठविवरस्येति, नीचैः करणि शब्दस्य[4]' इत्युक्तम्।

एवमेव प्रदीपे च—'प्रक्रम्यन्तेऽस्मिन्वर्णा इति प्रक्रमः स्थानमुच्यते। तेनायमर्थः—एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाण उदात्तः, अधरभागनिष्पन्नोऽनुदात्तः। एवं चोच्चैरित्यनेनोर्ध्वभागो गृह्यते नीचैरधरभागः। अभ्यासमधिगम्यश्चायं स्वरविशेषः षड्जादिवद्विज्ञेयः[5]' इत्युक्तम्।

---

१. स्वशब्दः आत्मात्मीयवचनः।
२. 'रा-दाने' इति धातोः रूपम्।
३. परात्रिं० पृ०—२०२ तः २०४।
४. महाभाष्ये—१।२।२९-३०।
५. तत्रैव–प्रदीपे।

भगवान् पाणिनिस्तु एतत्सर्ववस्तुगतभावं हृदये आधाय तत्त्वदृष्टयाऽऽह— 'उच्चैरुदात्तः[1]', 'नीचैरनुदात्तः[2]', 'समाहारः स्वरितः[3]' इति।

एवमेव शिवशक्तिसामरस्यभूतोऽयं माहेश्वरचतुर्दशसूत्रसमुदायः जगत् पञ्चकृत्यैरुद्भवस्थितिसंहारनिग्रहानुग्रैरनुदिनमनुकम्पयति। अत इदमेव शिवशक्तिबीजमित्यप्याख्यायते। इमान्येव सूत्राणि मननत्राणधर्माणामनन्तमन्त्राणां मूलानि, वेदनारूपाणां सर्वासां विद्यानामुत्पादकानि, आराधकेभ्यो भुक्तिमुक्तिप्रदानि, व्यक्ताव्यक्तनिखिललोकप्रकाशकानि, चरमपुरुषार्थसाधकत्वेनावश्यमनुष्ठेयानीति ज्ञेयानि। अत एव श्रूयन्ते हि केचन महानुभावा एषामेव माहेश्वरसूत्राणामनुष्ठानेन शिवार्चनेनानन्तलोकेश्वरत्वं साम्बशिवत्वमवाप्नुयुरिति संक्षेपेण महामहेश्वराणां श्रीमतामभिनवगुप्तपादानामत्रत्याऽऽशयं विज्ञाप्य सर्वं शिवाय स्यादिति विनिवेद्य विरमामीति शम्।

## महार्थमञ्जरीग्रन्थोक्तरीत्या माहेश्वरसूत्रोक्तवर्णविमर्शः

कुलक्रममत (समयि, मिश्र इति वा) त्रिक-दर्शनेषु वर्ततेऽन्यतमं स्थानं क्रमदर्शनस्य। तत्र समुपलब्धेषु क्रमदर्शनग्रन्थेषु सर्वश्रेष्ठः सर्वाङ्गपूर्णश्चायं ग्रन्थः सर्वानेव क्रमदर्शनविषयान् क्रोडीकरोति। विषयोपस्थापनप्रसङ्गेन प्रमाणरूपेणोपन्यस्ताः शताधिकाविशिष्टा ग्रन्था अत्र। श्रीमहेश्वरानन्दप्रणीतेयं महार्थमञ्जरी, अनेनैव महात्मना स्वोपज्ञया परिमलव्याख्यया सनाथीकृतेति। ग्रन्थश्चायं महाराष्ट्रभुवा प्राकृतभाषया विलसति। क्रमदर्शनसिद्धान्तस्तु शाक्तोपायेनाख्यायते, यतो हि क्रमनाम शाक्तोपाय इति। तथा च स्वात्मदेवतायास्त्रिपुरसुन्दर्याः सपर्याविधिप्रदर्शनमुखेनैव सर्वोऽपि महार्थोऽत्र व्याख्यातः[4]।

ग्रन्थकर्ता सप्ततितमायां कारिकायां महार्थो निरूपयन्नाह––'अथास्मत्प्रसाधितमौत्तरमर्थतत्त्वमेवान्येषां व्यासादीनामपि महामुनीनामन्तरनुसन्धेया देवता, येन तत्प्रणीतेषु प्रबन्धेषु तात्पर्यपर्यालोचनायां महता कण्ठेनैतदेवार्थरहस्यमुद्घाट्यते। यथा भगवद्गीतासूपनिषत्स्वित्युच्चावचस्यास्य प्रपञ्चवैचित्र्यस्य श्रीमदनुत्तराम्नायसमुद्रसीकरोपस्नेह एवानुप्राणनतयाऽवतिष्ठते[5]' इति। एवं

---

१. अष्टाध्या०—१।२।२९। २. तत्रैव—१।२।३०। ३. तत्रैव—१।२।३१।

४. अण्डमए णिअपिण्डे पीठस्मि फुरन्ति कलणदेवीओ।
पप्फुरइ अ परमसिवो णाणणिहो ताण मज्झआरम्मि॥
(अण्डमये निजपिण्डे पीठे स्फुरन्ति करणदेव्यः।
प्रस्फुरति च परमशिवो ज्ञाननिधिस्तासां मध्ये॥) इति। (महार्थ०—३४)

५. महार्थ०—पृ०_१७६।

हि—'तत्तदशेषार्थतत्त्ववैचित्र्यसमष्टयधिष्ठानरूपतया महान् सर्वार्थभेदप्रभेदक्रोडीकारविचक्षणोऽर्थः प्राप्यं तत्त्वम्[१]' इत्यनेन तेनैव महार्थो व्याख्यातः। तदुक्तं, कारिकायाम्—

एणं चेअ महत्थं जुत्थारम्भम्मि पण्डुउत्तस्स।
छोलहसहस्ससत्ती देवो उवदिसइ माधवो त्ति शिवं॥

(एवमेव महार्थं युद्धारम्भे पाण्डुपुत्रस्य।
षोडशसहस्रशक्तिर्देव उपदिशति माधव इति शिवम्[२]॥) इति।

महाभारतस्य युद्धारम्भे रणाङ्गणे विषीदन्तमर्जुनं विलोक्य भगवान् श्रीकृष्णः श्रीमद्भगवद्गीताया उपदेशं प्रददन् कर्माकर्मनिर्धारणाय स्वकर्तव्यपालनाय चोपदिशति। अतो गीताया महत्त्वं महार्थत्वञ्च को वा न वेत्ति विवेकी? अत्र षोडशसहस्रशक्तिरित्यनेन बहिष्षोडशस्त्रीसहस्रसम्भोगमिवान्तरपि षोडशाधिका (?) परामर्शप्राबल्योपारूढं तत्तदवान्तरशक्तिसहस्रसमावेशमावेदनीयम्। तस्मादुक्तं भवति स्वात्मदेवतामात्रोपास्तिप्राधान्यम्—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति[३]॥ इति।

अतोऽत्र ग्रन्थे 'णमिऊण णिच्चसुद्धे गुलुणो चलणे[४]' इत्यारभ्य 'देवो उवदिसइ माहवो त्ति शिवम्[५]' इत्यन्तेन नत्वा शिवमिति पदात्मकः कश्चित् प्रत्याहारो नवमित्यक्षराकारश्च परिस्फुरतीति सर्वथा विश्वव्यवहारवर्तिप्रमातृरूपमेतदधीनसंरम्भमन्यद् वा वस्तु कर्तृभूतं शिवमुपपादितस्वभावं स्वात्मदेवतात्मानं नत्वा प्रकर्षकाष्ठाप्राप्ततया परामृश्य नवं प्राचीनजाड्यवासनापर्युदासादुन्मीलदमन्दसंवित्स्वस्पन्दसौन्दर्यसारं सदलौकिकस्वभावं सम्पद्यत इत्यर्थतत्त्वतात्पर्यमिति।

एवं महार्थमभिधाय मञ्जरीशब्दं विमृशामि। मञ्जरी हि हृदयाह्लादकरी सृष्टिमूला फलप्राप्तेः पूर्वं फलप्राप्तिसूचकत्वेन ईश्वरीयरचना। अतस्तन्निरुक्तौ उच्यते—'मृजुत्वमृच्छति' इति मञ्जरी। 'अच इः[६]' इति सूत्रेण 'इ' प्रत्यये सकन्ध्वादिवार्तिकसूत्रेण सकन्ध्वादिपररूपे सति मञ्जरीति शब्दसिद्धिः। अतो महार्थं शिवशक्तिसामरस्यरूपार्थं फलं तत्त्वं च या अनायासेन प्रापयति साधकाय निवेदयति सा मञ्जरीति।

शिवः प्रकाशस्वरूपः शक्तिश्च विमर्शस्वरूपेति तन्त्रागमसिद्धान्तः। सर्वस्यापि विश्ववैचित्र्यस्य प्रकाशविमर्शान्तर्गतत्वमेव। अत्रैव प्रकाशविमर्शाख्ये

१. महार्थं मं०—पृ० १७६। २. तत्रैव—का० ७०। ३. गीता—११।६५।
४. महार्थ०—का० १। ५. तत्रैव—का० ७०।
६. अष्टाध्या० उणादिसूत्रम्—४।१३९।

सद्भावे माहेश्वरसूत्रोक्तचतुर्दशसूत्रवर्णसमुदायस्य स्वरव्यञ्जनमयस्य शिवशक्तिरूपत्वादन्वय इति आगमविदो वदन्ति। यतो हि प्रकाशस्वरूपस्यात्मनो (शिवस्य) विमर्शशक्तिरेवानुप्राणनम्। वस्तुतः 'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः[1]' इत्युक्त्या प्रकाशो न कदाचिद् विमर्शक्रियतां विमर्शोऽपि न प्रकाशकर्तृकतां व्यभिचरतीत्यनयोर्वास्तवं वपुरैक्यस्वभावम्। इयमेवाभिव्यक्तिः अकारेकारोकारादिभिस्तत्र तत्र सम्पद्यत इति तत्त्वविदो जानन्त्येव।

यद्यपि अत्र ग्रन्थे अहन्ता-इदन्ताभ्यां वर्णविज्ञानतत्त्वमेव निरूपितम्, तथापि पीठनिरूपणप्रसङ्गे कारिकेयमुल्लसति—

पीठम्मि कलाओ णव पञ्चच्चिअ पञ्चवाहपअवीए।
सत्तदह फालणेत्ते वारह छोलह अ अण्णणेत्तेसुं॥
(पीठे कला नव पञ्चैव पञ्चवाहपदव्याम्।
सप्तदश फालनेत्रे द्वादश षोडश चान्यनेत्रयोः[2]॥) इति।

अत्रेदं रहस्यम्—आदौ तत्त्वचिन्तकेन स्वशरीरस्यैव पीठतयोपासनं कर्तव्यम् तदनु तन्त्रविधिना उपचाराः समाश्रयणीयाः। श्लोके 'पञ्चैव पञ्चवाहपदव्याम्' इत्यनेन 'वाहाः परमेश्वरस्य स्फुरणधाराः। ताश्च पञ्च, अन्यूनानतिरेकितयोपलभ्यमानत्वात्। तन्मयी च या पदवी विश्वगमागमस्थानभूता प्रवृत्तिः। ताः पञ्चैव कला इत्यन्वयः। एवकारेण पञ्चवाहशब्दस्यान्वर्थतोच्यते। ते च वाहा व्योमवामेश्वरी, खेचरी, दिक्चरी, गोचरी, भूचरीति भवन्ति[3]' इत्युक्तम्। पुनरेषां व्याख्यां व्यावृण्वन्नाह तत्र परिमले व्याख्याने—'व्योम्नामोमात्मकप्रणवरूपताविमर्शवैशिष्टयानुप्राणनानां वक्ष्यमाण सर्वपञ्चकात्मनां वामं वमनं प्रतीश्वरी सामर्थ्यशलिनीति व्योमवामेश्वरी। सा च परमेश्वरस्याविकल्पभूम्यनुप्रविष्टा चिच्छक्तिः। रवे बोधरूपे प्रमातरि चरणात खेचरी। दिक्ष्वन्तः करणेषु चरतीति दिक्चरी। गोषु बहिरिन्द्रियेषु सञ्चरणाद् गोचरी। भुवि विषयभूमौ चरणाद् भूचरीति। एता एव चिदानन्देच्छाज्ञानक्रियाख्याः शक्तयः परा सूक्ष्मा पश्यन्ती मध्यमा वैखरीति वाग्रूपाश्चानुभूयन्ते। यतश्चिच्छक्तिस्तावत् परमेश्वरस्य चैतन्यलक्षणा सर्वनिर्वाहकत्वपर्यायपरमस्वातन्त्र्यमयी व्योमवामेश्वरी। आनन्दश्चावच्छिन्नप्रमातृस्वात्मविश्रान्तिस्वभावत्वात् खेचरी। इच्छा चाभ्युपगमरूपत्वादन्तःकरणप्रसाध्येति दिक्चरी। ज्ञानं च बहिर्मुखं चक्षुरादिभिर्बाह्येन्द्रियैरुद्दीप्यत इति गोचरी। क्रियापि पारमेश्वरीषु शक्तिष्वत्यन्तस्थौल्याद् बहिर्वेद्यवर्गवैचित्र्यस्य एवोपलभ्यत इति भूचरी। एवं परादिवाक् पञ्चकोऽपि। तदुक्तम्—

विमर्शो विन्दुनादौ च स्फोटः शब्दश्च वाक्क्रमः[4]॥ इति।

---

१. सूतसंहिता०—४।१३।२९। २. महार्थम०—३७।
३. परिमलटीका०—का० ३७। ४. तत्रैव—३७।

एवमेव न्यासक्रमे धूम्रार्चिरुष्माप्रभृतीनां कलानां सम्यङ्न्यासं विधाय, मूर्तिचक्रादिकञ्च न्यसेत्। शरीर एवाहन्ताया इदन्तयाश्च भावं विमृशेत्। एवमेवात्रोक्तं सर्वं सम्यङ् न्यस्य शरीर एव सर्ववर्णन्यासं विमृशेत्। एतेन अहन्तायां सम्पन्नायां सत्यां स्वात्मनि शिवत्वभावस्योदयो भवति। एतदेव रहस्यन्तत्र परिमले व्याख्याने एवं व्याख्यातम्—

'वर्णाः श्रीमच्छब्दराशिभैरवात्मानः। तत्र ज्ञानसिद्धाः षोडशस्वरमय्यः। मन्त्रसिद्धाः ककारादिमकारान्ता वर्णात्मकाः। मेलापकसिद्धाश्च षण्डस्वररूपाः। यकारादिहकारान्तस्वभावाः शाक्तसिद्धाः। अकारकलाकाराश्च शाम्भवसिद्धा इति। अकारकलाश्च बिन्द्वर्धचन्द्रनिरोधनादस्वभावाः। तत्र बिन्दुरशेषवाच्याविभिन्नप्रकाशात्मा चन्द्राकृतिरनुस्वारः। किञ्चिद्वाच्यप्राधान्यशान्तावर्धचन्द्रः, मण्डलस्वभावादत्यन्तकौटिल्यव्यापायात्। ततोऽपि वेद्यकौटिल्यव्यपगमादृजुरेखारूपा निरोधिका। यदनया परिमितयोगिनां नादानुप्रवेशः, तद्वदपरिमितयोगिनां भेददशावेशश्च निरुध्यते। नादश्च स्वपरामर्शपरमार्थ इत्यकारकलारहस्यम्। श्रीपञ्चपिण्डनाथस्था अकारादयश्च वर्णा ज्ञानसिद्धीनां क्रमाद् भवन्ति। किञ्च, ज्ञानसिद्धादयः क्रमाद् अकारकलामय्यः। शाम्भव्यस्तु तत्समष्टिरूपाः[1]' इति।

वर्णसामाम्नायस्य सर्वो हि विभवः शिवस्य स्वातन्त्र्याद् विलसतीति जानन्त्येवागमविदः। तदुक्तं भगवता पाणिनिनाऽपि 'स्वतन्त्रः कर्ता' इति सूत्रेण। एतेनेदमुक्तं भवति यद् विश्ववैचित्र्यविस्रष्टृस्वभावः परमस्वातन्त्र्यशाली परमेश्वरोऽहमिति हृदयङ्गमीभावपर्यन्तमनुशील्यमानः सर्वप्रपञ्चविकल्पपरिस्फुरणक्रोडीकारविचक्षणश्चायं विमर्शः प्रतिपादितात्मरूपावबोधयोगिनां भोगमोक्षलक्षणं पुरुषार्थद्वितयमप्युपपादयति।

महेश्वरस्यैव अहन्तया परिस्फुरितोऽयं वर्णसमुदायः साक्षाच्चराचरात्मकः चिदानन्दरूपः सन् उपासकानामिष्टं साधयति। तदुक्तम्—

पूर्णत्वादहमित्यन्तर्ज्ञानमानन्द उच्यते[2] ॥ इति।

अतः सर्वो ह्ययं विश्वविस्तारः शिवात्मक एवेति प्रतिपादयन्नाह—

शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत्।
तस्माच्छब्दार्थचिन्तासु न साऽवस्था न या शिवः॥

वस्तुतः शिवमये हृदि स्फुटं सर्वतः शिवमयं विराजते।
चलित्वा यास्यते कुत्र सर्वं शिवमयं यतः॥

---

१. महार्थ०, परिमलव्या०—का० ३८।
२. महार्थ० का० ५५ परिमलटी०।

सर्वो ममायं विभव इत्येवमभिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता[1] ।। इति ।

एवमत्रत्यो विषयो मया समासेन किञ्चिन्निवेदितः, विस्तरेण तु सुधिय एव प्रमाणमिति शिवम् ।

## ईश्वरप्रत्यभिज्ञाविमर्शिनीव्याख्यानुरोधेन माहेश्वरसूत्रगतवर्णानां विमर्शः

चिद्रूपघनौ एव ज्ञानक्रियात्मकौ शक्तिशिवौ । ज्ञानं विमर्शानुप्राणितम्, विमर्श एव च क्रिया इति । तत्र यद्यप्येकमेव शिवतत्त्वम्, तथापि तदीयमेव स्वातन्त्र्यं स्वात्मनि स्वरूपभेदं तावत्प्रतिबिम्बतया प्रतिफलति अइउणित्यादि-रूपेण । तदुक्तमत्र ग्रन्थे—

किन्त्वान्तरदेशोद्रेकात्सदाख्यं तत्त्वमादितः ।
बहिर्भावपरत्वे तु परतः पारमेश्वरम्[2] ।। इति ।

अत्रोक्तेन प्रकारेण भिन्नानां वर्गाणां वर्गीकरणनिमित्तं यदेकमविभक्तं भाति तत्तत्वम् । यथा गिरिवृक्षपुरप्रभृतीनां नदीसरःसागरादीनां च पृथिवीरूपत्वमद्रूपत्वं चेति । ततश्च शुद्धचैतन्यवर्गो यो मन्त्रमहेश्वराख्यः, तस्य प्रथमसृष्टावस्माकमन्तः-करणैकवेद्यमिव ध्यामलप्रायमुन्मीलितमात्रचित्रकल्पं यद्भावचक्रम्, तथा संहारे च ध्वंसोन्मुखतया तथाभूतमेव चकास्ति प्रतिबिम्बप्रायतया, तस्य चैतन्यवर्गस्य तादृशि भावराशौ तत्तथाप्रथनं नाम यच्चिद्विशेषत्वं तत्सदाशिवतत्त्वम् । मन्त्रेश्वरादिरूपस्य तु चैतन्यराशेः स्फुटीभूतमस्मद्बहिष्करणसरणिसंप्राप्तभाव-वर्गप्रतिमं विश्वं प्रतिबिम्बकल्पतया भाति, तस्य तु तत् तथाप्रधानमीश्वरतत्त्वम् इति सिद्धं भवति ।

'अल्' प्रत्याहारघटितचतुर्दशसूत्रसमुदाये अकारहकारयोः आरोहावरोह-क्रमेण उपक्रम—उपसंहारौ भवतः । अतः अन्तः उन्मेषः सदाशिवत्वपदेन बहिरु-न्मेषश्चेश्वरपदेन व्यवह्रियते । यतो हि षट्त्रिंशत्तत्वात्मकं हि तन्त्रागमशास्त्रम् । उन्मेषस्योदयः शिक्तिशिवाभ्यां युगनद्धरूपेणैव भवति । अतोऽयं शुद्धः स्पन्द इति । 'अहम्' इति पदेन अकारमारभ्य हकारपर्यन्तस्य भागस्य ग्रहणं भवति, यत्रोपसंहार-क्रमेण हार्दकलातो विवेकेन हकारमारभ्य क्रमशः अकारपर्यन्तस्य विमर्शः । 'इदम्' इति पदेन अकारमारभ्य हकारपर्यन्तं तत्तद्वर्णस्वरूपगुणगणसमुदायज्ञानपूर्वकं विमर्शः । अयमेव विमर्शः अहन्तेदन्ताभ्यां शब्देन व्यवह्रियतेऽत्र शास्त्रे । अत एव शिवशक्तिस्वरूपमुजृम्भितं भवति अइउणित्यादिचतुर्दशसूत्रैरित्यवधेयम् । तदुक्तं ग्रन्थेऽपि—

---

१. महार्थ०—६० ।
२. ई० प्र० वि०—३।१।२ ।

ईश्वरो बहिरुन्मेषो निमेषोऽन्त: सदाशिव: ।
समानाधिकरण्यञ्च सद्विद्याहमिदंधियो:[१] ।। इति ।

एवं हि सकलजगदात्मनि सन्निवेश्याहं रूपेण पुनरिदं रूपेणोपपादयति विश्वात्मा शिव: । अतोऽक्षररूपोऽयं चतुर्दशमाहेश्वरसूत्रघटको निखिलज्ञानानां मुखरूपेण मुख्यत्वाधिष्ठानस्य प्रधानवेदाङ्गस्य व्याकरणस्योपजीव्यभूतो वर्णसमाम्नाय इति न तिरोहितं भवति प्रेक्षावताम् । तदुक्तम्—

सर्वथा त्वन्तरालीनानन्ततत्त्वौघनिर्भर: ।
शिवश्चिदानन्दघन: परमाक्षरविग्रह:[२] ।। इति ।

## वातुलशुद्धाख्यतन्त्रोक्तं वर्णविज्ञानं माहेश्वरसूत्रवैशिष्ट्यसाधकम्

वातुलशुद्धाख्यं तन्त्रं हि तन्त्रागमीयविषयान् यथायथं निरूपयति । तत्र द्वितीये पटले हि चतुर्दशमाहेश्वरसूत्रघटकान्यक्षराणि तथा निरूपितानि येन वर्णविज्ञानज्ञानशून्यानामपि तत्त्वबोध: स्यात् । अतो वर्णानां पर्यायत्वेन षण्णामान्यत्र निर्दिष्टानि[३] । एकपञ्चाशत्संख्याकानि हि कामितार्थप्रदायकाण्यक्षराणि भवन्ति । तत्र केचन वर्णा: पुंरूपा:, केचन स्त्रीरूपा:, केचन-चोभय ( नपुंसक ) रूपाश्चेति ज्ञेया: ।

आदौ परे सूक्ष्मे शिवतत्त्वे शक्ते: सम्मेलनेन विन्दुरुत्पद्यते । बिन्दोर्नाद:, नादाच्छक्ति:, शक्ते: शब्द:, शब्दाद् वाग्भव उत्पद्यते । वाग्भवात् कला:, कलाभ्यो विकला:, विकलाभ्यो मन्त्रा उत्पद्यन्ते । मन्त्रो वाचको भवति । मननत्राणधर्मिणो हि मन्त्रा अक्षरमया:, अक्षराणि च देवमयानीति[४] कृत्वा 'एकैकमक्षरं पुंसां महापातकनाशनम्' इति वाल्मीकिवचनेन सर्वं संगतं भवति । अत्र बिन्दुरेव तत्त्वं पराभिधा शक्त्या व्यवह्रियते । नाद एव आदिरितिपदेन, शक्तिरेवात्र इच्छापदेन, शब्द एव ज्ञानपदेन व्यवहृता भवन्ति[५] । वाग्भव एव क्रियाशक्तिरिति पदेन, कला वै षोडशस्वररूपेण, षोडशस्वराश्च प्रकृतिविकृतीभ्यां अ-आ, इ-ई, उ-ऊ इत्यादि-

---

१. ई० प्र० विम०—३।१।३ ।

२. तत्रैव—४।१।१४ ।

३. वर्णो बीजं तथार्णं च लिङ्गमक्षरमात्रकम् ।
एतानि षट् च नामानि वर्णपर्यायवाचका: ।। ( वा० शु० तं—२।४ ।

४. वा० शु० तं—२।७-८-९ श्लोका: ।

५. विन्दुरूपा पराशक्तिर्नादश्चैवादिरीरित: ।
शक्तिरिच्छेति विज्ञेया शब्दश्च ज्ञानमीरित: ।।( २।१० )

रूपेण विलसन्तः षोडशत्वमुपगच्छन्ति[1]। ननु कला नाम का ? इति प्रश्ने उत्तरयति—

कला मात्रा स्वरा जीवाः प्रकृतिर्विकृतिस्तथा।
प्राणात्मानौ च देही च कलापर्यायवाचकाः[2] ।। इति।

एवं स्वरान्निरूप्य व्यञ्जनानि निरूपयन्नाह—'ककारादिक्षकारान्ता वर्णाश्च विकला स्मृताः। अतो व्यञ्जनानि विकृतयो भवन्ति, स्वराश्च प्रकृतय इति। स्वराः प्रकृतय एव विकृतिरूपकाणि व्यञ्जनान्युत्पाद्यन्ते[3]। तानि च व्यञ्जनानि विकलाशक्तिभूषितानि बिन्दुपर्यायानि भवन्ति। तत्र स्वरेषु पुल्लिङ्ग-स्त्रीलिङ्ग-नपुंसका इति त्रयो भेदा भवन्ति। तथा हि अ इ उ ए ओ अं इति षट्स्वराः पुल्लिङ्गाः, आ ई ऊ ऐ औ अः इति षट् स्वराः स्त्रीलिङ्गाः, ऋ ॠ ऌ ॡ च चत्वारो वर्णा नपुंसका[4] भवन्ति। व्यञ्जनवर्णेष्वपि त्रिलिङ्गकाः खलु जायन्ते वर्णाः। तानि च यथा--क ग च ज ट ड त द प ब ष ह इति द्वादशसंख्याकाः पुल्लिङ्गाः, ख घ छ झ ठ ढ थ ध फ भ श स एताश्च स्त्रीलिङ्गाः, शेषाश्च वर्णा नपुंसका इति सम्यग्विज्ञाय मन्त्रदैवतयोरनुष्ठाने प्रवर्तितव्यम्। एषां वर्णानां लिङ्गज्ञान-मनुष्ठानेष्ववश्यं ध्येयमित्यागमसिद्धान्तः।

एवञ्च पञ्चभूतेषु स्वराणां कथं विभाग इति दर्शयति—अ आ इ इति त्रय आकाश बीजम्, ई उ ऊ इति त्रयो वायुबीजम्, ऋ ॠ ऌ इति त्रय अग्नि बीजम्, ए ऐ ओ इति त्रयो जलबीजम्, औ अं अः इति च त्रयः पृथिवी बीजमित्युच्यन्ते[5]। स्वराणां प्रकृतयो ह्रस्वरूपाणि बीजमित्याख्यायन्ते, विकृतयो दीर्घरूपाश्च मूर्ति-पदेनाभिधीयन्ते। एवं चैकमात्रो वर्णो ह्रस्वः, द्विमात्रश्च दीर्घः, त्रिमात्रस्तु प्लुतः, व्यञ्जनश्चार्धमातृकमित्याहुः।

## वर्णानां देवाः स्वरूपाणि फलानि च

माहेश्वरसूत्रप्रोक्ता हि वर्णाश्चराचरशक्तिसम्पन्नाः समग्रदेवमूर्तय इति को वा न वेत्ति तत्त्ववेत्ता। अत्र शास्त्रे व्याकरणे वेदे च सर्वत्रैव वर्णानां तन्मूलक-शब्दानामेव चमत्कार उज्जृम्भते। अतः को वर्णः कस्य देवस्य स्वरूपभूतः, तस्य च को ह्याकारः, को वर्णः, किञ्च तस्य मन्त्राक्षरबीजभूतस्य फलमिति सर्वं

---

१. वाग्भवःस्यात् क्रियाशक्तिः कला वै षोडशस्वराः।
तेषां रूपं तथाप्रोक्तं प्रकृतिर्विकृतिस्तथा ॥
प्रकृतिः सप्तवर्णाश्च विकृतिस्तु नवार्णकः। ( वा० शु० तं—२।११-१२।

२. तत्रैव—२।१७। ३. तत्रैव –२।१९-२०। ४. तत्रैव—२।२२-२३½।

५. वा० शु० तं०—२।२९–३०।

सोत्कं जिज्ञास्यं भवति। एतदेव तत्त्वं नाना तन्त्रागमग्रन्थेषु निरूपितम्। तदनुसृत्यैवात्र ग्रन्थेऽपि तत्तत्वं निरूपितम्। तमधिकृत्य विविच्यते किञ्चित्—

गीतायामुक्तम्—'अक्षराणामकारोऽस्मि' इति। अन्यत्र चोक्तम् 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः' इति। गीत-सङ्गीत-उच्चारण-निरूपण-बोधादिविषयेषु च सर्वत्र अन्ते प्रायश अ ध्वनिरुल्लसति। तस्याकारस्य स्वरूपमत्र 'अकारः सर्वदैवत्वं रक्तं सर्ववशीकरम्[1]' इत्युक्तम्। एतेनाकारस्य सर्वदेवमयत्वं रक्तत्वं सर्ववशीकरत्वञ्चोक्तम्। एतदेव तत्त्वं 'अइउण्' इत्यादिसूत्रेषु अकारस्य सर्वस्यादौ संयोजने भगतो महेश्वरस्येष्टमिति। अकास्यैव दीर्घरूप आकारः, स च स्त्रीलिङ्गः, अतो भगवतो मायाशक्तेः परायाः स्वरूपभूतः, शुक्लवर्णः सर्वेषां जीवानां कृष्णमिवाकर्षणपरः। इकारो ह्रस्वः सन् पुल्लिङ्गः, अस्य देवो विष्णुः वर्णः श्यामः, फलं रक्षा इति। मायाशक्तिप्रधान ईवर्णः स्त्रीलिङ्गः, वर्णः पीतः, स्त्रीणां वशीकरणं फलमिति। उकारः पुल्लिङ्गः, वास्तुपतिर्देवः, कृष्णवर्णः, राज्ञावशीकरं फलम्। ऊकारः स्त्रीलिङ्गः, भूर्देवता, स्वरूपं कृष्णः, सर्वलोकवशीकरं फलम्। ऋकारो नपुंसकः, ब्रह्म देवः, रङ्गः पीतः, दुर्ग्रहफलनाशनं स्वभावः। ॠकारो नपुंसकः सन् कृष्णवर्णो ज्वरनाशकः। ऌ-ॡ वर्णयोरश्विनीकुमारौ देवौ, नपुंसकौ पीतवर्णौ ज्वरापहौ। सर्वार्थसिद्धिदस्य पुल्लिङ्गस्य एकारस्य वीरभद्रो देवः पीतवर्णात्मकः। ऐकारः स्त्रीलिङ्गः शुभ्रो वाग्भवो देवता ज्ञानसिद्धिः फलम्। ओकारः पुल्लिङ्गः प्रकाशवर्णः ईश्वरो देवः सर्वफलसाधकं फलम्। औकारः स्त्रीलिङ्गः आदिशक्तिर्देवता शुक्लवर्णः सर्वार्थसिद्धिदः। अंकारः पुल्लिङ्गः, महेशो देवः रक्तवर्णः सुखप्रदश्च। एवं हि सविसर्गस्य अः इति वर्णस्य कालरुद्रो देवः रक्तवर्णः पाशनिकृन्तनं फलम्।

व्यञ्जनानामपि स्त्रिलिङ्ग-पुल्लिङ्गभेदेन तत्तद्वर्णदेवताफलानि संगच्छन्ते। यथा ककारः पुल्लिङ्गः पीतवर्णः प्राजापत्यो देवः पुष्टिकरं फलम्। खकारश्च स्त्रीलिङ्गः, गङ्गादेवता स्त्रीलिङ्गः शुभ्रवर्णः सर्वपापनाशनं फलम्। एवमेवान्येषां वर्णानामपि वातुलशुद्धाख्यतन्त्रोक्तविधानेन वर्ण-देवता-फलानि तत्र तत्र ज्ञेयानि। वर्णानां देवता-लिङ्ग-फलादीनि च विचार्यैव ततन्मन्त्राक्षरघटितदेवानामाराधनेन तत्तद् फलं लभ्यते। किञ्च, तत्तद् देवानां बीजमन्त्रादिप्रयोगे सर्वमेतद् साधकेन ध्येयमिति दिक्।

## माहेश्वरसूत्रविषये कङ्कालमालिनीतन्त्रोक्तवर्णस्वरूपम्

भैरवभैरवीसंवादरूपेण प्रवृत्ते पञ्चपटलात्मके ह्यस्मिन् तन्त्रे आदौ भैरवी वर्णानां कारणं प्रच्छति। भैरवश्च प्रसङ्गेन गुरुलक्षणमुक्त्वा कौलमतानुसारेण

---

१. वा० शु० तं०—२।३१।

आदिक्षान्तमातृकाणां शब्दब्रह्मस्वरूपत्वमुन्मीलयति[1]। एतेन षोडशस्वरवर्णानां क्रमशो विद्युद्जिह्वा, करालास्या, गर्जिनी, धूम्रभैरवी, कालरात्रिः, विदारी, महारौद्री, भयङ्करी, संहारिणी, करालिनी, ऊर्ध्वकेशी, उग्रभैरवी, भीमाक्षी, डाकिनी, रुद्रडाकिनी, चण्डिकेति नामानि संगच्छन्ते। एवमेव व्यञ्जनवर्णानामपि तत्तद्देवतानामानि 'क्रोधीशो···इत्यारभ्य त्रैलोक्यग्रसनात्मक[2]' इत्यन्तानि कथितानि। कौलमते एषां पञ्चाशद्वर्णानां उक्तेन रूपेण ज्ञानाभावे काऽपि सिद्धिर्नोदेति। एते च वर्णाः सत्त्व-रजस्तमोमयास्तत्तत्फलसाधने साधकेनानुष्ठेया इति तत्र-तत्रोक्तं भवतीति दिक्।

## शारदातिलकग्रन्थोक्तवर्णानां माहेश्वरसूत्रप्रोक्तवर्णैः सह साम्यम्

वर्णाः शिवशक्तिमयाः। विश्वमिदं शिवशक्तिसामरस्यभूतम्। शक्तिर्हि शब्दरूपा शिवश्चार्थरूप इति शब्दार्थसृष्टिभ्यां स्थूल-सूक्ष्मभेदेनेयं सृष्टिः सर्वत्र उल्लसतीत्यत्र प्रबन्धे तत्र तत्रोक्तम्। अतो वागर्थसिद्धया सृष्टितत्त्वस्य सिद्धिः साधकः समधिगच्छति। तस्माद् वर्णविज्ञानं तत्त्वजिज्ञासुभिरवगन्तव्यमिति भूयो भूयो ममेयमभ्यर्थना। किञ्च, पौनः पुन्येनास्य निरूपणस्येदमेव तात्पर्यं यत् वर्णतत्त्वस्य ज्ञानेनैव जीवनस्य सार्थक्यं शास्त्राणामध्ययनस्य साफल्यञ्च सङ्गच्छत इति नाविदितं तत्त्वविदाम्। अत एतदेव तत्त्वं शारदातिलकग्रन्थमनुसृत्य किञ्चिद् विविच्यते—

शिवः सूर्याग्निरूपः, शक्तिः सोमरूपा। अथवा य एव शिवः सैव शक्तिः, उभयोः सामरस्यमिदं जगत्। तदुक्तम्—'शिवशक्तिमयान् प्राहुस्तस्माद् वर्णान् मनीषिणः[3]' इति। शिवशक्तिसामरस्येन बैन्दवं षट्त्रिंशत्तत्त्वात्मकमिदं जगदुत्पन्नम्। शक्तिरेव कुण्डलिनी पदवाच्या मूलकारणस्य (शिवस्य) शब्दस्योन्मुखीकरणावस्था। सैव सत्त्वप्रविष्टा चिच्छक्तिवाच्या परमाकाशावस्था, सैव सत्त्वप्रविष्टा रजोऽनुविद्धा सती ध्वनिपदवाच्या अक्षरावस्था, सैव तमोऽनुविद्धा नादशब्दवाच्या अव्यक्तावस्था, सैव तमःप्राचुर्यान्निरोधिकाशब्दवाच्या, सैव सत्त्वप्रायुर्यादर्धेन्दुपदवाच्या तदुभयसंयोगाद् बिन्दुशब्दवाच्या च। तदुक्तम्—

---

१. कथयामि वरारोहे वर्णानां भेदमुत्तमम्।
न प्रकाश्यं महादेवि! तव स्नेहात् सुभाषिणी॥
यज्ज्ञात्वा योगिनो यान्ति निर्गुणत्वं मम प्रिये।
तच्छृणुश्व स्वरूपेण महायौवनगर्विते॥
शब्दब्रह्मस्वरूपं तद् आदिक्षान्तं जगत्प्रभुः।
विद्युद्जिह्वा करालास्या गर्जिनी धूम्रभैरवी॥ (कं० मा० तं०-१।२ तः४ श्लोकाः।

२. कङ्कालमा०—१।७ तः ११ श्लोकाः।

३. शारदाति०—२।८।

इच्छाशक्तिबलोत्कृष्टो ज्ञानशक्तिप्रदीपकः ।
पुंरूपिणी च सा शक्तिः क्रियाख्या सृजति प्रभुः[1] ।। इति ।

असावेव बिन्दुः स्थानान्तरगतः पराद्याख्यो भवति । तथा च परामूले पश्यन्ती स्वाधिष्ठाने मध्यमा हृदये वैखरी मुखे प्रस्फुरन्ति । चैतन्याभासविशिष्टतया प्रकाशिका माया निष्पन्दा परावाक् । सस्पन्दावस्थाः पश्यन्त्याद्याः । ज्ञानात्मकत्वात् पश्यन्ती । सा च सामान्यप्रस्पन्दप्रकाशरूपा बिन्दुतत्त्वात्मिका मूलाधारादिनाभ्यन्तरव्यक्तिस्था । मध्ये मा बुद्धिर्यस्या सा मध्यमा । बाह्यान्तःकरणात्मिका हिरण्यगर्भरूपिणी नादबिन्दुमयी नाभ्यादिहृदयान्ताभिव्यक्तिस्था विशेषसङ्कल्पादिसतत्त्वा इति । विशेषेण खरत्वात् वैखरीति । विराड्रूपिणी बीजात्मिका हृदयाद्यास्यान्ताभिव्यक्तिस्था विशेषसङ्कल्पादिसतत्त्वा इति । अतो वर्णाः सोमसूर्याग्निरूपा शक्तिशिवात्मका[2] इति तत्र तत्रोह्यम् ।

सुषम्णारन्ध्रनिर्गता वर्णाः कण्ठादिकरणैः क्रमादाविर्भवन्ति । तदुक्तं भगवता भर्तृहरिणा—

आत्मा बुद्धचा समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।। इति ।

एवं हि तन्त्रागमशास्त्रोपदिष्टा माहेश्वरसूत्रप्रोक्ताश्च पञ्चाशदेकपञ्चशतद्विपञ्चाशद् वा वर्णाः क्रमशः समुत्पद्यन्ते । ते च वर्णाः सोमसूर्याग्निरूपा इति पूर्वमेवोक्तं मया । एषु वर्णेषु अकारादिविसर्गान्ताः षोडशसंख्याकाश्च स्वरा इत्युच्यन्ते । ककारादिमकारान्ता स्पर्शाः, यकारादिक्षकारान्ताश्च व्यापका[3] इति । इमे च शुभोदयाः सन्तः सोमसूर्याग्निदेवमया सन्ति । एषु स्पर्शवर्णेषु मकारः पुरुषः परमात्मस्वरूपो विश्वात्मा । भादयश्च इतरे वर्णाः प्रकृतिबुद्धचहङ्कारमनांसि

---

१. शारदाति०—१।१०८ टीकायाम् ।

२. जाता वर्णा यतो बिन्दोः शिवशक्तिमयादतः ।
अग्निसोमात्मकास्ते स्युः शिवशक्तिमयाद्रवेः ।।
येन सम्भवमापन्नाः सोमसूर्याग्निरूपिणः ।। इति । ( शा० ति० १।११३ )

३. एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभोदयाः ।
आग्नेया व्यापकाः सर्वे सोमसूर्याग्निदेवताः ।।
स्वराः षोडशविख्याताः स्पर्शास्ते पञ्चविंशतिः ।
तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः ।।
व्यापका दश ते कामधनधर्म्मप्रदायिनः । ( शा० ति०—२।२-४ । )

तन्मात्राः श्रोत्रत्वागाकाशादयः। एवं स्पर्शवर्णाः सांख्योक्तचतुर्विंशतितत्त्वमयाः। पूर्वोक्तो मकारः पुरुषाख्यः परमात्मा। सर्वं सम्मिल्य पञ्चविंशतिस्तत्त्वानि सम्पन्नानि। 'अन्त्य आत्मा रविः स्मृतः', 'बिन्दु-पुमान् रविः प्रोक्तः[1]' इति वचनाभ्यां मकारस्य बिन्दुरूपत्वम्। ते च स्पर्शवर्णाः स्वावयवेषु ककारादिषु अनुगतत्वात् सूर्यरूपबिन्द्वात्मना मकारेण स्पृश्यमानत्वात् स्पर्शाः, अत एव सौरा इत्युच्यन्ते। एवं यकारादयः दश व्यापकाः। ते च कामधनधर्मप्रदाः। शारदातिलकम्[2] श्रीमहाविद्यायाः साम्प्रदायिको ग्रन्थः। अत्र श्रीमहाविद्याया निखिलमेव शरीरं वर्णमयम्। तत्र हि शरीरे एते यादयो वर्णा क्व तिष्ठन्ति किञ्च फलमिति जिज्ञासायाम् तत्रैव ग्रन्थे उक्तम्—

> यादीनां दशवर्णानां कला धर्म्मप्रदा इमाः।
> अभयेष्टकरा ध्येयाः श्वेतपीतारुणाः क्रमात्[3] ॥ इति।

त्रिपुरसुन्दर्याः श्रीमहाविद्याया अभयमुद्रा[4] महीयसी सती भक्तानामिष्टसाधिका। तस्या दक्षिणहस्तः ऊर्ध्वः सन् अभयत्वं ददाति, अधोमुखो वामहस्तःसन् वरं प्रयच्छति। एषु यवर्गदशकेषु य र ल वाः श्वेताः, श ष साः पीताः, ह क्ष ज्ञाश्च वर्णा रक्तवर्णात्मका इति।

एवञ्च शारदातिलकोक्तक्रमेण अ इ उ ऋ ऌ ए ओ एते शिवमयाः पुंरूपा ह्रस्वस्वरा आख्याताः। दीर्घस्वराश्च आ ई ऊ ॠ ॡ ऐ औ इत्येते शक्तिमयाः स्त्रीरूपा आख्याताः। अं बिन्दुयुक्तः पुरुषो रविदेवात्मकः, विसर्गयुक्तश्च अः इति दीर्घरूपः सोमात्मकः। अ इ उ ए ओ अं इति ह्रस्ववर्णा पिङ्गलायां स्थिताः सन्तः पुंरूपत्वमावहन्तः सूर्यविग्रहाः शिवाख्या रेचकप्राणायामस्याधारभूता दक्षिणवायुना प्रेरिताः शरीरस्य दक्षिणे भागे वर्तन्ते। परे दीर्घाः आ ई ऊ ऐ औ इति वर्णा स्त्रीरूपाः सन्तः शक्त्यात्मकाश्च इडायां पूरकवायौ स्थिताः शरीरस्य वामभागे स्थिताः साक्षादमृतविग्रहा भवन्ति। अग्निरूपिणी मूलदा ब्रह्मरन्ध्रगा सर्वतेजोमयी

---

१. शा० ति०—२।६।

२. 'तिल-स्नेहने' इति धातोरौणादिकः क्वुन् ( उ० २।३२ ) प्रत्ययः। 'तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके। तिलकं रुचके लोम्नि ( हैमः ३।४७-४८ )। एवं हि—चित्रकं तिलके ना तु व्याघ्रभिच्चञ्चुपाटिषु' ( मे०-८।८८ )। इत्यनेन तिलकशब्दः पुल्लिङ्गे नपुंसकलिङ्गे उभयत्र च दृश्यते। परमत्र चन्दनार्थेऽभिप्रेतत्वान्नपुंसक एव प्रयोगः साधुः।

३. शा० ति०—२।१६।

४. ऊर्ध्वीकृतो दक्षहस्तः प्रसृतोऽभयमुद्रिका।
अधोमुखो वामहस्तः प्रसृतो वरमुद्रिका॥ ( शा० ति० टीका—२।१२ )।

सर्वदेवमयी सती पूरकस्वासस्याधारभूता मृणालतन्तुरूपिणी सुषुम्नानाडी ब्रह्मनाडीं स्वक्रोडे आधाय कुण्डलिनीमाश्रित्य वाम-दक्षिणावर्तक्रमेण विषतन्तुवद् इडापिङ्गले संवेष्टच षट्चक्रान् भेदयन्ती सहस्रारपर्यन्तं गच्छति। अत्रैव प्राणवायोः कुम्भक-विधिना स्थितिर्भवति। अस्यामेव सुषम्णायां ऋ ॠ ऌ ॡ इति वर्णा नपुंसकाः साधकानामभीष्टं साधयन्ति। अयमत्र प्रकारः—उत्तरभागाद्दक्षिणभागप्रवेशारम्भ समये कञ्चित्कालमुभयत्र वहृति देहवायुः। स दक्षिणायनप्रारम्भसमयः। अस्मिन् काले ऋ ऌ कारात्मकं ह्रस्वद्वन्द्वमुदेति। एवं दक्षिणादुत्तरभागप्रवेश-प्रारम्भसमये कञ्चित्कालमुभयत्र वहृति देहवायुः। स उत्तरायणसंक्रमकालः, तदा ॠ ॡ दीर्घद्वन्द्वमुदेति। तदुक्तं ग्रन्थे—

पिङ्गलायां स्थिता ह्रस्वा इड़ायां सङ्गता परे।
सुषुम्णामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः[१] ॥ इति।

अत उक्तं भवति यद् सुषम्णायां नपुंसकोदयो इड़ापिङ्गलयोरपि तत्रान्तर्भा-वात् तद्वर्णा अपि तत्रान्तर्भन्ति। ताभ्यां विना तदुदयाभावात्। अत एवोक्तम्—'मध्या तास्वपि नाड़ी स्यादग्नीषोमस्वरूपिणी'[२] इति।

प्रत्येके हि व्यञ्जनवर्णाः सोमसूर्याग्निरूपाः। यतो हि 'न पुनरन्तरेणाचं व्यञ्जनानामुच्चारणं सम्भवतीति' महाभाष्यवचनात् शिवशक्तिमयत्वाच्च व्यञ्ज-नानां स्वरमूलकत्वं ज्ञेयम्। तस्मादेव शब्दार्थमूला सृष्टिरुदेति। तदुक्तं शारदा-तिलके—

विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा।
शिवशक्तिमयान् प्राहुस्तस्माद् वर्णान् मनीषिणः[३] ॥ इति।

अत्र स्वराणां पूर्वं शिवशक्तिमयत्वमुक्तम्। हलाञ्च विना स्वरैरुच्चारण-स्याशक्यत्वात् स्वरसहितोच्चारणे शिवशक्तिमयत्वमिति। एवं स्वरोदयेन तत्प्रधानत्वात् व्यञ्जनानामुदयो ज्ञेयः। तयोर्योगेनैव नानामन्त्राणां उदयो भव-तीति। अत एव अकारादिक्षकारान्तवर्णसमुदायस्य मातृकेति संज्ञा संगच्छते। इयमेव वर्णमातृका वर्णसमुदायो वर्णमाला वा संज्ञया अपि सम्बोध्या भवति।

एवं हि पञ्चाशतप्रणवकलाः तासामुत्पत्तिर्नामानि, पञ्चाशतरुद्रस्त-च्छक्तिर्नामानि, पञ्चाशत्केशवस्तच्छक्तिनर्नामानि च ग्रन्थे महासमारोहेण सन्ति गणितानि।

## मातृकातो मन्त्रोत्पत्तिः

शारदातिलकमिति ग्रन्थः श्रीमहाविद्यायाः साम्प्रदायिकः। तत्र हि वर्णानां

१. शा० ति०—२।७। २. तत्रैव—१।४१। ३. शा० ति०—२।८।

तज्जन्य मन्त्रानुष्ठानानामेव माहात्म्यं तत्र तत्रोल्लसति। तत्र मातृकायाः पर्याया यथा—जया, दुर्गा, प्रभा, सत्या, चण्डा, वाणी, विलासिनी, विजया, विरजा, विश्वा, विनदा, सुनदा, स्मृतिः, ऋद्धिः, समृद्धिः, शुद्धिः, भक्तिः, बुद्धिः, क्षमा, रमा, उमा, क्लेदिनी, क्लिन्ना, वसुदा, वसुधा, अपरा, परा, परायणा, सूक्ष्मा, सन्ध्या, प्रज्ञा, प्रभा, निशा, अमोघा, विद्युता, कीर्तिः, आद्या, सर्वकामदा[1] इति। एता मातृकाः खलु पङ्कजाभयमुद्रासहिताः शिवस्याङ्के निषण्णाः सस्मिताननाः ख्याताः।

एवञ्च मातृकावर्णभेदेभ्य एव सर्वे मन्त्रा समुत्पन्नाः सन्ति। ते च मन्त्रा सोमसूर्यानिलात्मकाः शिवशक्तिमयाश्च। पुनश्च ते मन्त्रविद्याविभागेन त्रिविधाः सन्तः पुंस्त्रीनपुंसका यथा मातृका उपदिष्टास्तथैव भवन्ति। तत्र मन्त्राः पुंदेवताः, विद्याश्च स्त्रीदेवताः स्मृताः। स्वरवर्णचतुष्काः ऋ ॠ ऌ ॡ वर्णात्मकाश्च नपुंसकाः। स्वरैर्विना अन्येषामपि वर्णानामुच्चारणाभावात् तदात्मकत्वं मन्त्राणामुक्तं भवति। अत्रेयं शङ्का जागर्ति यद् निष्कलचैतन्याखण्डानन्दवाच्यस्य मन्त्रस्य कथं पुंनपुंसकस्त्र्यादिकल्पनमिति? तदुच्यते—यद्यपि मन्त्रेषु स्त्रीपुंरूपादिकल्पना न योग्या, तथापि उपासकानामर्थे तथा कल्पनायाः सत्त्वात्तथोक्तम्[2]। तथा च पुंमन्त्रा हुंफडन्ताः, द्विठान्ताश्च स्त्रियः, नमोऽन्ता नपुंसकाः सन्तस्त्रिविधा मन्त्रा आख्याता[3] इति। एवमेव वर्ण-पद-मन्त्रविषयेऽत्र ग्रन्थे बहुविवेचितम्। अत्रत्य वर्णविज्ञानमवलोक्य माहेश्वरचतुर्दशसूत्राणां महत्त्वं नूनं ज्ञातं भवति येन माहेश्वरसूत्रोक्तवर्णसमाम्नायस्य स्वरूपकल्पना अस्माभिः सर्वैरेव कर्तव्या। अद्यत्वे पठनपाठनादिसम्प्रदायेषु तथा न सम्यगध्याप्यते येन बहवो वैयाकरणाः परिनिष्ठिताः सन्त अपि वर्णवैशिष्ट्यं तथा नावबुद्ध्यन्ते, यथा खलु आवश्यकम्। तैरवश्यमस्य वर्णविज्ञानस्य रहस्यमवधेयमित्यर्थमेवायमस्माकं यत्नः। एतदर्थमेव केनचिद् तत्वज्ञेनोक्तम्—'यद्यपि बहुनाधीशे तथापि पुत्र पठ व्याकरणमिति' सर्वं साम्बशिवाय स्यादिति विरमामि।

## अन्यतन्त्रागमग्रन्थेषु माहेश्वरसूत्रोक्तवर्णस्थितिः

तन्त्रागमशास्त्रं शैवशाक्ततत्त्वविचारप्रधानम्। तत्र सर्वत्रैव शिवशक्तिमुखेन वर्णानां विचारः समजनि। तत्रापि श्रीविद्यायाः सम्प्रदाये किञ्च, त्रिपुरासम्प्र-

---

१. शा० ति०—६२।५३ तः ५५।

२. चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना।
रूपस्थानां देवतानां पुंस्त्र्यङ्गादिप्रकल्पना॥ (शा० ति० २।५८ टीकायाम्)।

३. पुंमन्त्रा हुंफडन्ताः स्युर्द्विठन्ताश्च स्त्रियो मताः।
नपुंसका नमोऽन्ताः स्युरित्युक्ता मनवस्त्रिधा॥ (शा० ति०—२।५९)।

२४

दायेऽपि एतद्वैशिष्टयेन निगदितम्, तं ज्ञात्वा तत्त्ववेत्तारो भवन्ति खलु साधकाः। अत्र सर्वत्र विलोममातृकायाः, बहिर्मातृकायाः, अन्तर्मातृकायाश्च भूयस्त्वेन विचारो दृश्यते। इदानीं प्रचलिताया मातृकायाः सबिन्दुः प्रतिलोमरूप एव विलोम—मातृकेत्यभिधीयते। लिपिमयीदेवी एवास्ति बहिर्मातृका। अत्र क्रम-विशेषेण अकारादिवर्णैरेव देव्यवयवानां निर्मितिः संगच्छते। आधार-स्वाधिष्ठान मणिपूरानाहतादिचक्रेषु यदा च साधकः मातृकावर्णानां वं शं षं सं प्रभृतीनां न्यासः करोति तदा सा स्थितिरन्तर्मातृकापदेनाभिधीयते। अकारादारभ्य क्षका-रान्तं क्रमः सुश्लिष्टः, अकारश्च मातृकाद्यः[१] क्षकारश्च मातृकान्त इत्युच्यते[२]।

मुनिवर्यः सौभरिः स्व 'मातृकानाममाला' नाम्नि ग्रन्थे सर्वस्यादौ अकारादि षोडशस्वरास्तदनु ककारादारभ्य क्षान्तं व्यञ्जनानि मात्राश्च विनिर्दिश्य वर्णान् पृथक्-पृथक् व्याख्यातवान्, मातृकाणां प्रचलितं स्वरूपं तावदारभ्याधुना यावद् तद्वदेव प्रचलति[३]। 'हरिनामामृतं' नाम्नि जीवगोस्वामिनो वैष्णव-व्याकरणे अस्याः परम्परायाः प्रादुर्भावो नारायणेन स्वीक्रियते[४] इति।

पाणिनिना स्वीकृतायाः माहेश्वरसूत्रप्रोक्तायाः नन्दिकेश्वरेण व्याख्यातायाश्च वर्णमालायाः क्रमः पूर्वोक्तमातृकाक्रमेणाभिन्नः। एवञ्चेयं मातृका अष्टविधशब्द-व्याप्तिरादिक्षान्तपञ्चाशद्वर्णभट्टारकरूपतया समस्तमन्त्रादिमयशुद्धाशुद्धजगज्ज-ननी पारमेश्वरी क्रियाशक्तिः। एषैव च अक्रमा अपि समस्त वाच्यवाचकात्मवा-ङ्मयाभासरूपतया सक्रमा क्रिया उच्यते। तथा चोक्तं नेत्रतन्त्रे—

यदा स्वतन्त्रलुप्ता सा क्रियाकारणरूपिणी।
वर्णारूपाष्टभेदेन स्फोटादिध्वनिरूपिणी ।

मातृका सा विनिर्दिष्टा क्रियाशक्तिर्महेश्वरी॥
क्रियाख्या परमा सा तु सर्ववाङ्मयरूपिणी[५]॥ इति॥

देशिकेन्द्रदुर्वाससा प्रोक्ते शक्तिस्तोत्रे चाहमिति पदस्य नानार्थकता, पदवाक्यानाञ्च स्वरूपपरता, अर्थादभिन्नता, कर्मणोऽभीष्टफलरूपेणार्थप्रदानतादि च सिद्धयति। यथा हि—

---

१. मातृकाद्यः स्वराद्यश्च—प्रथमो भवेत्॥ २॥ ( मातृकानिघण्टुः )

२. क्षः कोप—मातृकान्तोऽनलक्षयौ॥ १७२॥ ( प्रकारान्तरमन्त्राभिधानम् )

३. मालेयं मातृकावर्णैः कृता सौभारिणा पुरा।
विस्तृताङ्गिरसा भूमौ विद्वच्चेतः प्रसादिनी॥ इति। ( मातृकाविलासे—पृ० ९६ )

४. मातृकाविलासे—पृ० ८६। ५. नेत्रतन्त्रे—२१।३७-३८-३९ श्लोकाः।

पञ्चाशन्निजदेहजाक्षरमयैर्नानाविधैर्धातुभिः-
बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः ।
साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं
विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके[1] ।। इति ।

अकारहकारयोरनुस्वारविसर्गरूपस्याहमिति पदस्य गीतायामपि निरूपणं दृश्यते । तथा हि—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः[2] ।। इति ।

पुण्यानन्दाचार्यकृतकामकलाविलासटीकायाम्— "स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहन्तारूपिणी प्रकाशानन्दसारा बिन्दुत्रयसमष्टिरूपलिप्यक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी मातृका परमयोगिभिः महामहेश्वरैरनिशमनुस्मर्तव्या इति[3]" इत्युक्तम् ।

माहेश्वरसूत्रप्रोक्तस्य स्वरव्यञ्जनवर्णसमुदायस्य शिवशक्तिमयत्वात् बीजयोनिसम्बन्धकल्पनमपि तन्त्रशास्त्रे समधिगच्छति । तत्र व्यञ्जनानि योन्याख्यानि स्वराश्च बीजाख्याः । तथा हि—

बीजयोन्यात्मकाद् भेदात् द्विधा बीजं स्वरा मता ।
कादिभिश्च स्मृता योनिर्नवधावर्गभेदतः ।।
बीजमत्र शिवः शक्तिर्योनिरित्यभिधीयते[4] ।। इति ।

'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणं सम्भवतीति' व्याकरणागमसिद्धान्तस्य पुष्टिः स्वरव्यञ्जनवर्णयोर्बीजयोनिनामधेययोः परस्परमविनाभावसम्बन्धात्तयोरपार्थक्यं मन्तव्यम् । तथा च बीजयोनिवर्णानां सामरस्याज्जनिता नानाविधिसर्गोदयैरलङ्कृतेयं मालिनीत्यपरसंज्ञावधारिणी अहमित्याकारा मातृका विश्वरूपिणीत्यपि कथ्यते । उक्तञ्च—

बीजयोनिसमापत्तिविसर्गोदयसुन्दरा ।
मालिनी हि पराशक्तिर्निर्णीता विश्वरूपिणी[5] ।। इति ।

## नन्दिकेश्वरकृतकाशिकायां माहेश्वरसूत्रोक्तवर्णसमाम्नायसमीक्षणम्

ममनिबन्धस्याधारभूतासु महामहोपाध्यायनागोजिभट्टव्याकरणकृतिषु कुत्र कुत्र तन्त्रागमशास्त्रप्रभावो निपतित इति विचारणायां माहेश्वरसूत्रविषये तन्त्रा-

१. श्रीत्रिपुरमहिम्नस्तोत्रे—श्लो–२७ । २. गीता—८।३ ।
३. कामकलाविलासे—पृ० ११ ।
४. मालिनीविजयोत्तरतन्त्रे—३।१०-११-१२ श्लोकाः । ५. श्रीतन्त्रा० ३।२३३ ।

नुसारिव्याख्यानं लघुशब्देन्दुशेखरग्रन्थे संज्ञाप्रकरणादौ दृश्यते। तत्र तेन नन्दिकेश्वरकाशिकाया अप्युल्लेखः कृतः। एतेनेदं प्रतीयते यद् नागोजिभट्टो नन्दिकेश्वरकाशिकायाः सम्यगालोडनं कृतवान्, नन्दिकेश्वरश्च—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम् [1]॥ इत्युक्तम्।

इयं हि नन्दिकेश्वरकाशिकायाः प्रथमकारिका। कारिकेयमुपमन्युकृतव्याख्यासंवलिता। एवञ्च विश्वरूपविलासवैचित्र्यचमत्कारप्रवीणनटराजराजो भगवान् शिवः वागाद्यगोचरं स्वान्तर्गतमात्मतत्त्वं नृत्यावसाने ढक्कानिनादेन सनकादीनुद्धर्तुकामो चतुर्दशवारं अतिरहस्यमयं शिवसूत्रजालम् प्रकाशयामास। तथा चात्र काशिकायाम् अ इ उ ण् इति सूत्रप्रतीकमादायाह—नन्दिकेश्वरः—

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु।
चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः॥

अकारः सर्ववर्णाग्र्य प्रकाशः परमेश्वरः।
आद्यमन्त्येन संयोगादहमित्येव जायते॥

सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता॥

वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः।
सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता॥

अकारं संनिधीकृत्य जगतां कारणत्वतः।
इकारः सर्ववर्णानां शक्तित्वात् कारणं गतम्॥

जगत् स्रष्टुमभूदिच्छा यदा ह्यासीत्तदाभवत्।
कामबीजमिति प्राहुर्मुनयो वेदपारगाः॥

अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता।
उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः [2] ॥ इत्याह :

**अयं भावः**—इह खलु सकललोकनायकः परमेश्वरः परमशिवः सनकसनन्दनसनातनसनत्कुमारादीन् श्रोतॄन् नन्किश—पाणिनिपतञ्जलिव्याघ्रपादवशिष्ठादीनुद्धर्तुकामो डमरुनिनादव्याजेन चतुर्दशसूत्र्यात्मकं वर्णतत्त्वमुपदिदेश। तदनु ते सर्वे मुनीन्द्रवर्याश्चिरकालमाश्रितानामस्माकं तत्त्वं चतुर्दशसूत्र्यात्मकमुपदिदेशेति मत्वा अस्य सूत्रजालस्य तत्त्वार्थं नन्दिकेश्वरो जानातीति नन्दिकेश्वरं प्रणिपत्य पृष्टवन्तः। ततस्तेषु पृष्टवत्सु स षड्विंशतिकारिकारूपेण तत्त्वं सूत्राणामुपदेष्टुमिच्छन्निद-

१. नन्दिकेश्वरका०—१।  २. तत्रैव—३-४-५-६-७-८-९ कारिकाः।

माचचक्षे—'नृत्तावसानेति'। अत्राहं रूपोद्भूतवर्णात्मकमाद्यमतिरहस्यमेतच्छिव-सूत्रजालं शिवसम्बन्धिसूत्रसमूहं कल्याणरूपसूत्रसमूहं वा स्फुटम्। तथा च अ इ उ ण् इति प्रथमे सूत्रे अकारोपदेशः समग्रवर्णानां समस्तभुवनानाञ्चात्मरूपेणोक्तः। अतः अः परमेश्वरो निर्गुणः इं सन् मायामाश्रित्य उः व्यापकः सगुणः ईश्वरः णः आसीदिति सूत्रार्थः सूचितः। एवञ्च 'आदिरन्त्येन सहेता' इति सूत्रेण ज्ञायते यदादिरकारोऽन्त्यो हकारः, अकारादिहकारान्ता वर्णास्ततः परमात्मनः शक्तियुतस्य समभवन्निति। स चेश्वर एवानादिजीवोपाध्यमाख्यमुपेत्य हृदि पश्यन्त्याख्यमुपेत्य विशुद्धचक्रे मध्यमाख्यमुपेत्य पश्चाद्वक्त्रे वैखर्याख्यमवाप्य वेदादिरूपो भवति। तस्मात्संक्षेपेण अ इ उ ण् इत्यस्य व्याख्यानं सम्पन्नम्।

ॠऌकित्यत्र ॠ परमेश्वरः, ऌ मायाख्यां मनोवृत्तिं क् अदर्शयत्, तामेवाश्रित्य स्वेच्छया जगज्जनयामासेत्यर्थः। ॠ परमेश्वर इत्यत्र 'ॠतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' इति श्रुतिप्रमाणम्। श्रीतन्त्रेऽपि—मत्तोह्यभून्मनोरूपं ऌकारः परमेश्वरि' इत्युक्तम्। तस्मादुक्तञ्च—

ॠ ऌ क् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत्।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत्॥

वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते।
चन्द्रचन्द्रिकयोर्यद्वद् यथावागर्थयोरपि॥

स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ।
वर्णानां मध्यमं क्लीवमृऌवर्णद्वयं विदुः[1]॥ इति।

ए ओ ङ् इति माहेश्वरसूत्रमाश्रित्य नन्दिकेश्वरकाशिकाकारटीकयितोपमन्यु:—अकारोकाराभ्यां निष्पन्नप्रणवरूपेणौकारेण सगुणनिर्गुणयोरैक्ये बोधिते तेनैव सिद्धान्तेन सर्वत्रैक्यबुद्धौ द्वैतनिरासो ध्वनितः। समष्टिव्यष्टिभेदेन पूर्ववर्ण-युतद्वितीयस्य तद्युततृतीयस्य च समन्वयबोधकमिदं सूत्रम्[2]' इत्यवोचत्। तथा च कारिका—

ए ओ ङ् मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु।
साक्षित्वात् सर्वभूतानां स एक इति निश्चितम्[3]॥ इति।

ऐ ओ जिति सूत्रमाश्रित्य—

ऐ औ च् ब्रह्मस्वरूपः सन् जगत् स्वान्तर्गतं ततः।
इच्छया विस्तरं कर्तुमाविरासीन्महामुनिः[4]॥

इत्याह कारिकाम्।

---

१. नन्दिकेश्वरका०—१०-११-१२ कारिकाः। २. तत्रैव का० १३। व्याख्यायाम्।
३. तत्रैव—का० १३। ४. तत्रैव—का० १४।

नुसारिव्याख्यानं लघुशब्देन्दुशेखरग्रन्थे संज्ञाप्रकरणादौ दृश्यते। तत्र तेन नन्दिकेश्वरकाशिकाया अप्युल्लेखः कृतः। एतेनेदं प्रतीयते यद् नागोजिभट्टो नन्दिकेश्वरकाशिकायाः सम्यगालोडनं कृतवान्, नन्दिकेश्वरश्च—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धानेतद् विमर्शे शिवसूत्रजालम् [1]॥ इत्युक्तम्।

इयं हि नन्दिकेश्वरकाशिकायाः प्रथमकारिका। कारिकेयमुपमन्युकृतव्याख्यासंवलिता। एवञ्च विश्वरूपविलासवैचित्र्यचमत्कारप्रवीणनटराजराजो भगवान् शिवः वागाद्यगोचरं स्वान्तर्गतमात्मतत्त्वं नृत्यावसाने ढक्कानिनादेन सनकादीनुद्धतुकामो चतुर्दशवारं अतिरहस्यमयं शिवसूत्रजालम् प्रकाशयामास। तथा चात्र काशिकायाम् अ इ उ ण् इति सूत्रप्रतीकमादायाह–नन्दिकेश्वरः—

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु।
चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः॥

अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः।
आद्यमन्त्येन संयोगादहमित्येव जायते॥

सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत्।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता॥

वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः।
सृष्ट्याविर्भावमासाद्य मध्यमा वाक् समा मता॥

अकारं संनिधीकृत्य जगतां कारणत्वतः।
इकारः सर्ववर्णानां शक्तित्वात् कारणं गतम्॥

जगत् स्रष्टुमभूदिच्छा यदा ह्यासीत्तदाभवत्।
कामबीजमिति प्राहुर्मुनयो वेदपारगाः॥

अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता।
उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः [2] ॥ इत्याह :

**अयं भावः—**इह खलु सकललोकनायकः परमेश्वरः परमशिवः सनकसनन्दनसनातनसनत्कुमारादीन् श्रोतॄन् नन्किेश—पाणिनिपतञ्जलिव्याघ्रपादवशिष्ठादीनुद्धर्तुकामो डमरुनिनादव्याजेन चतुर्दशसूत्र्यात्मकं वर्णतत्त्वमुपदिदेश। तदनु ते सर्वे मुनीन्द्रवर्याश्चिरकालमाश्रितानामस्माकं तत्त्वं चतुर्दशसूत्र्यात्मकमुपदिदेशेति मत्वा अस्य सूत्रजालस्य तत्त्वार्थं नन्दिकेश्वरो जानातीति नन्दिकेश्वरं प्रणिपत्य पृष्टवन्तः। ततस्तेषु पृष्टवत्सु स षड्विंशतिकारिकारूपेण तत्त्वं सूत्राणामुपदेष्टुमिच्छन्निद-

१. नन्दिकेश्वरका०—१। २. तत्रैव—३-४-५-६-७-८-९ कारिकाः।

माचचक्षे—'नृत्तावसानेति'। अत्राहं रूपोद्भूतवर्णात्मकमाद्यमतिरहस्यमेतच्छिव-सूत्रजालं शिवसम्बन्धिसूत्रसमूहं कल्याणरूपसूत्रसमूहं वा स्फुटम्। तथा च अ इ उ ण् इति प्रथमे सूत्रे अकारोपदेशः समग्रवर्णानां समस्तभुवनानाञ्चात्मरूपेणोक्तः। अतः अः परमेश्वरो निर्गुणः इं सन् मायामाश्रित्य उः व्यापकः सगुणः ईश्वरः णः आसीदिति सूत्रार्थः सूचितः। एवञ्च 'आदिरन्त्येन सहेता' इति सूत्रेण ज्ञायते यदादिरकारोऽन्त्यो हकारः, अकारादिहकारान्ता वर्णास्ततः परमात्मनः शक्तियुतस्य समभवन्निति। स चेश्वर एवानादिजीवोपाध्यमाख्यमुपेत्य हृदि पश्यन्त्याख्यमुपेत्य विशुद्धचक्रे मध्यमाख्यमुपेत्य पश्चाद्वक्त्रे वैखर्याख्यमवाप्य वेदादिरूपो भवति। तस्मात्संक्षेपेण अ इ उ ण् इत्यस्य व्याख्यानं सम्पन्नम्।

ऋलृकित्यत्र ऋ परमेश्वरः, लृ मायाख्यां मनोवृत्तिं क् अदर्शयत्, तामेवाश्रित्य स्वेच्छया जगज्जनयामासेत्यर्थः। ऋ परमेश्वर इत्यत्र 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' इति श्रुतिप्रमाणम्। श्रीतन्त्रेऽपि—मत्तोह्यभून्मनोरूपं लृकारः परमेश्वरि' इत्युक्तम्। तस्मादुक्तञ्च—

ऋ लृ क् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत्।
तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत्॥

वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते।
चन्द्रचन्द्रिकयोर्यद्वद् यथावागर्थयोरपि॥

स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ।
वर्णानां मध्यमं क्लीबमृलृवर्णद्वयं विदुः[1]॥ इति।

ए ओ ङ् इति माहेश्वरसूत्रमाश्रित्य नन्दिकेश्वरकाशिकाकारटीकयितोपमन्यु:—अकारोकाराभ्यां निष्पन्नप्रणवरूपेणौकारेण सगुणनिर्गुणयोरैक्ये बोधिते तेनैव सिद्धान्तेन सर्वत्रैक्यबुद्धौ द्वैतनिरासो ध्वनितः। समष्टिव्यष्टिभेदेन पूर्ववर्ण-युतद्वितीयस्य तद्युततृतीयस्य च समन्वयबोधकमिदं सूत्रम्[2]' इत्यवोचत्। तथा च कारिका—

ए ओ ङ् मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु।
साक्षित्वात् सर्वभूतानां स एक इति निश्चितम्[3]॥ इति।

ऐ ओ जिति सूत्रमाश्रित्य—

ऐ औ च् ब्रह्मस्वरूपः सन् जगत् स्वान्तर्गतं ततः।
इच्छया विस्तरं कर्तुमाविरासीन्महामुनिः[4]॥

इत्याह कारिकाम्।

---

१. नन्दिकेश्वरका०—१०-११-१२ कारिकाः। २. तत्रैव का० १३। व्याख्यायाम्। ३. तत्रैव—का० १३। ४. तत्रैव—का० १४।

**अयमाशयः**—अकारेकारदीर्घयोगस्यैव ऐकारत्वमेकत्वञ्च। यतो हि सम्प्रज्ञानस्वरूपपरपरमेश्वरो यः स पूर्वसूत्रगत एव, अकारदीर्घस्य उकारदीर्घस्यैव योगे औकारत्वम्, यःसः प्रज्ञानात्मा मायाशबलितः स एकारो यः स आ ई आ ऊ इत्याविर्भावे उक्तः। उक्तञ्चेश्वरविमर्शिन्याम्—'अकारेकारोकाराणां ह्रस्व-दीर्घाणां संयोगात् सर्वसम्भूतिरिष्यते' इति। 'इच्छाया जगद्विस्तारयितुमुद्युक्तः' इत्यर्थः। तदुक्तं ज्ञानोत्तमे—'प्रणवेन जगद् व्याप्तं मायायामवतिष्ठते' इति। एवं तत्तत्समुदायानां त्रयोदशवर्णाच्छिवादिप्रकृत्यन्तानामुद्भवः। प्रकृतिपुरुषविवेक-मुत्तरत्र कथयत्यस्मिन् सूत्रे, उपहारत्वेन पठितम्। अत्र ह्रस्वदीर्घप्रभेदाच्चतुर्दश-स्वराणामेव संकीर्तनं चतुर्दशभुवन चतुर्दशचक्र चतुर्दशप्रकाराणामिति निष्कर्षः। तदुक्तं मन्त्रतत्त्वप्रकाशिन्याम्—

तवमन्त्रं महेशानि मम रूपं त्वमेव हि।
चतुर्दशात्मकं चक्रं स्वरचक्रमितीरितम्॥
त्रयोदशात्मकं तुर्यमावयोर्मन्त्रमम्बिके।
उच्छूनकाले बिन्द्वात्मा तस्मादक्षरसम्भवः॥

इत्यादिः। (तत्रैव टीकायाम्)

क्रमेणैवमेव ह य व र ट् इति सूत्रमाधारीकृत्य—

भूतपञ्चकमेतस्माद्धयवरणमहेश्वरात्।
व्योमवाय्वम्बुवह्न्याख्यभूतान्यासीत् स एव हि॥
हकाराद्व्योमसंज्ञं च यकाराद्वायुरुच्यते।
रकाराद्वह्निस्तोयं तु वकारादिति सैव वाक्[1]॥ इति।

तदुक्तं श्रुतावपि—'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति।

ल ण् इति षष्ठसूत्रमादायोक्तम्—

आधारभूतं भूतानामन्नादीनां च कारणम्।
अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम्[2]॥ इति।

एवमेवान्येषु सूत्रेषु तन्मात्राणामिद्रियाणां प्राण-बुद्ध्यहङ्कारादीनां गुणाना-ञ्चोत्पत्तिस्तत्र तत्र निर्दिष्टा। हलित्यवसानिके चतुर्दशे सूत्रे सर्वानुग्रहसाक्षी तत्त्वातीतो हल्स्यामिति ढक्कानिनादव्याजेन सर्वेषां मुनिजनानां तत्त्वमुपदिशन् तिरोदधे। यतो हि हकारः शिववर्णः स्यादिति शैवागमराद्धान्तः। तथा चोक्तम्—

१. नन्दिकेश्वर का०—१५-१६। २. तत्रैव—का० १७।

तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः ।
अहमात्मा परो हल् स्यामिति शम्भुस्तिरोदधे[1] ।। इति ।

एवमेव तन्त्रागमे पञ्चाशद्वर्णमातृकाणां पृथक्-पृथक् स्वरूपस्थितिः, तद्वर्णस्थितदेवता तस्य स्मरणफलादिकञ्च तत्र तत्र विस्तरेण निरूपितम् । एतदर्थम्—वातुलशुद्धाख्यं तन्त्रं कामधेनुतन्त्रादिकञ्च द्रष्टव्यम् । क्रमदर्शनस्य 'चिद्गगनचन्द्रिका' इत्याख्ये ग्रन्थेऽपि एष विषयो विस्तरेण निरूपितः । किञ्च समग्रे वैदिके वाङ्मये प्रणवस्य माहात्म्यमुखेन मन्त्राणामुच्चारणमुखेन चेदमेव माहात्म्यं तत्र तत्रोल्लसति । तदुक्तं ऋङ्मन्त्रे—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते[2] ।।

अस्य मन्त्रस्य व्याख्याने ऋगर्थदीपिकायां तत्र भवान् वेङ्कटमाधवः प्राह— 'अथादित्यस्य यद्वाचकमक्षरं तत्स्तौति—यस्मादक्षराणि स्वभावात् सर्वा ऋचो विनिर्गताः, यस्मिंश्च सर्व एव । देवा ऋक्षु दृश्यमाना अन्ये च वर्तन्ते यस्तदक्षरं न वेत्ति सः किं ऋचा करिष्यति ये एव तद्विदुस्ते इमे नक्षत्ररूपेण दिवि आसते ओमिति प्रतिपद्यन्ते—'एतद् वै यजुः त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरम्'। तदेतत् ऋचाभ्युक्तम्—'ऋचो अक्षरे परमे व्योमन्' इति ब्राह्मणम्[3]' इति ।

अस्यैव मन्त्रस्यार्थं वितन्वन् भगवता स्कन्दस्वामिना अप्युक्तम्—'एतदक्षरं परमं चेदं व्योम स्थानम् । अग्न्यादिनानादेवतानां मन्त्राणां सर्वस्याश्च त्रय्यास्तदध्ययनस्य चोङ्कारपूर्वकत्वात् अथवा परमेतज्जगतः । कथम् ? विमोतत्वात् ( विविधं जगतामोतत्वात् ) । इदं प्रणवाख्यं ब्रह्म जगतः कारणमित्युपनिषत्सु वर्णितम् । तस्य किलोमित्येतस्य ब्रह्मणः प्रथमायां मात्रायां पृथिव्यग्निर्ऋग्वेदः पृथिवीनिवासिनो जना इत्येतत् । द्वितीयायां मात्रायां अन्तरिक्षं वायुर्यजूंषि अन्तरिक्षनिवासिनो जना इत्येतत् । तेनेदं जगतः परं व्योम अथवा परमं व्योम— 'मृत्योर्बिभ्यतां देवानां तदेतत् परस्मिन् पादे वक्ष्यते, तस्मिन्नेवं रूपे परमे व्योमन् लुक् सप्तम्याः[4]' इति । एवमेवाभिप्रायस्तत्रत्ये निरुक्ते त्रयोदशाध्याये यास्काचार्यस्यापीष्टः । तच्च तत्रैवावलोकनीयम् ।

तैत्तिरीयब्राह्मणे च—

वाचं देवा उपजीवन्ति विश्वे वाचं गन्धर्वा पशवो मनुष्याः । वाचीमा विश्वा भुवनान्यर्पिता सा नो हवं जुषतामिन्द्रपत्नी । वागक्षरं प्रथमजा ऋतस्य वेदानां माताऽमृतस्य नाभिरिति इत्युक्तम्[5] ।

---

१. नन्दि का०–का० २७ । २. ऋ० सं०–१।१६४।३९ । ३. तत्रैव–ऋगर्थदीपिकायाम् ।
४. तत्रैव—स्कन्दस्वामिनो व्याख्यायाम् । ५. तै० ब्रा०—२।८।८।५ ।

एवमेवार्थभावः शतपथब्राह्मणेऽपि निगदितः—

'सैषा त्रय्येव विद्या तपति। तद्धैतद्विद्वांस आहुः— त्रयी वा एषा विद्या तपतीति। वाग्हैव तत्पश्यन्ती वदति[१]' इति।

महाभाष्ये व्याकरणाध्ययनप्रयोजननिरूपणे 'उतत्वः' इति निर्देशेन अक्षर-तत्त्वप्रतिपन्नस्य वाक्तत्त्वस्यैव महत्त्वमुरीकृतम्—

उतत्वः पश्यन्न ददर्श वाचमुतत्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्यु उशती सुवासाः[२]॥ इत्यनेन।

एवमेव वैदिकवाङ्मयस्य वर्णविषये वाग्विषये च दिङ्मात्रं मतं निर्दिष्य पुनस्तन्त्रागमधिया एतत्तत्त्वं किञ्चिद् विविच्यते।

## कामधेनुतन्त्रे वर्णमातृकाणां स्वरूपम्

कामधेनुतन्त्रे वर्णमातृकायाः प्रत्येकं च वर्णस्याद्भुतं माहात्म्यं वर्णितम्। वर्णरहस्यमज्ञात्वा यो हि जपमाचरति ध्यानधारणे योगसमाधिर्वाऽनुष्ठीयते तस्य सर्वं निष्फलं भवति। उक्तञ्च—

अज्ञात्वा मन्त्रतत्त्वानि महाविद्यां जपेत्तु यः।
सर्वं तस्य वृथा देवि किं तस्य जपपूजनैः॥

ध्यानावधारणे चैव तथा योगसमाधिना।
वर्णज्ञानं यदा नास्ति किं तस्य जपपूजनैः[३]॥ इति।

भगवतो महेश्वरस्य कण्ठे या पञ्चाशत्संख्याका अष्टोत्तरसंख्याका वा मुण्डमाला शोभते सा पञ्चाशद्वर्णमातृकारूपैव। वर्णानामेतत्समुदाय एव ज्ञानराशेः साम्बशिवस्य गौरवम्। एतदेव स्वारस्यं 'त्रिधा बद्धो वृषभो रोरवीति' इति ऋङ्मन्त्रे निरूपितम्। तन्त्रागमसिद्धान्ते वर्णा एव सर्वतत्त्वाधारभूताः सारभूताश्च निरूप्यन्ते। यथा हि —

मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम्।
नानावर्णयुतं शुद्धं तन्त्राणां सारमुत्तमम्[४]॥ इति।

पञ्चाशन्मातृका नानाविद्यामयी सती महाविद्यानामधेया ब्रह्माण्डजनिका भवति। सा चाकारादि क्षकारान्ता अनन्तकोटिब्रह्माण्डजननी ब्रह्मविष्णुरुद्रोत्पादिका सर्वजगतो बीजभूता शिवत्वेन शिवतत्त्वेऽवस्थिता भवति। यथा हि—

अकारादिक्षकारान्ता मातृका बीजरूपिणी॥

---

१. शत० ब्रा०—१०।५।४। २. ऋ० सं०—८।२।२३।
३. कामधेनुतन्त्रम्—१।४-५ श्लो० तन्त्रसंग्रहः, भाग–२। ४. कामधेनु तं०—१।६।

विसर्गश्चैव विन्दुश्च त्रिशक्तिर्ब्रह्मविग्रहः ।
वर्णात्तु जायते ब्रह्मा तथा विष्णुः प्रजायते ॥

रुद्रश्च जायते देवि जगत्संहारकारकः ।
मम कण्ठस्थिता या सा शारदावामलोचना ॥

तस्या गर्भस्थिता देवि बीजानि विविधानि च ।
विधृत्य कण्ठदेशे तु शिवोऽहं कमलानने[1] ॥ इत्युक्तम् ।

एवं हि तत्र अकारस्य स्वरूपनिरूपणमारभ्य क्षकारस्वरूपनिरूपणं यावत् द्वितीयपटलादारभ्य षष्ठपटलान्तं वर्णविषयकतत्त्वनिरूपणं तत्र द्रष्टव्यम् । एवं परं शिवो ब्रह्म वा यदा अक्षराज्जायते, तदा किं वहूक्तेनाक्षरमाहात्म्येनेवमुक्त्वा युवजानीं विश्वनाथं स्मरन् विरमामि ।

## निष्कर्षः

### महामहोपाध्यायनागेशोक्तमाहेश्वरसूत्रविवृत्तिः सर्वथा तन्त्रागमानुगामिनी

श्रीमद्भिर्नागोजिभट्टैर्महामहेश्वराचार्यनन्दिकेश्वरस्य चतुर्दशसूत्रविवृत्तिविषयिणी प्रक्रिया आद्रिता । शाकटायनोक्तस्य 'न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः' इत्यस्य ब्रह्मराशित्वेन माहेश्वरसूत्रप्रोक्ताक्षरसमाम्नायस्यैवाश्रयणेन नागेशोपाध्यायाः—'ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थः । तत्त्वञ्च नन्दिकेश्वरकृतकाशिकायां स्पष्टम् । अत एव वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्यः' इति भाष्योद्द्योते उक्तम्' इत्याहुः । एतेनोक्तेन नागेशभट्टस्य माहेश्वरसूत्रविवृत्तिविषये नन्दिकेश्वरोक्त मार्ग एव युक्तिसहः प्रतिभाति । नन्दिकेश्वरप्रोक्तव्याख्यानं न्यूनाधिक्येनात्रनिबन्धे पूर्वमेव मया निरूपितम् । इदं तु निःशंशयं यद् नन्दिकेश्वराचार्या आगमविद आसन् । यादृशी हि वर्णविवृत्तिविषयिणी प्रक्रिया तन्त्रागमे राद्धान्ते प्रचलति तादृशी एव नागेशेनाप्यनुष्ठितम् । अतो नागेशभट्टानां व्याकरणशास्त्रे दर्शनविषयकः सर्वो हि सिद्धान्तस्तन्त्रागमसिद्धानुसार्येवेति कथने न कश्चिदपि विसम्वादः । किञ्च, व्याकरणशास्त्रस्य कृते व्याकरणागम इत्यपि संज्ञा तत्र तत्रोल्लसति । तस्माद् व्याकरणस्यागमत्वं सुतरां सिद्ध्यति । आगमशब्दो

१. का० धे० त० १।९ तः १२ श्लोकाः ।

ह्यत्र शैव-शाक्तदर्शने रूढः। वेदाङ्गेषु मुख्यत्वाद् व्याकरणस्य सर्वोपयोगित्वेन सर्वोपकारित्वेन च महत्त्वं सर्वत्र स्वीक्रियते। अस्य शास्त्रस्य दार्शनिको हि सिद्धान्तः सर्वथा शैवागम-शाक्तागममनुसृत्य प्रवृत्तः। अतो महावैयाकरणनागेशभट्टानां तत्र दर्शने गतिः रुचिश्च कथन्न स्यात् ? एतेनैव कारणेनाद्यत्वे व्याकरणदर्शनस्य वैशिष्ट्यं सर्वैरेवाङ्गीक्रियते। अतो माहेश्वरसूत्रमूलकस्यास्य शास्त्रस्य माहेश्वरमूला दर्शनदृष्टिः कथन्न स्यादिति नागेशेन साधु एव प्रयतितमिति तत्त्वतो निवेद्य विद्वद्भ्यः प्रणम्य साम्बशिवाय कृतिरियं निवेद्य विरमामीति शम्।

# उपसंहारः

'उपसंह्रियते इत्युपसंहारः' इति धिया संक्षेपेणात्र ग्रन्थे उपनिबद्धानां विषयाणां क्रमेण संक्षेपेण च किञ्चित्तात्त्विकं विवरणं प्रस्तूयते। उपसंहारबुद्धया वक्ता (ग्रथिता) स्वाशयं व्यनक्ति। तत्परम्परानुरोधेनायमुपसंहारो ग्रन्थे निरूपितस्य विषयवस्तुन उपसंहारः सारतत्त्वेन निरूपितोऽत्र ज्ञेयः। तथा चायं प्रबन्धः प्रञ्च-स्कन्धात्मकः पञ्चाध्यायजुष्टः शिवस्येशानतत्पुरुषाघोरसद्योजातवामदेवमुखात्मकः। यथा हि शिवस्य पञ्चवक्त्रादहर्निशं ज्ञानं निःसरति तद्वदेवात्रापि पञ्चाध्यायेभ्यः सर्वतो नव नवं शिवतत्त्वमेव साधितं भवति।

तत्र प्रथमाध्याये वैदिकसंहिताभ्यः प्रारभ्योपनिषद्ब्राह्मणग्रन्थसूत्रग्रन्थादि-द्वारा शास्त्रीयदृष्टया सर्वत्र रुद्रतत्त्वं शिवतत्त्वं वा सम्यगालोडितम्। पुनश्च क्रमेण रामायणमहाभारताद्यार्षग्रन्थमनुसृत्य तस्मिन् काले शिवस्वरूपं समासतो निरूपितम्। अत्रैव प्रकरणे काव्येषु विशेषतः प्रतिनिधिरूपेण महाकविकालिदासा-दिकाव्येषु शैवं तत्त्वं पर्यालोचितम्। एवं संकेतपद्धत्या पुराणेष्वपि निरूपितं शिवतत्त्वं संक्षेपेण प्रदर्शितम्मया। तदनु नानाभिलेखोत्खननविवरणमाश्रित्यान्तः-साक्ष्यत्वेन शैवशाक्तप्रभावमाश्रित्य सर्वं याथातथ्येन निरूपितुं प्रयतितम्। एतदन्ते उत्तर-दक्षिण पूर्व-पश्चिमभेदेन देशविशेषभेदेन च शैवशाक्तसाधनपरम्परानुशीलनं यावदुपलब्धप्रमाणैः साधितम्। भेदोपभेदजुष्टानां साधनाचारादिपद्धतीनां विवेचनमत्र प्रकणे सर्वथा सुधीभिर्ग्राह्यं स्यादिति मनसि निधायैवैतत्प्रल्पितम्। दक्षिणभारते कश्मीरे च शैवागमस्य सार्वतोऽधिकं महत्त्वमासीदिति विचिन्त्य प्रकरणमेतन्मया साधुतया विमृष्टम्। भारतवर्षेण सहान्यबाह्यदेशेषु यथा नेपाल-चम्पा-यव-बालि-सुमात्रादिषु यथा यथा शैवागमस्य प्रभावो न्यपतत् तेन च यथा तत्र जीवनदर्शनं सम्वृतमिति तन्निखिलं तत्त्वजिज्ञासूनां सुधीनाञ्च सन्तोषाय निगदितमिति।

द्वितीयो ह्यध्यायः सृष्टिप्रक्रियापरः। दर्शनेषु सृष्टेस्तत्त्वज्ञानमेवादावु पदिष्टम्। सृष्टितत्त्वज्ञानपुरस्सरमेव परतत्त्वविवेचनं प्रारभ्यते। अतः परतत्त्व-ज्ञानाय सृष्टितत्त्वज्ञानमावश्यकम्। सृष्टिर्हि बैन्दवी सती शब्दमयी अर्थमयी च। शब्दार्थौ हि शिवशक्तिमयः। एतत्पक्षमाश्रित्य नागेशभट्टनिरूपितसृष्टितत्त्वमादाय नाना तन्त्रग्रन्थमनुसृत्य तत्तत्त्वं निरूपितम्।

नागेशभट्टः [स्वग्रन्थेषु वाक्यतुष्टयत्वं स्वीकृतवान्। एतत्प्रतीकमादाय तन्त्रागमशास्त्रवर्णितं वाक्चतुष्टयं विचेचितम्मया। तन्त्रागमे षट्चक्र-कुण्डलिनी-

नाडी-प्रभृतीनां निरूपणं वाक्चतुष्टयमुखेनैवोपपन्नम् । वाक्तत्त्वमेव शक्तिपदेनोपदिष्टम् । एतत्सर्वमपि तत्त्वजातमत्र तृतीयेऽध्याये मया प्रदर्शितम् ।

महावैयाकरणो नागेशभट्टः स्वमञ्जूषाग्रन्थे बौद्धार्थपदार्थं स्वातन्त्र्येण प्रदर्शितवान् । अत्र प्रकरणे नानाशास्त्रदृष्टचा बुद्धेः स्वरूपं विविच्य नागेशाभिमत-बौद्धपदार्थस्य तान्त्रिकत्वं स्वीकृतम् । तन्त्रागमे हि शिवोऽऽन्तरस्यैव भावस्य शक्त्या संवलितः सन् बहिः प्रकाशनं करोति । एतेनाहन्तेदन्तयोरत्र वर्णनं सम्यगुपपन्नम् ।

अवसानिके पञ्चमाध्याये माहेश्वरचतुर्दशसूत्रमनुसृत्य विषयेऽत्र नागेशभट्टाभिप्रायान् विज्ञाय तदनुकूलवर्णमातृकास्वरूपं शैव-शाक्तदर्शनोक्तन्निरूपितम् । वस्तुतस्तु प्रकरणमिदं चिन्तकानां कृते सुखावहं स्यादित्याधाय प्रयतितम्मया । वैयाकरणा हि तथैव शैवागमतत्त्वं जानीयुर्यथा च ज्ञातन्नागेशेनेति कृत्वा मया विचेष्टितमिदन्तत्त्वविदाम्मोदाय स्यादिति निवेद्य युवजानीं विश्वेश्वरं स्मरन् विरमामि ।

यस्योन्मेषनिमेषाभ्यां विश्वं स्फुरति शाश्वतम् ।
षडध्वरचिताकारं तं नमामि महेश्वरम् ॥

करुणालेशतो यस्यास्तत्त्वं वेत्ति विमूढधीः ।
सा शक्तिःसर्वमाच्छाद्य कृतिरेनां प्रसीदतु ॥

॥ इति शम् ॥

## परिशिष्टम्—१

# प्रबन्धे आनुपूर्वीकानि सहायकग्रन्थनामानि

ऋक्संहिता
वाजसनेयिसंहिता
इन दिस् पुटूडीन
वैदिक माइथालाजी
वैष्णविज्म इन शैविज्म
ओरिजनल संस्कृत टैक्स्ट्स
ऋग्वेदभूमिका
शुक्लयजुर्वेदसंहिता
कृष्णयजुर्वेदसंहिता
अथर्वसंहिता
यजुः संहिता
तैत्तिरीयसंहिता
शतपथब्राह्मणम्
तैत्तिरीयब्राह्मणम्
कौशीतकिब्राह्मणम्
ऐतरेयब्राह्मणम्
जैमिनीयब्राह्मणम्
बृहदारण्यकोपनिषद्
श्वेताश्वरोपनिषद्
शाङ्खायनश्रौतसूत्रम्
आश्वलायनश्रौतसूत्रम्
लाटचायनश्रौतसूत्रम्
बौधायनधर्मसूत्रम्
अमरकोशः
मेदिनीकोशः
स्वच्छन्दतन्त्रम्
वाक्यपदीयम्
ईश्वरप्रत्यभिज्ञाविवृतिः
रघुवंशमहाकाव्यम्
गुड्डीमल्लस्य लिङ्गमूर्तिः
केनोपनिषद्
मैत्रायणीयोपनिषद्
मानवगृह्यसूत्रम्
बोधायनगृह्यसूत्रम्
आश्वलायनगृह्यसूत्रम्
वाल्मीकिरामायणम्
महाभारतम्
हिन्दू आइकानोग्राफी
अग्निपुराणम्
लिङ्गपुराणम्
बुद्धचरितम्
विक्रमोर्वशीयम्
अभिज्ञानशाकुन्तलम्
मेघदूतम्
मृच्छकटिकम्
नाटचशास्त्रम् ( भरतसूत्रम् )
कैटलाग आफ़ साइन्स
सौन्दर्यलहरी
साङ्गलोईताम्रपात्रम्
दशकुमारचरितम्
कादम्बरी-कथामुखम्
हर्षचरितम्
ट्रूबनर ओरिएण्टल सीरीजः
लखमण्डलशिलालेखः
ओरिजन एण्ड अरली हिस्ट्री आफ
शैविज्म इन साउथ इण्डिया
ह्यूनसाङ्ग-यात्रासंस्मरणम्
निर्माण्ड—ताम्रपत्रम्

वैष्णविज्म शैविज्म एण्ड माइनर—
रिलीजन सिस्टम्स इन इण्डिया
एपिग्राफिका कर्णाटिका
नन्दिकेश्वरकाशिका
महाभाष्यम्
प्रदीपः—महाभाष्यटीका
उद्द्योतः—महाभाष्यटीका
माहेश्वरसूत्रम्
सारस्वतीसुषमा—सं० सं० वि० वि०
शोधपत्रिका
चोदिन्ह-शिलालेखः
माइसोन-शिलालेखः
माइसोन-पीठिकालेखः
ग्लाई-लामोव-शिलालेखः
वकुल-शिलालेखः
मन्द-शिलालेखः
क्वे-शिलालेखः
पो-नगरमन्दिरस्य-शिलालेखः
फाह्यान—यात्रासंस्मरणम्
सङ्घसियाङ्गकामहयनिकन
ष्टुटरहाइम—इण्डियन इन्फ्लुएन्स आन
वोल्ड बालिनीज् आर्ट
संस्कृत टैक्स्ट ऑफ् बाली
कूर्मपुराणम्
प्रपञ्चसारतन्त्रम्
श्रीतन्त्रालोकः
मातृकाचक्रविवेकः
विरूपाक्षपञ्चाशिका
वरिवस्यारहस्यम्
शारदातिलकम्
योगिनीहृदयम्
सङ्केतपद्धतिः
कामकलाविलासः
महानयप्रकाशः

शिवदृष्टिः
वैयाकरणसिद्धान्तलघुमञ्जूषा
तन्त्रसारः
मृगेन्द्रतन्त्रम्
ब्रह्मसूत्रम्—शाङ्करभाष्यम्
नादकारिका
वैयाकरणभूषणसारः
अष्टाध्यायी
ब्रह्मविद्योपनिषद्
वैयाकरणसिद्धान्तमञ्जूषा
वैयाकरणसिद्धान्तपरमलघुमञ्जूषा
तन्त्रसंग्रहः भाग—१
नित्याषोडशिकार्णवः
सौभाग्यसुधोदयः
पाणिनीयशिक्षा
लघुशब्देन्दुशेखरः
योगवाशिष्ठम्
भगवद्गीता
सांख्यसूत्रम्
सांख्यसारः
सांख्यकारिका
शवरभाष्यम्
योगसूत्रम्
छान्दोग्योपनिषद्
भामती
योगवार्तिकम्
विष्णुपुराणम्
न्यायदर्शनम्
तैत्तिरीयोपनिषद्
वेदान्तपरिभाषा
ईश्वरप्रत्यभिज्ञाहृदयम्
रुद्रयामलम्
नेत्रतन्त्रम्
शिवसूत्रवार्तिकम्

तन्त्रसद्भावः
शिवसूत्रविमर्शिनी
श्रीत्रिपुरसुन्दरीमहिम्नस्तोत्रम्
मन्त्र और मातृकाओं का रहस्य
मालिनीविजयोत्तरतन्त्रम्
पराप्रवेशिका
सिद्धान्तकौमुदी
वाचस्पत्यम् कोशः
चिद्गगनचन्द्रिका
तापानीयोपनिषद्
परात्रिंशिका
विश्वकोशः
महार्थमञ्जरी
सूतसंहिता
परिमलटीका
वातुलशुद्धाख्यतन्त्रम्
कङ्कालमालिनीतन्त्रम्
हैमकोश
मातृकानिघण्टुः
प्रकारान्तरमन्त्राभिधानम्
मातृकाविलासः
ऋगर्थदीपिका
कामधेनुतन्त्रम्

## परिशिष्टम्—२

## उद्धृतग्रन्थानां लघुशब्दसङ्केतः

| | |
|---|---|
| ऋक्संहिता | ऋ० सं० |
| वाजसनेयिसंहिता | वा० सं० |
| ऋग्वेदभूमिका | ऋ० भू० |
| शुक्लयजुर्वेदसंहिता | शु० य० सं० |
| कृष्णयजुर्वेदसंहिता | कृ० य० सं० |
| यजुः संहिता | य० सं० |
| तैत्तिरीयसंहिता | तै० सं० |
| शतपथब्राह्मणम् | श० ब्रा० |
| तैत्तिरीयब्राह्मणम् | तै० ब्रा० |
| कौशीतकिब्राह्मणम् | कौ० ब्रा० |
| ऐतरेयब्राह्मणम् | ऐ० ब्रा० |
| जैमिनीयब्राह्मणम् | जै० ब्रा० |
| बृहदारण्यकोपनिषद् | बृ० उ० |
| श्वेताश्वरोपनिषद् | श्वे० उ० |
| शाङ्खायनश्रौतसूत्रम् | शां० श्रौ० सू० |
| आश्वलायनश्रौतसूत्रम् | आ० श्रौ० सू० |
| लाट्यायनश्रौतसूत्रम् | ला० श्रौ० सू० |
| बौधायनधर्मसूत्रम् | बौ० ध० सू० |
| अमरकोशः | अ० को० |
| मेदिनीकोशः | मे० को० |
| स्वच्छन्दतन्त्रम् | स्व० त० |
| वाक्यपदीयम् | वा० प० |
| ईश्वरप्रत्यभिज्ञाविवृत्तिः | ई० प्र० वि० |
| रघुवंशमहाकाव्यम् | र० म० का० |
| केनोपनिषद् | के० उ० |
| मैत्रायणीयोपनिषद् | मै० उ० |
| मानवगृह्यसूत्रम् | मा० गृ० सू० |
| बोधायनगृह्यसूत्रम् | बो० गृ० सू० |
| आश्वलायनगृह्यसूत्रम् | आ० गृ० सू० |
| वाल्मीकिरामायणम् | वा० रा० |
| महाभारतम् | म० भा० |

| | |
|---|---|
| अग्निपुराणम् | अ० पु० |
| लिङ्गपुराणम् | लि० पु० |
| बुद्धचरितम् | बु० च० |
| विक्रमोर्वशीयम् | वि० उ० |
| मेघदूतम् | मे० दू० |
| मृच्छकटिकम् | मृ० क० |
| नाट्यशास्त्रम् | ना० शा० |
| सौन्दर्यलहरी | सौ० ल० |
| दशकुमारचरितम् | द० कु० च० |
| कादम्बरी-कथामुखम् | का० क० मु० |
| हर्षचरितम् | ह० च० |
| नन्दिकेश्वरकाशिका | न० का० |
| महाभाष्यम् | म० भा० |
| प्रदीपः —महाभाष्यटीका | प्र० म० भाष्य० टी० |
| उद्द्योतः—महाभाष्यटीका | उ० म० भाष्य० टी० |
| माहेश्वरसूत्रम् | मा० सू० |
| सारस्वतीसुषमा | सा० सु० |
| कूर्मपुराणम् | कू० पु० |
| प्रपञ्चसारतन्त्रम् | प्र० सा० त० |
| श्रीतन्त्रालोकः | श्रीत० लो० |
| मातृकाचक्रविवेकः | मा० च० वि० |
| विरूपाक्षपञ्चाशिका | वि० प० |
| वरिवस्यारहस्यम् | व० र० |
| शारदातिलकम् | शा० ति० |
| योगिनीहृदयम् | यो० हृ० |
| सङ्केतपद्धतिः | सं० प० |
| कामकलाविलासः | का० क० वि० |
| महानयप्रकाशः | म० न० प्र० |
| शिवदृष्टिः | शि० दृ० |
| वैयाकरणसिद्धान्तलघुमञ्जूषा | वै० सि० ल० म० |
| तन्त्रसारः | त० सा० |
| मृगेन्द्रतन्त्रम् | मृ० त० |
| ब्रह्मसूत्रम्-शाङ्करभाष्यम् | ब्र० शा० भा० |
| नादकारिका | ना० का० |

| | |
|---|---|
| वैयाकरणभूषणसारः | वै० भू० सा० |
| अष्टाध्यायी | अ० ध्या० |
| ब्रह्मविद्योपनिषद् | ब्र० वि० उ० |
| वैयाकरणसिद्धान्तपञ्जूषा | वै० सि० म० |
| वैयाकरणसिद्धान्तलघुमञ्जूषा | वैं० सि० ल० म० |
| तन्त्रसङ्ग्रहः | त० सं० |
| नित्याषोडशिकार्णवः | नि० षो० |
| सौभाग्यसुधोदयः | सौ० सु० |
| पाणिनीयशिक्षा | पा० शि० |
| लघुशब्देन्दुशेखरः | ल० श० शे० |
| योगवाशिष्ठम् | यो० वा० |
| भगवद्गीता | भ० गी० |
| सांख्यसूत्रम् | सां० सू० |
| सांख्यसारः | सां० सा० |
| सांख्यकारिका | सां० का० |
| शबरभाष्यम् | श० भा० |
| योगसूत्रम् | यो० सू० |
| छान्दोग्योपनिषद् | छा० उ० |
| योगवार्तिकम् | यो० वा० |
| विष्णुपुराणम् | वि० पु० |
| न्यायदर्शनम् | न्या० द० |
| तैत्तिरीयोपनिषद् | तै० उ० |
| वेदान्तपरिभाषा | वे० प० |
| ईश्वरप्रत्यभिज्ञाहृदयम् | ई० प्र० हृ० |
| रुद्रयामलम् | रु० या० |
| नेत्रतन्त्रम् | ने० त० |
| शिवसूत्रवार्तिकम् | शि० सू० वा० |
| तन्त्रसद्भावः | त० स० |
| शिवसूत्रविमर्शिनी | शि० सू० वि० |
| श्रीत्रिपुरसुन्दरीमहिम्नस्तोत्रम् | श्रीत्रि० सु० म० स्तो० |
| मन्त्र और मातृकाओं का रहस्य | म० औ० मा० र० |
| मालिनीविजयोत्तरतन्त्रम् | मा० वि० त० |
| पराप्रवेशिका | प० प्र० |
| सिद्धान्तकौमुदी | सि० कौ० |

| | |
|---|---|
| वाचस्पत्यम्-कोशः | वा० को० |
| चिद्गगनचन्द्रिका | चि० ग० च० |
| तापनीयोपनिषद् | ता० उ० |
| परात्रिंशिका | परा० त्रिं० |
| विश्वकोशः | वि० को० |
| महार्थमञ्जरी | म० मं० |
| सूतसंहिता | सू० सं० |
| परिमलटीका | परि० टी० |
| वातुलशुद्धाख्यतन्त्रम् | वा० शु० त० |
| कङ्कालमालिनीतन्त्रम् | क० मा० त० |
| हैमकोशः | है० को० |
| मातृकानिघण्टुः | मा० नि० |
| प्रकारान्तरमन्त्राभिधानम् | प्र० म० अ० |
| मातृकाविलासः | मा० वि० |
| ऋगर्थदीपिका | ऋ० दी० |
| कामधेनुतन्त्रम् | का० धे० त० |

# शुद्धिपत्रम्

## उपोद्घातभागे

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १ | १३ | स्वधुनी | स्वर्धुनी |
| ६ | ११ | विद्वत्कुमौलिमणिः | विद्वत्कुलमौलिमणिः |
| ६ | १६ | आसदियं | आसीदियं |
| ६ | २२ | मनिषिणः | मनीषिणः |
| ६ | २३ | चारितार्थयन्तः | चरितार्थयन्तः |
| ७ | ८ | इत्याभिधानं | इत्यभिधानं |
| ७ | १४ | तदानीन्तं | तदानीन्तन |
| १२ | ३१ | धनाजनाय | धनार्जनाय |
| १५ | २४ | विचारेष | विचारेषु |
| १८ | २ | भागवतो | भगवतो |
| २२ | १७ | पदभाजा | पदभाजः |
| २३ | ३ | शास्त्रैकर्मज्ञो | शास्त्रैकमर्मज्ञो |

## ग्रन्थभागे

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १ | ११ | स्वानाम | स्वनाम |
| ११ | २१ | महोदो | महोदयो |
| ११ | १५ | भयमानमन्ति | भयमामनन्ति |
| १३ | ८ | संपन्नम् | संपन्ना |
| १६ | १५ | सर्वैरैतिह्यविदः | सर्वे ऐतिह्यविदः |
| १६ | २० | प्रचलित | प्रचलितम् |
| १७ | २० | नियन्तृतश्च | नियन्त्रितश्च |
| २१ | १५ | चतुर्थ्या | चतुर्थ्यां |
| २१ | २८ | मूर्तिनां | मूर्तीनां |
| २२ | १५ | विष्णवोः | विष्ण्वोः |
| ३१ | ३ | अस्त्युतिरस्यां | अस्त्युत्तरस्यां |

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ३४ | २ | प्रकल्पनीयम् | प्रकल्पनीया |
| ३४ | २२ | वाह्याचारा | बाह्याचारा |
| ३८ | १८ | वाह्यरूपेण | बाह्यरूपेण |
| ४२ | ४ | पाशुपात | पाशुपत |
| ४३ | १० | आसआसन्ति | आसन्निति |
| ४३ | ३१ | धारन्ति | धारयन्ति |
| ४७ | २० | आवश्यके न | आवश्यकेन |
| ४७ | २८ | वैशिष्टयम् | वैशिष्टचम् |
| ४७ | ३१ | हितस्य | हि तस्य |
| ५० | २९ | गुरुरासीति | गुरुरासीदिति |
| ५१ | १ | दार्शनि | दार्शनिक |
| ५१ | १४ | प्रभाव | प्रभावः |
| ५३ | २५ | एवयमेव | एवमेव |
| ५४ | २२ | तद | तद् |
| ५५ | २४ | मनुस्सृति- | मनुस्मृति– |
| ५७ | ८ | तथैवागन्तव्यम् | तथैवावगन्तव्यम् |
| ५८ | २१ | शतस्य | शतकस्य |
| ६० | २६ | धर्मस्यानरूपं | धर्मस्यानुरूपं |
| ६५ | २ | सप्राप्ते | सम्प्राप्ते |
| ६५ | ७ | चतुर्यंग | चतुर्युग |
| ७२ | २० | सकुद्रूपः | संकुचद्रूपः |
| ७७ | १३ | व्यवतिठेतेत्यर्थः | व्यवतिष्ठेतेत्यर्थः |
| ७९ | १९ | उत्कण्ठामुच्यते | उत्कष्ठायामुच्यते |
| ८१ | १८ | आश्रिय | आश्रित्य |
| ८१ | २४ | प्राञ्चरात्रेऽपि | पाञ्चरात्रेऽपि |
| ९३ | ३० | आकारः | अकारः |
| ९५ | १७ | तत्र | स्तत्र |
| ९८ | ५ | यनुर्यस्य | तनुर्यस्य |
| ९८ | २१ | सर्वं | सर्वं |
| १०१ | २६ | वाह्यार्थ | बाह्यार्थं |
| १०२ | १७ | पूर्वं | पूर्वं |
| १०७ | १७ | वृषभो | वृषभो |

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ११० | ३२ | १११,११२ | १०८,१०९ |
| ११६ | १४ | बोजनक | बोधजनक |
| ११६ | २६ | गुणामप्यसौ | गुणानामप्यसौ |
| ११७ | २० | मअनादित्वञ्च | मनादित्वञ्च |
| १२५ | ६ | दिवौक्सः | दिवौकसः |
| १२५ | १३ | कर्तु | कर्तुं |
| १२६ | ४ | सर्व | सर्वं |
| १२६ | २४ | बैद्धपदार्थ | बौद्धपदार्थ |
| १२७ | ३२ | बौद्धपदार्थस्म | बौद्धपदार्थस्य |
| १३१ | १६ | विषययान् | विषयान् |
| १३३ | ३ | जन्मेति | जन्म इति |
| १३६ | १ | शब्देर्नैव | शब्दैर्नैव |
| १३७ | ११ | वर्णानि | वर्णा |
| १३७ | १२ | पुञ्जानि | पुञ्जभूता |
| १४३ | १५ | कल्पतया | कल्पनया |
| १५६ | ११ | विसर्शनाद | विमर्शनाद् |
| १५६ | २० | चकम् | चक्रम् |
| १६१ | १ | धटनेन | र्धटनेन |
| १६२ | १० | रौद्रचाम्बिका | रौद्रचम्बिका |
| १६४ | ११ | सतम् | सततम् |
| १६५ | ४ | स्तूयमातया | स्तूयमानया |
| १६६ | १० | विसृज्थते | विसृज्यते |
| १७० | १९ | बह्यप्रयत्ना | बाह्यप्रयत्ना |
| १७१ | ११ | पचाद्यच | पचाद्यच् |
| १७३ | ९ | अवाप्नुयुरिति | अवाप्नुवन्निति |
| १७३ | १४ | पूर्णश्वायं | पूर्णश्चायं |
| १७७ | २४ | शिक्तिशिवाभ्यां | शक्तिशिवाभ्यां |
| १७९ | १० | पुल्लिङ्गः | पुल्लिङ्गाः |
| १८० | ८ | अकास्यैव | अकारस्यैव |
| १८१ | २५ | प्रायुर्यात् | प्राचुर्यात् |
| १८२ | ६ | मूलाधारादि | मूलाधारादि |
| १८२ | १७ | एकपश्चशत | एकपञ्चाशत् |

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १८३ | २५ | धातोशौणादिक: | धातोरौणादिक: |
| १८३ | २८ | अभिप्रेतत्चात् | अभिप्रेतत्वात् |
| १८८ | ११ | निगुण: | निर्गुण: |
| १८८ | २६ | नन्किेश | नन्दिकेश |
| १९१ | १७ | वितन्वन् | वितन्वता |
| १९१ | २४ | विभ्यतां | विभ्यतां |
| १९४ | ७ | विद्वद्भ्य: | विदुष: |
| १९५ | १९ | सार्वतो | सर्वतो |

